Tanjore Sarasvati Mahal Series No. 163

# PHALAVATĪ

(A Vṛtti on Jaimini's Purvamimamsa Sutras)

EDITED BY

Navalpakkam S. DEVANATHACHARIAR,

*Retired Sanskrit Pandit,*

*Sarasvati Mahal Library, Thanjavur.*



PUBLISHED BY

Vidwan A. VADIVELAN,

*Honorary Secretary,*

FOR THE ADMINISTRATIVE COMMITTEE,

T. M. S. S. M. LIBRARY, THANJAVUR.

Saka 1900] [A. D. 1978

तञ्जपुरी सरस्वतीमहालय ग्रन्थमाला संख्या - १६३

# फलवती

## ( जैमिनीयसूत्रवृत्तिः )

नावल्पाक्कं - श्री॰ देवनाथाचार्यैः

संशोधिता



तञ्जपुरी सरस्वतीमहाल् ग्रन्थालयस्य निर्वाहकसमित्याः

अवैतनिककार्यदर्शिना

विद्वान् अ. वडिवेलन् महाशयेन

प्रकाशिता ।

शकाब्दाः १९०० ]  [ क्रिस्त्वब्दाः १९७८

भारत समष्टि राष्ट्रमन्त्रिमण्डलेन अपूर्वमातृका ग्रन्थानां प्रकाशनार्थं विश्राणितेन वित्तोपकारेण मुद्राप्य प्रकाशितोऽयं ग्रन्थः ।

मूल्यम् रू. ३६-००

श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रणालये मुद्रितः ।

# CONTENTS





## Publisher's Preface

It is quite evident that the Sarasvati Mahal Library is a rich collection of rare and unique manuscripts in Oriental languages-mostly in Sanskrit. This work Jaiminiya sutravritti known as Phalavati comes under the group of unique and single manuscript series of this Library. It is unique perhaps the world also because it has not been published till now.

This is a work dealing with Mimamsa Sutras. Mimamsa means "a reverent study leading to a scientific quest of Truth" and it was this search after Truth, leading to the solution of the great problem of life, that engaged the attention of the ancients in the past. The word Mimamsa means "profound thought or reflection". The word is derived from the root "man", which means ' to think, know, understand". It is from this word that we get the word mansa or mind.

It has been divided into two classes (i.e.) Purva Mimamsa and Uttara Mimamsa. Though both have as their main thesis the elucidation of the philosophy of the Vedas they differ in this that the former restricts itself to the philosophy of ritualism whereas the latter confines itself to the philosophy of the soul. The six systems of philosophy are Sankhya, Nyaya, Vaiseshika, Mimamsa, Yoga and Vedanta. The Mimamsa occupies a most important place, not only among the six systems of Hindu philosophy but all ancient and sacred literature.

The Sage Jaimini systematised the principles of Purva-mimamsa and gave them a definite shape in the form of the extent sutras distributed over 12 chapters. This becomes clear only when the sutras are interprated in their proper

perspective and not with a particular bias or pre-possession. Indeed it is this predilection of critics and commentators during several centuries in the past that has led the reader astray from the simple and direct treatment of their subject matter, and has caused so much confusion about their character.

This work is incomplete in form. The author of this Vritti on the sutras of Jaimini is not known. That he may be Upavarsa is the fond hope of Dr. A. C. Burnell, the German scholar in Sanskrit, who classified and indexed the Tanjore Palace Sanskrit manuscripts in three volumes in the year 1879.

We thank the learned editor and formerly Sanskrit Pandit of our Library Thiru N. S. Devanathachariar, Siromani, for the great pains taken by him in shaping this volume into a useful edition for the benefit of scholars. His method of approach for shaping this very old brittle manuscript into a beautiful edition is highly commendable. We are thankful to our Assistant Librarian Thiru M. Seeralan, B. A., who has spared on pains in the release of this work. Our thanks are due to Messrs. Sri Vani Vilas Syndicate Limited, Srirangam, for their neat execution of the printing work.

The Government of India came forward to meet full editorial remuneration and half of the remaining expenses in publishing this rare manuscript. On this encouragement the Library came forward with enthusiasm for publishing this manuscript. This encouragement was really very useful to this Library. We pay our humble thanks for this great help to the Government of India.

Thanjavur,
18—6—1978.

**A. VADIVELAN,**
*Honorary Secretary.*

श्रीः

# उपोद्घातः

नमो जैमिनये येन न्यायवेश्म प्रभासिभिः ।
न्यायरत्नैस्समुत्कीर्णैर्ज्वलद्भिरिव भास्यते ॥

गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे ।
वृणीमहे च तत्राद्यौ दम्पती जगतां पती ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

वेदान्तलक्ष्मणमुनेः प्राप्तवेदान्तसंपदे ।
श्रीमते चतुराम्नाय नृसिंहगुरवे नमः ॥

इयं फलवतीनाम्नी जैमिनिसूत्रवृत्तिः मीमांसारसास्वादचणानां विदुषां पुरस्तादुपस्थाप्यते । तञ्जावूर् सरस्वतीमहाल् मातृकालये बहुसहस्रसंख्याताः मातृकाः– तालपत्रमय्यः– कागजमय्यश्च– चिराय सश्रद्धं परिपाल्यमाना- विराजन्ते । तासामन्यतमैवेयं मातृका । अस्याः सरस्वती महाल् साङ्केतिकाङ्कः– B 9594/D 6805– इति। अत्रत्यं B. इतीदमक्षरं च, "Burnell's Catalogue" इत्यस्य पदद्वयस्य सूचकम् । D. इतीदमक्षरञ्च "Discriptive Catalogue of Sanskrit Manuscripts" इत्यस्य सूचकम् । सरस्वतीमहाल् मातृकाः, इतः शतसंवत्सरेभ्यः पूर्वमेव[1] Dr. A. C. Burnell इति सुप्रसिद्धेन शर्मण्यदेशाभिजनेन "सूचीपत्र" संपादनेन सुरक्षिता अभूवन् । तदनन्तरञ्च पुनरपि "P. P. S. Sastri" इति सुगृहीतनाम्ना विदुषा सविशेषं[2] सूचीपत्रान्तरं संपादितं सरस्वती महाल् मातृकाणाम् । इदमुभयं गाढांधतमसदीपस्तम्भायते मातृकास्वरूपपरिज्ञानैषिणां अन्तर्वाणिजनानाम् । अनयोरुभयोरपि सूचीपत्रयोरस्या- मातृकायाः अङ्कसङ्केत एवायं B. 9594/D. 6805 इति ।

---

1. Dr. ARTHUR COKE BURNELL. A. D. 1840-1882.

2. Descriptive Catalogue of Sanskrit Manuscripts (A. D. 1928 to 1934).

तालपत्रमयी मातृकेयम् । अस्यां पूर्वमीमांसासूत्राणां सरलतरा वृत्तिः लिखिता वर्तते । महर्षिणा भगवता जैमिनिना प्रणीतानां पूर्वमीमांसासूत्राणां ईदृशी लघ्वी वृत्तिग्रन्थात्मिका व्याख्या आवश्यकी उपयुक्ततरा च । शबरस्वामिविरचितं भाष्यमत्यद्भुतं वरीवर्त्येव यथावस्थितसूत्रार्थनिर्णयोपयुक्तम् । तदनुसारीणि भट्टकुमारिलवार्तिकप्रभृतीनि व्याख्यानानि च देदीप्यन्तेतराम् । परन्तु तानि सर्वाण्येव विस्तृतानि प्रौढानि च सन्ति, मितप्रज्ञानां सौत्रपदार्थावगमे न तथा उपकुर्वन्ति । सौत्राणि च पदानि, चिरन्तनत्वात् अद्यतनानां व्यावहारिकं संप्रदायमतिलङ्घ्य स्वकल्पितमार्गेण विवक्षितनिरूपणे प्रवर्तन्ते । तस्मात् भाष्यादिग्रन्थपरिशीलनेन सूत्राणामर्थं सम्यगवबुद्ध्य अर्वाचीनानामपि नातिक्लेशेन स्पष्टतरं तेषामर्थं प्रकाशयन्ती काचित् संक्षिप्ता वृत्तिरत्यन्तमपेक्षिताऽत्र । इमं विषयं सम्यगनुसंहितवानयं 'फलवती' ग्रन्थकारः अन्वर्थनाम्नीं इमां वृत्तिं निर्माय चिरानुवृत्तं व्युत्पित्सूनां क्लेशं परिममार्ज ॥

जैमिनिसूत्राणां अन्या अन्या वृत्तयो नैव नाभुवन् । शाबरभाष्ये "[1]वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयाञ्चकार "तस्य निमित्तपरीष्टि" रित्येवमादिम्" इति तस्मादपि प्राक्तनं वृत्तिकारं निर्दिश्यमानमवगच्छामः । तथा तत्रैव "[2]अथ गौरित्यत्र कःशब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः" इति उपवर्षनाम्नो वृत्तिकारस्य निर्देशं प्रत्यक्षयामः । इत्थं शबरस्वामिनापि सबहुमानं संकीर्त्यमानो "वृत्तिकारः" "उपवर्ष"श्च न परस्परं भिद्येते । किन्तु एकस्यैव इत्थं सामान्यतो विशेषतश्च निर्देशः तत्रभवता शबरस्वामिना क्रियत इति युक्तमुत्पश्यामः । भगवद्बादरायणविरचित ब्रह्मसूत्रभाष्यग्रन्थेषु च वृत्तिकारस्य निर्देशः समुपलभ्यते । [3]"भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्सञ्चिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" इति; [4]"तदाह वृत्तिकारः; "वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषेति"। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यं, "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति" इत्यादिना स-

१ पू. मी. भाष्यं ५     २ पू. मी. भाष्यं ५

३ श्रीभाष्यं १-१-१     ४ श्रीभाष्यं १-१-१

बहुमानं निर्दिश्यमानो 'वृत्तिकारः' नास्मादुपवर्षादन्यो भवितुमर्हति । अतः—उपवर्षः, बोधायनः, वृत्तिकारः—इति तत्रतत्र निर्दिश्यमानोऽयं एक एवेति निर्णेतुं क्षमम् । इयं महर्षिप्रणीता वृत्तिः पूर्वोत्तरमीमांसाव्यापिनी—श्रीभगवद्रामानुजाचार्यैः श्रीशङ्करभगवत्पादैः शबरस्वामिना अन्यैश्च तदानीन्तनैः अध्यक्षिता हन्त! पश्चात्तनानां विदुषां मन्दभाग्यतया कीर्तिशेषा बभूवेति महदेवेदं विषादस्थानम् । मीमांसासुधास्वादरसिकानां विदुषामद्यापि स्वसंवेद्यतया वरीवर्त्येवाभिलाषोऽयम्—'अस्मदीयभारतपुण्यभूमौ विस्तीर्णायां क्वापि कोणे कदाचित् इयं वृत्तिः लभ्येत' इति ॥

इतः शतसंवत्सरेभ्यः पूर्वमेव इमां पुण्यभूमिं विहाय दिवं गतः Dr. A. C. Burnell इति सुगृहीतनामधेयः शर्मण्यदेशाभिजनो महानुभावः । A. D 1840 तमे क्रैस्तवाब्दे अस्य जन्म । A D. 1882 तमे क्रैस्तवाब्दे निर्याणम् । द्विचत्वारिंशन्मात्रपरिमिते स्वजीवितकाले अयं विलक्षणमेधातिशयात् स्वदेशे विद्याभ्यासं पूरयित्वा अस्मदीयं भारतदेशं प्राप्य उत्तमे प्राड्विवाकपदे प्रतिष्ठापितोऽभूत् । तञ्जापुरे उद्योगवशात् कृतसन्निधानोऽयं राजकीयशासनानुरोधेन सरस्वतीमहाल् मातृकालये विद्यमानानां मातृकाणां सूचीपत्रं सङ्कलयांबभूव । संपुटत्रयात्मकमिदं सूचीपत्रं तत्तन्मातृका अधिकृत्य निपुणतरं निरूपणं करोति । अस्या जैमिनिसूत्रवृत्तेः फलवत्याः निरूपणावसरे यदेव तत्र विलिखितं विराजते—तदेव विना विपरिणामं अत्र विलिख्यते रसिकानां विदुषामामोदाय :—

(Burnell's catalogue Vol. No. II page 82).

*(True copy)*

C. Phalavatee a vritti to the Jaimini Sutra. The author's name does not appear.

1–9594. Gr. [1]11, 97-246. A few 11 are missing, but as most of the 11 have the numbers broken off, and are much

1 अस्मिन् सूचीपत्रे 11 इति निर्देशः 'तालपत्र' सूचकः, gr. इति सङ्केतश्च 'ग्रन्थाक्षरमयः' इत्यस्य सूचकः ।

injured, it would take a very minute examination to decide which are lost. This [1] Mss. contains [2] a-VI-X-4. Can this be the Vritti of Upavarsha ? (HALL P. 169).

*N. B.*-HALL–इति सूचीपत्रविशेषस्य संकेतः । तद्यथा–

A contribution towards an index to the Bibliography of the Indian Philosophical systems by F. HALL. L. L. D 8. Vo. Culcutta-1859.

इमा एव पङ्क्तयः Burnell's सूचीपत्रे इमां मातृकामधिकृत्य लिखिताः । सूचीपत्रनिरीक्षणपरिचयवतां अत्र प्रतिपाद्यमानो विषयः स्पष्टतरं विज्ञातो भवेत । अन्येषां कृते आसां पङ्क्तीनां तात्पर्यं संक्षिप्यते :–

'फलवती' नाम्नी इयं क्वापि जैमिनिसूत्रवृत्तिः तालपत्रात्मिका । ग्रन्थकर्तुः नाम नोपलभ्यते । ९५९४ इत्यस्याः अङ्कसङ्केतः । ग्रन्थाक्षरमयी इयं मातृका । आद्यन्तहीनायामस्यां मातृकायां ९७ तमादारभ्य २४६ तमं यावत् पत्राणि विद्यन्ते । मध्ये कतिचन पत्राणि लुप्तानि । विद्यमानेष्वपि पत्रेषु भूयांसि पत्राणि (पार्श्वद्वयहीनत्वात्) [3] 'संख्या' रहितानि, अतीव शिथिलानि च वर्तन्ते । लुप्तानां पत्राणां तत्त्वेन समुद्धृत्य परिज्ञान निपुणतरनिरीक्षणेनैव साध्यं क्लेशावहश्च भवति । अस्यां मातृकायां षष्ठाध्यायादारभ्य दशमाध्यायस्य चतुर्थपादपर्यन्तो भागः वर्तते इयं वृत्तिः उपवर्षविरचिता स्याद्वा? HALL (हाल्) L. L. D 8 Vo कल्कत्ता. 1859 ,,

---

1 MSS. इति संकेतः 'मातृका' इत्यर्थवोधकस्य 'Manuscripts' इति पदस्य स्मारकः ।

2 A. VI. X. 4. इतीदं षष्ठाध्यायादारभ्य दशमाध्यायस्य चतुर्थपादपर्यन्तो ग्रन्थसंदर्भः अस्यां मातृकायां वर्तते इत्यर्थस्य सूचकम् ।

3 तालपत्रेषु पत्राणां संख्या प्रतिपत्रं वामभागे लिख्यते । अयं चिरानुवृत्तः संप्रदायः । अस्यां मातृकायां तादृशस्य पत्रभागस्य भग्ननष्टत्वात् पत्राणां संख्यापरिज्ञानं दुस्साधमित्यर्थः ।

अत्र अन्ते विद्यमाना पङ्क्तिः अवधेया रसिकतल्लजैः । भगवता उपवर्षेण विरचिता श्रुतिपथमात्रगोचरा या वृत्तिः सैवेयं भवति चेत् अमन्द एवानन्दः स्यात्समेषां विद्वज्जनानाम् । अस्याश्च वृत्तेरियदवधि लोके अलब्ध-प्रचारत्वात्, मातृकाया अतिचिरन्तनत्वात्, सरस्वतीमहाल् ग्रन्थालयस्य च अपूर्वनानामातृकापरिपालनस्वाभाव्यात्, विद्वद्गोष्ठ्याश्चैतद्वृत्तिग्रन्थविषये नित्य-सापेक्षत्वात्, 'पूर्वमीमांसासूत्रवृत्तिः' इत्येतावद्दर्शनमात्रेण ईदृशी संभावना प्रसरं लभेतैव । सैव बर्नल् महाशयस्यापि हृदये समुन्मिमेष । शाकुन्तलनाटके 'वत्स ! शकुन्तलावण्यं पश्य' इत्युक्तो भरतः, झटिति स्वमातुश्शकुन्तलाया निर्देशमवगच्छतिस्म । शकुन्तस्य लावण्यं – शकुन्तलावण्यं इति वक्तृतात्पर्य-परिस्थितिं मातृवत्सलोऽयं शिशुर्न संप्रधारयतिस्म । 'कहिं मे अज्जू ?' इति पृच्छन् सर्वतः दृष्टिं चालयतिस्म । तादृश्येव चित्तवृत्तिरत्रापि विद्वद्वरेण्यानाम् । शबरस्वामि-शङ्करभगवत्पाद-भगवद्रामानुजप्रभृतिभिरर्वाचीनैस्तत्रतत्रोदाह्रियमाणाः उपवर्षीयवृत्तेः पङ्क्तयः तथा हृदयमावर्जयन्ति । तेनैव हेतुना 'नष्टगजो घटान्तर्हस्तं प्रवेश्यान्विष्यति' इति न्यायेन ईदृशी संभावना समुदपद्यत ॥

ग्रन्थस्यान्तः प्रविश्य निपुणतरपरिशीलनेन अत्र निर्णयः कर्तव्योऽभूत् तदानीम् । तादृशावकाशालाभात् अयं प्रश्नः समुचितमुत्तरमप्राप्यैवानुववृते चिराय । पश्चात् श्री पि. पि. एस्. शास्त्रिभिः संपादिते सूचीपत्रे अयं संशयो-ऽपगतः । 'संप्रति संदेहनिर्णयो जातः' । इयमुपवर्षविरचिता वृत्तिर्न' इति स्पष्टीकृतमनेन । तत्रत्या अपि पङ्क्तयो विदुषां पुरस्तादुपस्थाप्यन्ते —

(A Descriptive Catalogue of Sanskrit Manuscripts in Tanjore Maharaja Serfoji, Saraswathi Mahal Library. Vol.-12. Page-5023.

*(True copy)*

जैमिनीय सूत्रवृत्तिः– फलवती

6805. Jaiminiya Sūtra Vṛttiḥ–Phalavati.

Burnell's Catalogue No. 9594, Page-82. Left column, Substance-Palm leaf. Size $13\frac{1}{2} \times 1\frac{1}{2}$ inches. Leaves-160,

(97-246) Lines 10 to 14 to a page. Script Grantha. No. of granthas 4750. Author? Incomplete. Not printed,

Beginning :-

प्रयोजनत्वं त्वनुष्ठान रूपं अनियमनियमाभ्यां व्याख्याति ॥ ७ ॥ तथा सोमविकारो ... मा स्यात । सोमविकारेषु गवादिष्वेकाहेषु सन्देहः— दर्शपूर्णमामाभ्यां प्राक् ... प्रयोक्तव्या । उतोर्ध्वमेवेति । सोमविकारो वा ...... मासाभ्यां ऊर्ध्वमेव स्यात् । यथा दर्शपूर्णमासोत्तरकालं सोमस्यानुष्ठानम् । तथा दिनप्राक् दर्शपूर्णमासाभ्यां वैकृतानुष्ठानम् । तथा हि कस्मात् । आर्थिकश्च ... न प्रविशतीत्युक्तम् । दर्शपूर्णमासोत्तरकालता तु शाब्दी । सैव चोरके श्रुति (?) दृश्यत इत्यर्थः । प्रयोजनत्वं त्वनुष्ठानरूपं प्राग्वत् पक्षयोः स्पष्टम् । इति जैमिनीयसूत्रवृत्तौ फलवत्यां पञ्चमस्याध्यायस्य चतुर्थः पादः ।

End :-

समानदेवताकवाक्यं स्याद्वा विभक्तत्वात ... ... ... ... ... ... ... ... ... रथन्तरस्त्रयोन्युत्तरयोर्गाने च गत्या विभक्तत्वादेकदेवताक ... ... ष्वन्तरस्वरूपाख्यस्याविभा ... ... स्त्रयोन्युत्तरयोरेव स्यात् । नान्यथा । प्राकृतोस्तया गाने तु देवतासाम्यस्य च्छन्दः— साम्यस्य चाभावान्न प्रकृति ... ... । प्रयोजनन्त्वनुष्ठानरूपं कोटिभ्यां प्रद्योतितम् । ... ... श्री ... ग्रहाणां देवतान्यत्वे ... स्यात् । द्वितीयाध्यायोक्तस्तुतशस्त्राधिकरणप्रयोजनकथनपरमिदं सूत्रम् । स्तुतश ...

Colophon–Leaf No. 225 —

इति जैमिनीयसूत्रवृत्तौ फलवत्यां दशमाध्यायस्य द्वितीयः पादः ॥

Subject :- Jaiminiya Sūtra Vṛitti— Known as 'Phalavatt'.

**Remarks :-The [1] MSS is in decaying condition. There is a transcription copy of this MSS in this Library.**

---

1 MSS- इतीमान्यक्षराणि " Manuscripts " इत्यस्य सूचकानि । अयमत्र सङ्केतः ।

[1] T. V. No. 78-A and 78-B.

This manuscript begins with the closing portion of the 4th pāda of the 5th Adhyāya and runs upto half of the 10th Adhyāya.

The author of this Vṛtti is not known. That he may be "Upavarsha" is only the fond but futile hope of Dr. Burnell.

इति ।

अस्याप्यर्थोऽनूद्यते:—

'फलवती'नाम्नी जैमिनिसूत्रवृत्तिरियम् । इयं मातृका विनश्यदवस्था वर्तते। अस्या मातृकायाः प्रत्यादर्शः संपादितो वर्ततेऽस्मिन्मातृकालये । तस्याङ्कसङ्केतः 78. A ; 78. B. इति (पुस्तकद्वयात्मकोऽयं प्रत्यादर्शः)

[2]इयं मातृका, पञ्चमाध्यायस्य चतुर्थपादस्य अवसाने उपक्रमते । दशमाध्यायस्य मध्ये विश्राम्यति । अस्या वृत्तेः कर्ता क इति न ज्ञायते । सः 'उपवर्षः' स्याद्वा ? इति बर्नल महाशयस्य उल्लेखः आशातिशयमूलकः निरर्थकविश्वासफलम्' इति ।

'अध्वरमीमांसाकुतूहलवृत्तिः' इति नाम्ना प्रथिता जैमिनिसूत्रवृत्तिरपि 'कतिचिदेव पदानि गत्वा' विश्राम्यति । अतो न तयापि सौत्रपदार्थावबोधैषिणां तावानुपयोगः । विस्तृता चेयं वृत्तिः, स्वतन्त्रविचारबहुला च सती संक्षेपरुचीनां व्युत्पित्सूनां नातीवोपकरोति ॥

महीशूरराजसंस्थानविदुषा श्री. उ. वे. कस्तूरि. रङ्गाचार्येण विरचिता, महीशूरपुर एव मुद्रापिता च 'सारबोधिनी' नाम्नी जैमिनिसूत्रवृत्तिः व्युत्पित्सूनामत्यन्तोपकारिणी संक्षिप्ता प्रौढगम्भीरा सौत्राणां पदानां अर्थं सुस्पष्टमवगमयत्येव । परन्तु निवीतान्ते भागे इयं विश्राम्यति ॥

---

1 T. V. "Transcribed Volume" इत्यस्य सङ्केतः ।

2 पूर्वं अध्यायपञ्चकं पश्चात् सार्धमध्यायद्वयञ्च लुप्तमद्य नोपलभ्यते । अतः अनाद्यन्तेयं मातृका ।

'सुबोधिनी' नाम्नी काचन वृत्तिः आदितः आन्तं जैमिनिसूत्राणां अर्थविवरणक्षमा मुद्रापिता वरीवर्तीति कुतश्चित् सूचीपत्रात् ज्ञातमस्माभिः। तस्या अधिगमो नाद्यावधि शक्योऽभूत्। अतः तत्स्वरूपपरिशीलनं नात्र क्रियते। ईदृश्योऽन्या अपि जैमिनिसूत्रवृत्तयः यत्र क्वापि कोणे—तत्त्वेनानुल्लिखिता एव यदि स्युः, यदि च ताः कालान्तरे देशान्तरे अवस्थान्तरे पुरुषान्तरे वा लब्धावकाशाः प्राकाश्यं नीयेरन्, सुप्रभातमेव तद्दिनं मीमांसकवरेण्यश्रेण्याः भवेदिति निश्चप्रचम्॥

तदातदा नूतनतया वृत्तिग्रन्थानां प्रादुर्भावः आवश्यकः उपयुक्ततरश्च। सौत्राणि हि पदानि चिरोत्पन्नानि। तेषां प्रादुर्भावकाले तदर्थावगमस्तदानीन्तनानां सुकर एवासीदिति दृढमस्यूहितुमस्त्यवकाशः। न खलु स्वसमकालिकप्रजानामज्ञातया अपरिचितया अर्थावबोधनाक्षमया वा भाषया सूत्रकारः सूत्राणि प्राणैषीदिति कल्पनमुपपत्तिमत्। अद्यतनानां नानाभाषाग्रन्थकर्तॄणां तथा अननुष्ठानात्। 'न कदाचिदनीदृशं जगत्' इति न्यायस्याप्रकंप्यत्वात्। तथापि—पश्चात्कालिकानां तदर्थावगमे अस्त्येव भूयान् क्लेशः इति नात्र सन्देहलवोऽपि। कालक्रमेण शब्दानां अर्थविशेषादपगमः नूतनार्थस्वीकारश्च अवर्जनीय आपतति। इदमेव तादृशक्लेशे निदानम्। तत्परिहारेण सूत्रकाराभिसंहितस्यैव तात्त्विकस्यार्थस्य पश्चात्तनानामपि सुज्ञानत्वमुपकल्पयितुमेव तदातदा नूत्नवृत्त्यन्तराणामावश्यकता। अन्यथाहि कदाचित्प्रादुर्भूता वृत्तिग्रन्था अपि कालान्तरे स्वमूलभूतसूत्रतुल्या भवन्तः, पश्चात्तनानां न सौत्रपदार्थावबोधनक्षमा भवेयुः। इदश्चानुभवसिद्धमेव समेषां विदुषाम्॥

द्वित्राण्युदाहरणान्यत्र प्रदर्श्यन्ते। तत्रभवता पूर्वमीमांसाभाष्यकारेण शबरस्वामिना स्वभाष्योपक्रम एवायं विषयः प्राधान्येन प्रतिपादितः॥

[1]'लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि तदर्थान्येव सति संभवे सूत्रेष्वित्यवगन्तव्यम्। नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा। तथा वेदवाक्यान्येवैभिर्व्याख्यायन्ते, इतरथा वेदवाक्यानि व्याख्येयानि

1 पू. मी. द. १-१-१

स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्येत। तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः' इति ॥

[1]'अथातो धर्मजिज्ञासा' इत्यादिमं सूत्रं पूर्वमीमांसादर्शनस्य। तत्रत्य-मथशब्दं व्याचिख्यासुर्भाष्यकारः, तस्य लोकप्रसिद्धमेवार्थं वर्णयन् सर्वेषामेव सौत्राणां पदानामेवंविधत्वं प्रसिद्धमनुवदति। 'अथ' शब्दस्य आनन्तर्य-रूपार्थाववोधकत्वं अद्यावधि विश्वजनीनम्। एतन्निर्विशेषाण्येव सौत्राणि सर्वाणि पदानि भाष्यकारस्य काले अवर्तिषत। इदं यथावस्थितार्थपरिज्ञानं पश्चात्काले मा लुप्तं भूदिति कृत्वैव भाष्यकृता व्यवसितम्। फलेग्रहिरेवायं व्यवसाय इति सहृदयानां रसिकानां न तिरोहितमिदम् ॥

अत्रैव [2]'चोदनालक्षणोऽर्थो धर्मः' इत्यस्मिन् द्वितीयसूत्रे भाष्यकारः, 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः। आचार्यचोदितः करोमीति हि दृश्यते' इति चोदनापदं सौत्रं विवृणोति। तथा 'लक्ष्यते येन तल्लक्षणम्। धूमो लक्षणमग्नेः इति हि वदन्ति' इति लक्षणशब्दार्थं कथयति। अत्र चोदनाशब्दार्थस्तावदवैरूप्येणाद्यावधि अनुवर्तमानो दृश्यते। परन्तु 'वचन' रूपत्वमेवास्य इति अयमंशोऽन्यथाभूतोऽधुना। विदूरस्थान् यन्त्रान् विद्युच्छक्त्यैव हि चोदयन्ति निरुन्धन्ति च। कालवेगेनाप्रत्याख्येयोऽर्थ-परिणामो जातः। तथा लक्षणशब्देऽपि। अत्र [3]"कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्' इति कोशेन कश्चिदर्थो निर्णीतोऽस्य शब्दस्य। [4]"व्यावर्तको धर्मो लक्षणम्' 'असाधारणो धर्मो लक्षणम् असाधारणत्वञ्च समनियतत्वम्। व्याप्यत्वे सति व्यापकत्वमेव समनियतत्वम्।" इत्येवं लक्षणशब्दस्यार्थेऽपि अवधानार्हो विपरिणामो जातो नापह्नवमर्हति ॥

[5]'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानं ...' इति सूत्रे 'औत्पत्तिक' शब्दस्य 'नित्यः' इत्यर्थोऽऽवश्यापेक्षितस्तथैव वर्णितो भाष्ये। उत्पत्त्या सिद्धः – औत्पत्तिकः – इति व्युत्पत्तौ वर्ण्यमानायां, उत्पत्तिमान् इत्यर्थः

---

१ पू. मी. द. १-१-१ २ पू. मी. द. १-१-२

३ अमरकोशः ४ तर्कसंग्रहदीपिका ५ पू. मी. द. १-१-५

अस्य शब्दस्यापतति । यः उत्पत्तिमान्—नासौ नित्यो भवितुमर्हति । कालत्रयवर्तिन एव वस्तुनो नित्यत्वात्, उत्पत्तिमतश्च पदार्थस्य, उत्पत्तेः पूर्वमविद्यमानत्वेन नित्यत्वासंभवात् । शब्दार्थसंबन्धस्य नित्यत्वप्रसाधनैकपरत्वाच्चास्य सूत्रस्य, अत्रत्यं "औत्पत्तिक" इति पदं 'नित्यः' इतीममेवार्थं प्रतिपादयितुं सूत्रकारेण प्रयुक्तमित्यत्रापि नास्ति विसंवादलेशः । इमं क्लेशं सम्यगनुभूतवान् भाष्यकारः, विवक्षितमर्थं साभिनिवेशं प्रतिजानीते—"औत्पत्तिक इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया" इति ॥

इत्थं द्वादशलक्षण्यां तत्र तत्र चक्षुः प्रविचालयतां अयं विषयः स्पष्टतरं भायादेव । अर्वाचीनानां ग्रन्थानां सूत्रतात्पर्यप्रपञ्चरूपतया, साक्षात् सूत्रवृत्तिग्रन्थानां अस्मिन् शास्त्रे आवश्यकता समस्त्येवेति पुनःपुनरुच्यमानमपि न जामित्वमापादयति । अत एवैतस्या वृत्तेर्मुद्रणेऽस्माकं तात्रानभिनिवेशः ॥

ग्रन्थपरिचयः :—

'फलवती' इति अस्या वृत्तेर्नाम ग्रन्थकृतैव कृतम् । तत्तत्पादाध्यायावसानेषु इदं स्पष्टं दृश्यते ॥

[1] इति जैमिनिसूत्रवृत्तौ फलवत्यां सप्तमस्याध्यायस्य चतुर्थः पादः समाप्तश्चाध्यायः ॥

इत्यादि तत्रतत्र वाचकमहाशयैर्द्रष्टुं शक्यमेव । इदमेव नाम वृत्तिग्रन्थस्यास्याश्रितं मुद्रणेऽपि ॥

अस्या वृत्तेः प्रणेतुर्विद्वद्वरेण्यस्य पावनं नाम नैवास्मिन् ग्रन्थे क्वापि निर्दिष्टमस्ति । उपलभ्यमाने ग्रन्थभागे स्वनाम अप्रकाशयन्नेवायं महानुभावः 'गूढचारी' विहरति । अतो वयमपि प्रातिस्विकनाम्ना इमं निर्देष्टुमपारयन्तः, तत्र तत्र निर्देशस्यावश्यकतायां 'फलवतीकारः, प्रकृतवृत्तिकारः' इत्यादिशब्देनैव निर्दिशामः ॥

परिदृश्यमानप्रपञ्चमूलकन्दभूतः परमात्मेव अनाद्यन्तोऽयं फलवतीवृत्ति-

---

[1] फलवती—२६०-पुटे ।

ग्रन्थो विराजते । पञ्चमाध्यायावसाने उपक्रमते तालपत्रमातृका । दशमाध्यायमध्ये च विश्राम्यति । यदि ग्रन्थस्यारम्भभागोऽन्त्यभागश्चोपालप्स्येतां, बहवः एतद्ग्रन्थप्रणयनसंबन्धिनो विषयाः अस्माभिरज्ञास्यन्त । न त्वेतदस्ति । तस्मात् – ग्रन्थकर्तुरस्य नाम, ग्रन्थप्रणयनकालः, ग्रन्थप्रणयनकारणम्, ग्रन्थकर्तुराचार्यस्य आचार्याणां शिष्याणां वा नामधेयम्, आचार्याज्ञया – शिष्यप्रार्थनया-स्वयमेव वा स्वानन्द्येण ईदृशवृत्तिग्रन्थनिर्माणे प्रवृत्तोऽयमिति, अस्मदीये पावनतमे भारतदेशे अस्य जन्म कस्मिन् ग्रामे-नगरे इति, किं कस्यापि राज्ञो विद्वत्सभामयमलञ्चकार? उत न? इति, अस्यायुःकालः कियद्वर्षपरिमितः? इति, एतत्समकालिका विद्वांसः कति? किन्नामधेयाः? इति, किं तैस्सह वादप्रतिवादादिकमस्य समजायत? जयपराजयादिकमपि? इति, अनेनान्येऽपि केचिद्ग्रन्था अस्मिन्नेव शास्त्रे-अथवा-शास्त्रान्तरे व्यलिख्यन्त? उत न? इति, एवंविधा अन्येऽपि बहवः आवश्यका विषया अस्माभिर्न ज्ञायन्त-एव । यदेव किञ्चिदिममधिकृत्य ज्ञातव्यमस्माभिः, तत्सर्वं इदानीमस्मद्धस्तगतान्मातृकाभागादेव साधयितव्यम् । विजिज्ञासिता अन्ये विषयाः यथामति तैस्तैरभ्यूहितव्या एव । अस्माभिरपि तथाविधं किञ्चिदत्र क्रियते । तस्य साधुत्वे असाधुत्वे वा विद्वांसः प्रमाणम् ॥

मातृकास्वरूपम् :–

तञ्जावूर् सरस्वतीमहाल् ग्रन्थालये अद्यत्वे विद्यमानानां तालपत्रमयीनां मातृकाणां सर्वासामेव (कालतः) अतिप्राचीनेयं स्वगोष्ठ्यां अनितरसाधारणं 'ज्यैष्ठ्यं' वहन्ती विराजते । अस्यां इदानीं विद्यमानानि अतिजीर्णानि पत्राण्येवेदं पिशुनयन्ति । अवयविनी मातृका यथा आद्यन्तविहीना (विस्त्रीव) संप्रकाशते, तत्तुल्यमेवास्या अवयवभूतानि सर्वाण्येव पत्राणि भग्न-भुग्न-विनष्ट-स्वभागानि स्वाश्रिताक्षरस्वरूपपरिज्ञाने भूयिष्ठं क्लेशमावहन्ति, अल्पतर-अल्प-पृथु-पृथुतर खण्डात्मना विशीर्णानि, पार्श्वद्वय विहीनानि, वाचा विवरीतुमसाध्यं नानाप्रकारं वैरूप्यं प्राप्तवन्ति विराजन्तेतराम् । मातरमेव हि पुत्रा अनुप्रजायन्ते! कोऽत्र विरोधः? "वाचकमहाशया अपि कथं नामेदं जानीयुः? कथन्तरां विशीर्णानां पत्रखण्डानां पुनरपि संधानपूर्वकं परिपूर्णतां प्रसाध्य अस्या मातृकात्वसंपादनं बहुक्लेशक्षमा-

श्रद्धातिशयकार्यं संप्रधारयेयुः ? कथन्तमां "सर्वांशविकलानां मातृकागतानामक्षराणां स्वरूपनिर्धारणपूर्वकं कष्टसाध्यं प्रत्यादर्शसंपादनं निष्पादितमभूत ?" इतीदं अनुसंदधीरन् ? इति हेतोः अस्या मातृकाया आदौ मध्येऽन्तेच त्रयाणां पत्राणां छायाचित्रं ग्राहयित्वा तस्य मुद्रणार्हं रूपमपि संपाद्य मुद्रितग्रन्थेऽस्मिन संयोजनं कृतं वर्ततेऽस्माभिः। तेषु पत्रेषु विद्यमानानामक्षराणां. मुद्रितपुस्तके यदेव स्थानं तदपि छायाचित्रस्याधस्तादेव सूचितमस्ति । इदमुभयं प्रत्यक्षीकुर्वन्तस्सहृदयतल्लजाः यथावस्थितं तत्त्वं, मन्ये अनायासेनैव ज्ञास्यन्ति ।।

मुद्रणव्यवसायः ।—

तञ्जावूर् समीपविराजमानपञ्चनद (திரு வையாறு) संस्कृतकलाशालायां पूर्वमीमांसाशास्त्रमधीयाना यदा वयमभूम (1928 to 1932) तदेव इमां मातृकामधिकृत्य किञ्चित् ज्ञातमस्माभिः । श्रीपार्थसारथिमिश्रविरचितन्यायरत्नमालाव्याख्यानं 'नायकरत्नं' नाम तञ्जावूर् सरस्वतीमहाल् ग्रन्थालये वर्तत इति श्रुतवद्भिरस्माभिः तदधिगमाय कृतेन प्रयत्नेन अस्या अपि मातृकायास्सत्ता ज्ञाताऽभूत् । अस्मदाचार्यपादाः सुगृहीतनामधेयाः श्री. उ. वे. डि. टि. ताताचार्यवर्याः (अद्यत्वे दिवं गताः) अनयोरुभयोर्ग्रन्थयोर्मुद्रणमवश्यकर्तव्यमिति वदन्त आसत । तदन्तेवसतामस्माकं इदमवश्यकर्तव्यमिति सामान्याकारेण ज्ञानमुदभूत ; तावदेव । अस्य ग्रन्थस्य मुद्रापणं यः कश्चिदन्यः विद्वान् करिष्यतीति नो मनसि स्थितम् । विद्याभ्यासं परिसमाप्य कलाशालातो निर्गतवतामस्माकं, गच्छता कालेन विस्मृतप्रायमिदमभूत् ।।

पुनरपि बहोः कालादनन्तरं सरस्वतीमहाल् मातृकालये उद्योगवशेनास्माकं नियतवासप्रसक्तिरुदपद्यत A. D. 1949 तमे वत्सरे । चिरवृत्तस्य मनोरथस्य पुनर्नवता समजनि । अष्टाविंशतिवत्सरपरिमितात् कालात्परं इदानीं मनोरथपूर्तिः ईश्वरेच्छया समजायत । विचित्रा दैवगतिः ।।

सरस्वतीमहाल्प्रवेशसमनन्तरमेव अयं विषयोऽस्माभिर्ज्ञातोऽभूत् यत् "नायकरत्नाम्नी न्यायरत्नमालाव्याख्या पण्डितवरेण श्री के. एस्. रामस्वामि

शास्त्रिणा बरोडानगरे मुद्राप्य प्राकाश्यं नीता । फलवतीनाम्नी मीमांसा-सूत्रवृत्तिस्तु मुद्रणमप्राप्यैवावतिष्ठते" इति ॥

तदानीमेव एतन्मुद्रापणेऽस्माकं उत्कटप्रवृत्तिरुदपद्यत । निर्वाहकाणां अवधानञ्चात्र परिवर्तितमभूदस्माभिः । प्रतिसंवत्सरं मुद्रणार्हमातृकापट्टिका-समर्पणावसरे अविस्मरणेन अस्य ग्रन्थस्य समुल्लेखः विना विच्छेदं क्रियमाण-आसीदस्माभिः ॥

परन्तु मुद्रणोपयुक्तद्रव्यसंपत्तेः परिमितत्वात् , विद्यमानद्रव्यस्य 'इतो-ऽप्यावश्यकतर'त्वेनाभिमतमातृकान्तरमुद्रापणे उपक्षीणत्वाच्च अस्मिन्विषये भूयानेव विलम्बोऽपरिहार्यस्समापतितः ॥

अत्रान्तरे, पूर्वमीमांसायां इयदवधि अमुद्रितानामन्येषामपि ग्रन्थानां पट्टिकाप्येका अस्माभिस्सज्जीकृता । युनेस्को (Unesco) स्थापनादागतानां अधिकृतानां साहाय्येन ; अतिजीर्णाया अस्या मातृकायाः भूयोऽपि वैरूप्यं संभावयद्भिरस्माभिः [1]सूक्ष्मतरच्छायाचित्रग्रहणमपि संपादितमभूत् ॥

तदा तदा नानादेशेभ्यः सरस्वतीमहाल् ग्रन्थालयनिरीक्षणार्थं बृन्दशः समागच्छतां प्रेक्षावतां अवश्यप्रदर्शनीयवस्तुषु इयं फलवतीमातृकापि नियमेन लब्धास्पदा भवति स्म । तादृशे समये अतिजर्जराया अस्याः पत्रखण्डाः नूनं विशीर्णाः इतस्ततः पतेयुः । इमं विषयं पूर्वतरं अभ्यूहितवद्भिरस्माभिः तादृशानां पत्रखण्डानां पार्थक्येन पुञ्जीकृतानां स्ववशे स्थापनं कृतमभूत् । पश्चात् मुद्रणावसरे प्राप्ते इमे पत्रखण्डाः बहुतरमुपयुक्ता भवेयुरितीदमेव तत्र कारणम् । फलेग्रहिरेवायमस्माकं व्यवसायस्संवृत्त इति सबहुमानमिदानीं कथयितुमिच्छामः । इत्थमविश्रान्तप्रयत्नपरंपराफलतया अस्या मातृकाया मुद्रणं सद्यः कर्तव्यमिति निर्वाहकाणां संकल्पस्समजनि । एतन्मुद्रणसंपादनभरश्चास्मदायत्तीचक्रे निर्वाहक-महाशयैः ॥

---

1 Microphilm. इदं तैरेव स्वहस्ते नीतम् । नास्माकं सविधे समर्पितम् । तदानीं मातृकागतानां तालपत्राणां पौर्वापर्यव्यत्यासस्य भूयस्त्वाच्च अनुपयुक्तमेवेदमिति पश्चात् मातृकापरिशीलनावसरे ज्ञातमस्माभिः ॥

मातृकासंस्करणम् :–

'औत्सुक्यमात्रमवसाययति प्रतिष्ठा' इति महाकविसूक्तिरन्वर्थाभूदस्माकं तदा। बह्वायाससाध्यमिदं कर्मेति, तथा साधितमपि न यथावत् समग्रतया प्रेक्षावतां तृप्तिं जनयेदिति च तदात्व एव संप्रधारितम्। तथापि अन्तः प्रविश्य परीक्षणमकृत्वा न सहसा निर्धारणं युक्तमिति मत्या मुद्रणोपयोगितया ग्रन्थस्य लेखनाय प्रायतामहि। मातृकापत्राणां अप्रतिसमाधेये वैरूप्ये ज्ञातचरेऽपि अस्मिन् कार्ये सुधीरमवतरीतुमस्माकं अवलम्बनं किमप्यासीत्। इतः पञ्चाशद्वर्षेभ्यः पूर्वमेव अस्या मातृकायाः [1]प्रत्यादर्शः संपादितो वर्तते ग्रन्थालये। तेनैवात्रोपघ्नदण्डायितम्॥

संपुटद्वयात्मकोऽयं प्रत्यादर्शः। अस्य लेखकः मीमांसापरिचयविधुरः। न केवलमेतावदेव, किन्तु यथावस्थितमातृकागताक्षराणां तत्त्वेन परिज्ञाने लेखने च अस्य ईषदपि श्रद्धा नास्ति। यथेच्छं किमपि विलिख्य परिपूरितवानयम्। अतोहेतोः अस्मात्प्रत्यादर्शात् प्रतीक्षित उपकारो नैवास्माभिरलम्भि। कश्चिन्मुक्तकश्लोकोऽप्यस्माकं स्मृतिपथमध्यरोहत् :—

'स्थूलतया नीलतया दूरतया दानलोलुपैर्मधुपैः।
धावितमिभराजधिया! हन्तासावन्ततो महिषः!!॥' इति।

अद्यत्वे यदेवावश्यकर्तव्यं तदस्माकं सुस्पष्टमेवाभूत्। पुनरपि मातृकाया अस्याः नूत्न एकः प्रत्यादर्शस्संपादयितव्यः। मीमांसकेनैवेदं कर्तव्यम्। अन्यथा चेत्-पुनस्तद्दोषतादवस्थ्यापत्तिः। तदर्थं पूर्वतरं मातृकाया अस्यास्संस्करणमपरिहार्यम्। तदेवोपस्थितमिदानीम्। इदमुभयं-यच्च नूत्नप्रत्यादर्शसंपादनं स्वहस्तेनैव - यच्च तदुपयोगितया मातृकायास्संस्करणं - कृतमेवास्माभिः। स्वयंलिखितः प्रत्यादर्शः [2]संपुटत्रयात्मको वरीवर्ति सरस्वतीमहाल् ग्रन्थालये, सुसंस्कृता 'फलवती' मातृका च। बह्वायाससाधितात् अस्मात् स्वयङ्कृतात्प्रत्यादर्शादेव मुद्रणयन्त्रप्रेषणार्हाणि पत्राणि (Press copy) लिखितानि॥

यस्तु प्राक्तनः प्रत्यादर्शः पञ्चाशद्वर्षीयः, सोऽपि सरस्वतीमहाल् ग्रन्थालये

1. Copied Vol. No. 78 A. and 78 B. in Tanjore Saraswathi Mahal Library.
2. Copied Vol. Nos.—2079, 2080, 2081.

विराजत एवाद्यापि । सहृदयानां वाचकमहाशयानां तत्स्वरूपपरिज्ञानौपयिकतया तस्याद्यन्तकतिपयपङ्क्तिमात्र मत्र यथावस्थितं प्रदर्शयामः—

तञ्जावूर सरस्वतीमहाल् मातृकालयस्य संस्कृतमातृकाप्रत्यादर्शस्य 78-A इत्यङ्कितस्य प्रथमपुटे ।—

श्रीः

**मीमांसाग्रन्थः**

"फलवती जैमिनिसूत्रवृत्तिः प्रारभ्यते ६ पत्रपत्राणां आदौ अत्र प्रथमतः ग्रन्थपातो दृश्यते । ... ... दर्शनमेघ इव किकुदणत्प्रकृतिवत् यथा प्रकृतिभूतसान्नाय्य ... ... " ॥

288-तमे पुटे—

"सू—इष्ट्याद्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया एवं वा प्रथमपदार्थः आरम्भः इति तत्र सन्दिह्यते किम् । दर्शपूर्णमासयोः आरप्स्यमाणयोः । आरम्भणीया । प्रथम" ॥

---

तञ्जावूर् सरस्वतीमहाल् मातृकालयस्य संस्कृतमातृका प्रत्यादर्शस्य 78-B इत्यङ्कितस्य द्वितीयसंपुटस्य (आद्ये) 289-तमे पुटे -

"पदार्थस्न्यश्चं करोति उत पुरुषस्यारभमाणस्य प्रथमं दर्शपूर्णमासयोः प्रवर्तमानस्य आरम्भणीया कर्तारमारम्भयोग्यं करोति" ॥

524 तमे पुटे —

'सू – ग्रहाणां देवतान्यत्वे ... ... स्तुत ... स्यात् । द्वितीयाध्यायोक्तस्तुत । शस्त्राधिकरण – प्रयोजनकथनपरमिदम् । सूत्रं स्तुति शब्द ... ...

(अपूर्तितया अत्रास्मिन्मूल – तालपत्र पुस्तके एतावत्पर्यन्तमेव—दृश्यते)

इति अत्र कृत महाश्रमो श्रीमदीश्वरार्पितोस्त्विति संपूरितम् ॥

इदं पुस्तकं = श्रीमत्तंजनगरस्य राजगृह – श्रीसरस्वत्यालयीय—प्रप्राचीनतालपत्रग्रन्थाक्षर – पुस्तकानुसारेण – यथामति – यथादृक्प्रसारणान्वीक्षण श्रमेण

तत्रस्थैरधिष्ठितैराज्ञापितश्चाहं प्रयत्नेन विलिख्य ॥ आङ्गलीये १९१७ ई० संवितौ नवम्बरमासे (२) दिने मया। कापिष्ट-कवि गोविन्दार्येण संपूरितम्। ईश्वरार्पणम् ॥

तत्कृपया सर्वेषामनुमोदतां महान्श्रेयोऽस्तु ॥

हरिः ओम्

Compared with R. R. asst. Librarian 6—11—17.

O. S. Ramaswami Ayar.

इति।

---

एवमेव आदितः आन्तं अबद्धजटिलमेवास्य प्रत्यादर्शसंपादकस्य लेखनं, न केवलं यथावस्थितग्रन्थोद्धारे नापकरोति, अपि तु तत्त्वान्वेषणपराणां प्रेक्षावतां विपरीतज्ञानमपि जनयत्येव। अतः विवक्षितं पूरयितुं मातृकायाः परिष्करणे प्रावर्तामाह ॥

तालपत्रमातृकाः, एकैकतालपत्रभागे छिद्रं संपाद्य तत्र रज्जुं प्रवेश्य बद्ध्वा रक्ष्यन्ते सांप्रदायिकैः। प्रतिपत्रं वामभागे पत्राङ्कोऽपि क्रमप्राप्तो निर्दिष्टो भवेत्। पूर्वपत्रावसानात् उत्तरपत्रोपक्रमे ग्रन्थानुवृत्तिश्च समीक्षणीया प्रमादपरिहाराय। एतान् सर्वानेव सांप्रदायिकान् विषयानतिलङ्घ्य इयं फलवती मातृका विराजते। वामभागस्य केषुचन पत्रेषु—भागद्वयस्यापि बहुषु पत्रेषु—नष्टत्वात्, पत्राणां दैर्घ्येण आयामेन बहुधा भग्नत्वात्, खण्डितानां पत्रैकदेशानां समुचितपत्रखण्डान्तरेण संयोजनमन्तरेण यथावस्थितग्रन्थ-संदर्भस्याभ्यूहितुमशक्यत्वात्, आधारभूतरज्जुप्रवेशार्थे पत्रच्छिद्रे तदा तदा प्रेक्षणाय मातृकामुपाददानानां कार्यान्तरव्यग्रमनसां द्रुततराकर्षणादिवशात् विस्ताराविशयस्य – तत्प्रदेशस्य पत्रभागलोपप्रयोजकस्य समुपजातत्वात्, पत्राणां पौर्वापर्यव्यत्यासस्य तत्रतत्र लब्धप्रसरत्वात्, सर्वथा अनुपयुक्तैवेयं मातृका इत्येव प्रामाणिकानां द्रष्टॄणां मतिरुपजायेत। इदं सर्वमपि सम्यक् ज्ञातवन्त एव वयं 'प्रारब्धं न परित्याज्य' मिति सुदृढेनाध्यवसायेन, गङ्गासमानयने प्रवृत्तो भगीरथ इवैतन्मातृकासंस्करणे प्रावर्तिष्महि। अस्म-दाचार्यानुग्रहलब्धा प्रज्ञैवैका तत्रतत्र प्रसक्तं स्खालित्यमपनयन्ती उपघ्नदण्डा-

यतेऽस्म मातृकाया अस्याः परिष्करणे। कथं कथमपि अशिथिलोत्साहतामापाद्य प्रसाधितमिदं कर्म। संक्षेपेण तत्प्रकारमावेदयामस्सहृदयानां परितोषाय ॥

१ मातृकाया आधाररज्जु मपनीय पत्राणां परस्परनिरपेक्षतया अवस्थापनं कृतम् ॥

२ अत्युत्कृष्टं सुगन्धि अकृत्रिमं चन्दनतैलं बहुमूल्यप्रदानेन समानीय, सर्वाणि मातृकापत्राणि अल्पाल्पतरदीर्घदीर्घतराणि नानाप्रकारेण भग्नानि उभयोः पार्श्वयोः समभ्यक्तानि। इदमस्माभिः स्वहस्तेनैव कृतम् ॥

३ मातृकायाः पार्श्वद्वयेऽपि संरक्षणार्था दारुफलका वैणवी अपर्याप्ता च पूर्वानुवृत्ता। तामपनीय नूत्नतया स्निग्धदारुमय्यौ द्वे फलके पार्श्वद्वयेऽपि संयोजिते ॥

४ तान्तवीं कठिनस्पर्शां रज्जुमपास्य कौशेयमयीं सौकुमार्यपूर्णां मव्यतरां रज्जुं पत्राधारत्वेन प्राकल्पयाम ॥

५ अस्या मातृकायाः अत्यन्तापूर्वग्रन्थगर्भितायाः, महाराजमहिष्याः गर्भिणीत्वदशायां यावन्तो विलक्षणा उपचाराः क्रियेरन् तावन्तोऽकारिषत ॥

६ अस्या मुद्रापणभरं स्वीकृतवता मस्माकमेव रक्षणं प्रापितेयं, अन्येषामसुलभता मापादिता। यद्यावश्यकता, अस्माकमेव स्थानमागत्य इयमन्यैर्द्रष्टव्या। रज्जुशिथिलीकरणं, मातृकापत्राणां प्रातिस्विकरूपेण प्रदर्शनं, पुनरपि यथापूर्वं संस्थापनं इत्यादिकं सर्वमस्माभिरेव स्वहस्तेनैव कर्तव्यम्, नान्यमुखेन। पत्राणां भूयोऽपि भङ्गप्रसङ्गपरिहारायायं नियमः ॥

७ अस्या मातृकायाः अभिनवः कोऽपि [1]प्रत्यादर्शः संपादितः—मुद्रणार्थलेखनोपयोगितया—अस्माभिरेव स्वहस्तेन ॥

८ अत्यन्तमस्पष्टाक्षरत्वात्पत्राणां, सावधानं सावकाशं निपुणनिरूपणपूर्वकं समुद्धृत्य अक्षराणां लेखनं कर्तव्यमापतितम्। स्थूलीकरणशक्तिमान्

1. Saraswathi Mahal copied Vol. Nos-2079, 2080, 2081.

[1]आदर्शश्चात्रापेक्षितः । प्रणिधानयोग्यं आलोकपूर्णं विविक्तं स्थानञ्चापेक्षित-मभूत् । अवकाशश्च अधिकतरमपेक्षित आसीत् । इदं सर्वं तदानीन्तन-सरस्वतीमहाल् कार्यदर्शिना परमोदारेण पण्डितपक्षपातिना स्वयं पण्डितेन अस्मत्प्रियसुहृदा (अद्यत्वे दिवंगतेन) श्रीमता—नी. कन्दस्वामिपिळ्ळै महा-शयेन सद्यः अनुमतम् । वयञ्च तदातदा समक्षं वार्तालापेन प्रोत्साहिताः इति कृतज्ञता भूम्ना निवेद्यते सहृदयेभ्यः ॥

इत्थं आवश्यापेक्षितसामग्रीसंपत्त्यनन्तरमेव विवक्षिते विषये साक्षात् प्रयतमानाना मस्माकं, तत्र निलीनः श्रमः स्पष्टता मुपागच्छत् । विशीर्णानां पत्रखण्डानां परस्परसंयोजनेन 'यथावस्थितपत्र' रूपत्वसंपादनं प्रथमतरं कर्तव्य मापतितम् । तदर्थं कः पत्रखण्डः केन पत्रखण्डान्तरेण स्वारसिकतया संयुज्यते ? इति निर्णयः कर्तव्य आसीत् । तदर्थञ्च पत्रखण्डानां मिथः संयोजनेन परिपूर्ण-पत्रस्वरूपं अन्यूनानतिरिक्तं यथा संपद्येत तथा कर्तव्यम् । समानरूपाणां बहूनां खण्डानां व्यत्यासेन संयोजनेऽपि परिपूर्णं तालपत्रस्वरूपं संपन्नं स्यादेव । नतु तावता कृतकृत्यतास्माकम् । ग्रन्थसंदर्भस्य यथावस्थितस्यालाभात् । अत स्तालपत्रस्वरूपनिर्धारणोपयोगितया पत्रखण्डस्थाना मक्षराणामपि निरूपणं कर्तव्यम् । तथा तालपत्रखण्डान्तरेषु बहुषु पुञ्जीकृतेषु विद्यमानेषु परस्परं ग्रन्थसंदर्भानुवृत्तितदभावयोरपि तत्त्वेन संप्रधारण मवश्यकर्तव्य मापतति । तस्मात् तालपत्रखण्डमेक मादाय तत्रत्यान्यक्षराणि यथामति इदन्त्वेन निर्णीय तादृशग्रन्थतत्त्वेन संभावित मध्यायं पादं अधिकरणं वा अभ्यूह्य एकस्मिन् संवृते पत्रसंपुटे (cover) निर्देशपूर्वकं तत्प्रक्षिप्येत । एवं बहूनि पत्रसंपुटानि प्रादुर्भवेयुः । एकैक पत्रसंपुटान्तर्वर्तिनां तालपत्रखण्डानां पुनरपि निपुणतर-निरीक्षणेन मातृकास्थै रखण्डितै स्तालपत्रै स्सह समपरिमाण संपत्त्यर्हतया उत्पीठिकाया उपरि निक्षेपः कर्तव्यः । तदवस्थानामेव तेषां तालपत्रखण्डानां स्थिरत्वसिद्ध्यर्थं सस्नेह दीर्घतराल्पायामान्तर्वर्त्यक्षरस्वरूपातिरोधायक दृढतर कागजपत्रेण (tape) उभयतः संदंशः कारयितव्यः । एतावति सश्रद्धं कृते सति, मातृकागताखण्डिततालपत्रतुल्यं स्वप्रयत्ननिष्पादितं तालपत्रमेकं सिद्ध्यति ।

1. Lens.

एवं परिपूर्णतासंपादनायापेक्षित तालपत्रखण्डालाभेन (तेषां लुप्तत्वात्) पार्श्वद्वयवन्ति मध्यरहितानि अथवा एकतरपार्श्वहीनानि च तालपत्राण्यनेकानि प्रादुरभूवन्। तानि अगत्या तथैव निक्षिप्तानि तत्रतत्र। परं लुप्ते प्रदेशे आधुनिकं नूतनं तालपत्रखण्डं समदैर्घ्यायामं उत्कृत्य मिश्रयित्वा मातृकागतपत्रान्तरानुरूप्यं संपादित मस्माभिः ॥

एवंविधकार्यकरणे मातृकागततालपत्रेषु नानाविधरेखानिर्माणचतुराः तालपत्रभक्षकाः कीटाः महतीं शिरोवेदनां मस्तिष्कक्षोभञ्च जनयामासुरिति ज्ञातमेव पुनर्विज्ञाप्यते मातृकाक्षरोद्धारपरिश्रमवेदिभ्यः सहृदयेभ्यः ॥

यथाह माघः –

[1] परस्परस्पर्धिपरार्ध्यरूपाः पौरस्त्रियो यत्र विधाय वेधाः ॥
श्रीनिर्मितिप्राप्त घुणक्षतैक वर्णोपमावाच्य मलं ममार्ज" इति।

एवं तालपत्राणां मध्य एव प्रादुर्भूय तत्रैव नियतवासं कृत्वा तान्येव भक्षयन्तः आश्रयाशाः क्रिमयो न केवलं स्वीयां क्षुधं, नापि केवलं अनघं मातृकारूढं ग्रन्थसंदर्भं, अपितु मातृकागतान्यक्षराणि यथावस्थितरूपेण समुद्धृत्य प्रकाशयितुं प्रवर्तमानाना मुत्साहवह्निमपि शमयन्ति। अत्यल्पाना मेतेषां प्राणिनां यद्येतावान् शक्त्यतिशयः, सर्वव्यापिनः परमपुरुषस्य भगवतो नारायणस्य शक्तिः कियती स्यात्? मातृकापरिशीलनैषिणः सर्वेऽपि पण्डिताः, स्वसहजशत्रूणा मेतेषां क्रिमिराजाना मुपप्लवं सोढु मशक्नुवानाः स्वसंवेद्यं अपरिहार्यं दुरन्तं महान्तं क्लेशमनुभवन्त एव वर्तन्ते। का गतिः? एतेभ्यो नित्यपराजिताः विद्वांसो यदि कादाचित्कं विजयं प्राप्नुवन्ति, हन्त! हन्त!! भूयिष्ठ प्रमोदस्थान मिदम् ॥

एवं छिन्नानां भिन्नानाञ्च अवयवानां संधानेन पुनर्नवता मापादितैः तालपत्रैः सङ्कलिता मातृकेयं यद्यपि परिपूर्णेव लक्ष्यते; तथापि वस्तुतो न तथाविधा भवति। संधायकवस्तुनोऽपगमे पुनरपि प्राक्तनीं स्थितिं प्राप्नु-

---

१ शिशुपालवधे – तृतीयसर्गे।

यादेव। '[1]अयं पटस्संवृत एव शोभते' इति मृच्छकटिकश्लोकोऽत्र स्मृतिपथमधिरोहति। अत्यन्तसुकुमाराणां शिरीषकुसुमानां अवतंसनार्थं स्पर्शेऽपि म्लानताशङ्कया दयमानाः प्रमदाः तान्युपयुञ्जते इति महाकवेः कालिदासस्य सूक्तिः '[2]ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइ' इति। साप्येतन्मातृकाविषये सूपपन्नैव॥

इत्थं अशिथिलेन व्यवसायेन अस्या मातृकायास्संस्करणं कृत मस्माभिः। अद्यत्वे सुदृढं सावलेपं सहृदयानां पुरस्तात् इदमावेदयितुं प्रभवामः यत् न कश्चिदपि तालपत्रखण्डः – अल्पोवा अल्पतरोवा स्वोचितस्थानानुपलब्ध्या आनर्थक्यं प्रापितोऽस्यां मातृकायामिति॥

इदानीं सरस्वतीमहाल् मातृकालये, अल्पानां वस्तूनां स्थूलतापादनपूर्वकं स्पष्टतरप्रतिपत्तिप्रयोजकः यन्त्रविशेषः – सन्निधापितो विराजते। अस्य अथवा एवं जातीयकस्यान्यस्यापि ग्रन्थालयस्य अत्यावश्यक एषः चिरप्रार्थितः अद्यत्वे संप्राप्त इति मोमुद्यामहे। अस्याः फलवती मातृकायाः संस्करणकाले ईदृशं सौकर्यं नासीत्। स्थूलीकरणदक्षं दर्पणविशेषं वामहस्तेनोपादाय यथोचितं मातृकापत्रसन्निहितं व्यवहितं वा संस्थाप्य, अक्षराणां समुद्धारः कर्तव्य आसीत्। 'भुग्नपृष्ठकटिग्रीवं ...' इति मातृकालेखकैः स्तत्र यल्लिखितमस्ति तत्प्रत्यक्षमेवानुभूत मस्माभि रेतस्मिन्व्यवसाये॥

किमेतावदेव? नहि नहि। दर्शनसाधनस्य चक्षुरिन्द्रियस्य अविच्छिन्नसीमातिलङ्घिव्यापारपरंपरया स्वाभाविकी दर्शनशक्तिः नितरा मुपक्षीणाभूदस्माकम्। चक्षुर्वैद्याय प्रादर्शयाम। वस्तुस्थितिं विचार्य ज्ञातवान् सः, सद्यः चिकित्सां न व्यदधात्। 'भवता अन्ततः मासद्वयावधि मातृकानिरीक्षणं यदि सर्वात्मना परित्यज्यते तदैव चिकित्सा फलेग्रहिः स्यात्। प्रथमतरं अयं विषयो निर्धार्यताम्' अथ चिकित्सां वर्तयिष्यामि' इत्युक्तवान्। अगत्या तथैवानुष्ठितम्। मासद्वयमितं कालं ग्रन्थावलोकनं सर्वथा त्यक्तमेवाभूत्। चिकित्सां परिसमाप्य यथावस्थितां चक्षुश्शक्तिं समासाद्य पुनः पूर्वोत्सृष्टकार्यपरिपूरणं कृतमस्माभिः॥

---

१ मृच्छकटिके-द्वितीयेऽङ्के। २ शाकुन्तले प्रथमाङ्के।

इत्थं नानाप्रकारं महान्तं परिश्रममुररीकृत्य अस्या मातृकायाः परिष्करणं कृतम् । इदानीं कृतकृत्या वयम् । मुद्रणञ्च निर्व्यूढम् । मुद्रणोपक्रमात्पूर्वमेवैतावान् श्रमोऽत्र स्यादिति ज्ञातमेवास्माभिः । अपूर्वग्रन्थप्रकाशनकुतूहलवशात् सुज्ञातमेव क्लेशमिममनादृत्य विषयेऽस्मिन् प्रावर्तिष्महि । संप्रति सर्वोऽप्ययं प्रयासः सफलो वा? न वा? इत्यत्र मीमांसारसास्वादचतुरान् अन्तर्वाणिजनानेव प्रमाणीचिकीर्षामः ॥

मुद्रणप्रकारः —

कथमस्य मुद्रापणं कर्तव्यमिति संभावितानेकप्रकारोल्लेखपूर्वकं 'एकधा' निर्णीतमस्माभिः । तन्निर्णयानुमार्येवैतन्मुद्रणं वर्तते । अत्र यावन्तः प्रकाराः पूर्वं समुल्लिखिता अभूवन्, तानपि प्रेक्षावतामुपकारायेह निर्दिशामः ॥

१ मातृकाया अपूर्वत्वात् यदेव किञ्चित् तत्र वर्तते, यथा च, तत्तथैव विना विपरिणामं मुद्रापयितव्यम् । तत्पश्यन्तो विद्वांसः पश्चात् यथोचितं शोधनादिकं करिष्यन्ति ॥

२ मातृकायां ग्रन्थाक्षराण्येव वर्तन्ते । तान् तथैव यदि मुद्रापयामः, इदानीन्तनानां विदुषां न स्वारसिकः परिचयस्तत्र स्यात् । अतः मुद्रणप्रयासस्य पूर्णफलत्वप्राप्त्यै नागराक्षरैरेव ग्रन्थस्यास्य मुद्रापणं समुचितं स्यात् ॥

३ मातृकायां विलिखितः ग्रन्थसंदर्भः प्रेक्षावता मद्यतनानां अनायासेनावगाहनक्षमो न भवति । वाक्यानामारम्भे चावसाने च तत्परिज्ञानौपयिकं चिह्नं मातृकायां नास्ति । दण्डाकारमेव लेखनमस्ति । तत्तथैव न मुद्रापयितव्यम् । वाचनसौकर्याय विभज्य प्रदर्शनं पदानां वाक्यानाञ्च कर्तव्यम् । तथा सूत्राणां वृत्तिग्रन्थात्पार्थक्येन प्रतीतियोग्यता यथा स्यात् तथा मुद्रणं प्रवर्तयितव्यम् । मातृकाया मेवं नास्ति । तथा एकैकस्याधिकरणस्य उपक्रमे उपसंहारे च सीमाप्रदर्शन मावश्यकम् । पादाना मध्यायानाञ्चैव— अवसानमात्रे (नोपक्रमे) मातृकालेखकः सीमां प्रदर्शयति । तदपि न तथा सुबोधम् । एकैकाधिकरणविषये तु नैव पृथक्प्रतिपत्त्युपायतया लेखनशैल्यां व्यत्यासो दर्शितस्तेन । मुद्रापणे इदमवश्यमेव परिहर्तव्यम् ॥

४ एकैकस्याऽप्यधिकरणस्य नाम्ना निर्देशः प्रथमतरं कर्तव्यः। अनन्तरमेव सूत्राणि, ततः परं वृत्तिग्रन्थश्चेति मुद्रापणे नियमस्समास्थेयः। वृत्तिग्रन्थे च उपात्तविषयसमाप्तौ सीमाप्रदर्शनं वाक्यानां (Paragraph) आवश्यकम्। सूत्राणामधिकरणानाञ्च संख्यानिर्देशः अवश्यकर्तव्यः। इदं सर्वं मातृकायां नास्ति ॥

५ मुद्रितपुस्तके एकैकस्मिन्पुटे उपरि ग्रन्थनाम प्रदर्शयितव्यम्। पत्राणां मूलभागे च अध्यायस्य, पादस्य, अधिकरणस्य च संख्याप्रदर्शनं पार्श्वद्वयेऽप्यवश्यमेव कर्तव्यम् ॥

६ 'मातृकापत्राणां छिन्न-भिन्न-विनष्टैकदेशानां मध्येमध्ये समापततां अनुस्यूतग्रन्थसंदर्भासमर्पकत्वात, तादृशस्थलेषु किञ्चित्प्रतिविधान माधातव्यम्। विनष्टस्य ग्रन्थभागस्य यथवस्थितं रूपं अभ्यूह्य तस्य ग्रन्थे संयोजनं कर्तव्यम् तथा संयोजितस्य भागस्य पार्थक्येन वाचकानां परिचय मापादयितुं पार्श्वद्वयेऽपि धनुश्चिह्ननिवेशनं कार्यम्।' [1]इत्ययमेकः पक्षः ॥

७ लुप्तस्य ग्रन्थभागस्य अस्माभिः प्रपूरणं नैव कर्तव्यम्। तत् तथैवोत्सृज्य विद्यमान एव ग्रन्थभागो मुद्रापयितव्यः। नष्टश्च ग्रन्थैकदेशः वाचकैः यथा स्पष्टं ज्ञायेत, तथा मुद्रणे मध्येमध्ये निरक्षर एव पत्रैकदेशः कल्पयितव्यः। लुप्तानामक्षराणां इयत्तां विद्यमानपत्रभागसन्निवेशपरिशीलनेन संप्रधार्य तत्समसंख्याकत्वेन ... ... ... ... इत्येवं चिह्नविशेषः तत्र मुद्रापयितव्यः। तेन वाचकाः स्वयमेव लुप्तग्रन्थभाग मभ्यूह्य शेषं पूरयन्तु'। इत्ययमपरः[2] पक्षः ॥

८ विनष्टत्वेन—अथवा—विद्यमानत्वेन निर्णेतु मशक्यानां उभयकोटि-भ्रष्टानां, 'न च खलु परिभोक्तुं नापि शक्नोमि हातुं' इति महाकवि श्रीसूक्तिविषयाणां अक्षराणां विषये तृतीयः पन्था आश्रयितव्यो भवति। तादृशान्यक्षराणि यदि स्वल्पानि यदि वा बहूनि उभयान्यपि यथामति

१ अयमुल्लेखमात्रे पदमलभत। नत्वनुष्ठाने।

२ अयमेव पक्षः अद्य मुद्रणे समाश्रितः।

ग्रन्थान्तरपरिशीलनेन अभ्यूह्य मुद्रापयितव्यान्येव[1]। तेन उपलभ्यमानाना-मक्षरैकदेशाना मुपेक्षणं मा कृतं भूदिति। एतस्मिन्नेव कर्मणि अधिकतरः परिश्रमः अल्पश्च फल मभूत्। तालपत्राणां हि द्वेधा छेदनं संभावितम्। आयामधारया विस्तारमार्गेण च। तत्र विस्तारधारया छिन्नाभिन्नस्य पत्रभागस्य सूक्ष्मतरनिरीक्षणेन अस्पष्टग्रन्थांशस्याभ्यूहः न तथा क्लेशावहो भवति। आयाममार्गेण विच्छिन्नानां पत्रैकदेशानां प्रतिसंधानेनास्पष्टाक्षरोद्धारे भूयानेव क्लेश आपतति। मातृकायाः ग्रन्थाक्षरमयत्वात् सूक्ष्मतरत्वाच्चाक्षराणां (बृहत्त्वा-भावात्) विद्यमानांशावलंबनेन विनष्टांशप्रत्यानयनं न तथा सुकर मभूत्। अन्ततः कथं कथमपि तत् कृतमेवेदानीम्॥

९ मातृकायां विस्पष्टतर मुपलभ्यमानानां अनुपपन्नत्वेन सुदृढं निर्णीय-मानानां अक्षराणां पदानां वाक्यानां वाक्यसमूहानां वा विषये कथं वर्तितव्यमिति प्रश्न एकः प्रत्यादर्शसंपादनावसरे प्रादुरभूत्। अन्तः प्रविश्य निरूपणे कृत एवाथ संशः प्रसरं लेभे। ततः पूर्वन्तु 'मातृकायां क्वापि अनुपपन्नो ग्रन्थांशो नैव स्यात्। उपपन्ना एव सर्वाः पङ्क्तयस्स्युः' इति निश्चिता मति रस्माक-मितरेषाञ्चाविशेषेणावर्तत। मातृकाया अतिप्राचीनत्वं प्राक्तनानां विदुषां अद्यतन-विद्वदपेक्षया ज्ञानाधिक्यञ्चैव मभ्यूहने कारण मभूत्। निपुणनिरूपणे तु अस्मिन्विषयेऽन्यथाभावः प्रत्यक्षोऽभूत्। [1]मातृकायां विद्यमानं अनुपपन्नत्वेन निश्चितमपि ग्रन्थं तथैव मुद्राप्य, अधस्तात् टिप्पणरूपेण समीचीनतया अवधृतः पाठो लेखनीय इति निरणायि। इममेव निर्णय मनुसृत्येदं मुद्रणं निर्व्यूढम्। पदवाक्यदोषस्थल एवायं प्रकारोऽनुसृतः। अक्षरविषये त्वन्यथाभावे मातृकास्थं अनुपपन्नत्वेन सुनिश्चित मक्षर मुपेक्ष्य समीचीनाक्षरविन्यास एव मुद्रणे कृतः, नत्विदं पार्थक्येनाधोभागे दर्शितं; बाहुल्यात् अल्पफलत्वाच्च॥

१० इत्थं महता प्रणिधानेन कृत मपीदं मुद्रणं यथा सहृदयानां वाचक-महाशयानां मनसि स्वयाथात्म्यं प्रतिभासयेत् तथा किञ्चित्कर्तव्यमिति मति रस्माक मासीत्। तदर्थमेव मातृकापत्रेषु त्रयाणां आदौ मध्ये अन्ते चावस्थितानां

---

१ अयमपि पक्षोऽस्मिन्मुद्रणे समाश्रितः।

छायाचित्राणि प्रत्येकं निष्पाद्य एतद्ग्रन्थादौ संयोजितानि । तेषुतेषु तालपत्रेषु विद्यमानो ग्रन्थभागश्च यथामातृकं ग्रन्थाक्षरेणैव अनुमुद्रापितो वर्तते । तस्यैव ग्रन्थभागस्य मुद्रितपुस्तकेऽस्मिन् यत् परिष्कृतं रूपं तस्यापि पुटपङ्क्त्यादिनिर्देशः तत्रैव कृतोऽस्ति। त्रितयमिदं (मातृकापत्रं तत्रत्य ग्रन्थस्य यथावस्थितं स्वरूपं तस्यैव परिष्करणपूर्वकं नागराक्षरेण मुद्रित स्वरूपञ्च) साक्षात्कुर्वतां वस्तुतत्त्वं यथावत्प्रतिभासेतैव । 'एतेन सर्वे व्याख्याताः' ॥

यद्यपि मातृकातः ग्रन्थ मुद्धृत्य मुद्रापयतां सर्वेषामेते विषया अविशिष्टाः, तथापि एतन्मातृकामुद्रापणे न सहसा एकधा निर्णयः समासादयितुं शक्योऽभूत् । 'लेखकः पत्रं दूषयामास' इत्याभाणकः अस्माकं भय मावहतिस्म । अस्मत्प्रयत्नफलतया मा कश्चिदनर्थो भूत् आनुकूल्यमेव किञ्चित् स्यात् – इति सुदृढोऽस्माक मभिनिवेश आसीत् । [1] दोषानुचिन्तनाथां स्मृतिरपि दूरीकरोति वैराग्यम्' इति श्रीमन्निगमान्तगुरु श्रीसूक्त्यनुसारं गुणाधानार्थोऽपि प्रयत्नोऽस्माकं कदाचिदनर्थपर्यवसायी स्याद्वा? इति महती चिन्तास्माक मुदपद्यत । तत एव हेतोः पर्वक्रमेण संभावितनानाप्रकारोल्लेखपूर्वकं कञ्चन मुद्रणप्रकारं निरणैष्म । आदितः आन्तं, मुद्रापितं ग्रन्थमिमं पश्यतां व्यक्तमेवेदं भायात् ॥

अथापरो विषयः इतिकर्तव्यतामौढ्य मस्माक मापादयति स्म । अस्या मातृकाया मध्ये दश पत्राणि लुप्तानि । नैवोपलब्धानि तानि । सर्वेषामेव मातृकापत्राणां सुनिरीक्षितत्वात् लुप्तानां तेषां पत्राणां पुनः प्राप्त्याशाया नैवावकाशः । एवं सति मुद्रणं कथं कर्तव्यम्? विनष्टं ग्रन्थभागं समुपेक्ष्य पुरस्तात्पश्चाच्च विद्यमानो ग्रन्थो मुद्रापयितव्यः । तावदेव । यथा मातृकाया अस्या अनाद्यन्ताया आदावन्ते चानुपलभ्यमानो ग्रन्थभाग स्समुपेक्षित एव, तथैव मध्येऽपि । आद्यन्तहीनेयं मातृका इति पूर्वे निरूपितम् । अस्माभिस्तु एकांशसंयोजनं कृतम् । आदिमध्यान्तहीनेयं मातृकेति परिपूर्णभगवत्स्वरूपसाम्य मस्या स्सुनिरूपित मस्माभिः ॥

---

१ संकल्पसूर्योदये

आदौ चान्ते च लुप्तो ग्रन्थभागोऽधिकतरः। मध्ये लुप्तस्तु न तथा। अल्पीयानेवायं नवमाध्यायद्वितीयपादमात्रात्मकः। तस्मात् मातृकायाः रीतिं सम्यग्मनसि कृत्वा स्वयं नूतनतया शेषं संपूर्य, अच्छिद्रता मातृकाया अत्र संपादयितव्येति मतिरस्माकमासीत्। सरस्वतीमहाल् निर्वाहकेभ्यः अयं भाव आविष्कृतोऽस्माभिः। इदं ते नान्वमन्यन्त। अतो मध्ये विच्छेदमसंमन्यमानैरस्माभिः तत्पादस्य सूत्राणि परं ग्रन्थान्तरात् समुद्धृत्य मुद्रापितानि। तत्रैव चारम्भावसानयोरयमंशोऽधस्तात् टिप्पणस्थाने ज्ञापितश्च वर्तते॥

पाठभेदाः –

सूत्रेषु व्याख्याग्रन्थेषु च तत्रतत्र लब्धप्रसराः पाठभेदाः मुद्रितग्रन्थे अधोभागे टिप्पणरूपेण ज्ञापिता वर्तन्ते। क्वाचित्कतया उपलब्धेषु अनुपपन्नेषु मातृकापाठेषु – यथावस्थितमेव ग्रन्थे मुद्राप्य, अधोभागे तत्रत्यामनुपपत्तिमप्युद्भावितवन्तस्स्मः। इत्थं मातृकागतादोषा यथायथं सुनिरूपिता स्तत्रतत्र। अक्षरदोषाणामपि एवमेव समुद्धारः कर्तव्यो दर्शयितव्यश्च वाचकमहाशयेभ्य इति सावधानं प्रायतिष्महि। समुदधीधराम च सर्वानेवाक्षरदोषान्मातृकागतान् तत्तत्पत्र – पङ्क्ति – संख्यानिर्देशपूर्वकम्। पदवाक्यदोषाणामिवैतेषामक्षरदोषाणामपि तत्रतत्राधोभागे प्रकाशनं न तथा उपपत्तिमत् – आवश्यकञ्चेति मति स्समुदपद्यत। अनुबन्धेषु 'एतदर्थमेकं संयोजयिष्यामः' इति सङ्कल्पितमासीच्चदानीम्। पश्चात् नानाप्रकाराणा मनुबन्धानां मुद्रापणकाले अविस्मरणेन अत्रापि वयं प्रवृत्ता एव। अन्ततः निवृत्ताश्चाभूम। अल्पफलत्वमेवैतत्परित्यागे निमित्तमासीत्। बहुपरिश्रमपूर्वक मेतेषामुद्धृतत्वात् सर्वथा वैयर्थ्यं मा भूदिति कतिपयानामत्र प्रदर्शनं क्रियतेः —

## फलवतीमातृकायां तत्रतत्र परिदृश्यमानाः अक्षरदोषाः

| पत्रे | पूर्वभागे | उत्तरभागे | पंक्तौ | अशुद्धम् | [1]शुद्धम् |
|---|---|---|---|---|---|
| १०० | | ,, | ८ | तत्प्रमाणत्वात् | तत्प्रधानत्वात् |
| १०४ | | ,, | ८ | गम्येतप्राप्ते | गम्येताप्राप्ते |
| १०७ | | ,, | ७ | अपथेति | अपथा इति |
| ११६ | | ,, | १० | अकुर्वतः | कुर्वतः |
| १२१ | | ,, | ३ | यथाकाम्यं | याथाकाम्यम् |
| १२६ | ,, | | २ | तानूनपातो वा | तानूनपातस्य वा |
| १३३ | ,, | | ५ | आनतेषु | अनानतेषु |
| १३६ | ,, | | ८ | पूर्वत्वात्क्रतु | ...पूर्वत्वादक्रतु... |
| १४० | ,, | | ३ | लंभो अनियमेव | लंभोऽनियमेन |
| १४१ | | ,, | ४ | ऐककर्म्यम् | ऐकधर्म्यम् |
| १५४ | ,, | | १२ | ऐकादशिनी | एकादशिनी |
| १५७ | ,, | | ७ | चोदनात्वेन | चोदनाकत्वेन |
| १६१ | | ,, | १२ | सत्रमहीनमिति | सत्रमहीन इति |
| १६३ | ,, | | ६ | तृवृन्त्यहानि | त्रिवृन्त्यहानि |
| १६४ | | ,, | ५ | तृष्टुब्ज.. | त्रिष्टुब्ज ... |
| १६६ | ,, | | ४ | शब्दोऋचि | शब्दऋचि |
| १६८ | | ,, | ९ | प्राकरिणिक | प्राकरणिक |
| १७० | ,, | | १० | अतः पत्नी | अतः न पत्नी .. |
| १७१ | | ,, | ९ | पिष्योर्विवक्षित | पिष्योरविवक्षित .. |
| १७५ | ,, | | ३ | निरुप्तस्याः | निर्वप्तव्याः |
| १७६ | | ,, | ८ | त्रितीयेत्यर्थः | तृतीयेत्यर्थः |
| १७९ | | ,, | ७ | हरिवादिपदं | हरिव आदिपदं |

१ अत्र शुद्धत्वेन प्रदर्शितः पाठ एव मुद्रितपुस्तके दृश्येत। अशुद्धत्वेन प्रदर्शितः पाठस्तु मातृकापत्रेष्वेव दृश्येत ॥

| | | | | | |
|---|---|---|---|---|---|
| १८० | | ,, | ,, | शब्दो अत.. | शब्दोऽत्र ... |
| १९२ | ,, | | १३ | पाशद्वित्वा .. | पाशबहुत्वा .. |
| ,, | | ,, | १० | .. निवर्तते | न निवर्तते |
| १९५ | ,, | | ४ | माच्छयदादिति | माच्छयतादिति |
| १९७ | | ,, | १० | कार्यवचनात् | कार्त्स्न्यवचनात् |
| २०१ | ,, | | ,, | कदाचिदपि चरौ | कदाचिदपि पयसि |
| २०२ | | ,, | ७ | तत् खलु वे | एतत् खलु वै |
| २०४ | | ,, | १२ | आवाहितव्यः | आवाहयितव्यः |
| २०५ | ,, | | ९ | ..प्स्यमानः | ..प्स्यमाणः |
| २०९ | ,, | | २ | यिष्टदेवता.. | इष्टदेवता.. |
| ,, | ,, | | ५ | ...वृद्धं | ...व्यृद्धं |
| २१६ | | ,, | १० | ..ल्लोलवत् | ..ल्लोकवत् |
| २१७ | ,, | | ९ | ..समभवत्.. | ..न समभवत्.. |
| २१८ | ,, | | १ | प्रासे भक्षा.. | प्रासभक्षा.. |
| २३७ | | ,, | | प्रकृतिलिङ्गसं.. | प्रकृतिलिङ्गासं.. |
| २३८ | ,, | | | | |
| २३९ | ,, | | ७ | रण्यो | विरण्यो |
| ,, | | ,, | १३ | पत्न्योऋत्विजां | पत्न्यऋत्विजां |
| २४० | ,, | | ७ | गौद्गुलवा.. | गौग्गुलवा.. |
| ,, | ,, | | १० | ततश्चाप्राकृता.. | ततश्च प्राकृता.. |
| २४१ | | ,, | २ | नाम्नो.. | साम्नो |
| ,, | | ,, | १० | पुनस्सोमस्य | पुनस्स्तोमस्य |
| २४५ | | ,, | ६ | पुरोनुयाज्ययोः | पुरोनुवाक्या-याज्ययोः |
| २४६ | ,, | | ७ | योनावेगेयम् | योनावेव गेयम् |

इत्थं ४६-अबद्धलेखनानि अस्यां मातृकायां आदितः आन्तं लब्धास्पदानि प्रदर्शितानि। १८८-स्थलेषु एवंविधमबद्धलेखनं मातृकायां वर्तते। तत्सर्वं

मातृकापत्र-भाग-पङ्क्त्यादिनिर्देशपूर्वकं समुद्धृतं वर्तत एव । परन्तु नात्र विस्तरशः प्रदर्शितम् । अल्पफलत्वमेवोपेक्षायां कारणम् । यच्चात्र पट्टिकाद्वारा ख्यापितमबद्धलेखनं, यच्चोपेक्षितं, तदुभयमपि मुद्रितपुस्तके नैव लब्धावकाशम् । शोधित एव पाठः मुद्रणं प्रापितः । मातृकायान्तु सर्वमेवेदं सर्वैः सर्वदा द्रष्टुं शक्यमेव । अस्या मातृकाया मुद्रापणे माधारगोषु विपरीतेष्वपि "तथा" अप्रमत्तेन कार्यं कर्तव्यमभूदिति वस्तुतत्त्वं सहृदयेभ्यो वाचकमहाशयेभ्यः आवेदयितुमेवायं अबद्धलेखनप्रकारः उद्धृत्य प्रदर्शित इति सप्रश्रयं निवेद्यते ॥

एतावन्त्यबद्धलेखनानि प्रामादिकान्येव, न बुद्धिपूर्वकाणि इतीदं स्पष्टमेव समेषाम् । एकस्मिन् स्थले परं बुद्धिपूर्वकमेवेद मित्यावेदयितव्यं भवति । मातृकायां २३७ तमस्य पत्रस्यापरभागे, २३८ तमस्य पत्रस्य पूर्वभागे च एकं अबद्धलेखनं विद्यते । तद् न प्रामादिकम्, नवा यादृच्छिकम् । अपि तु बुद्धिपूर्वकमेव । आकरग्रन्थविरुद्धमेवार्थं एतद्वृत्तिकारः लिखितवानत्र । मूलग्रन्थविरुद्धोऽयमर्थ इति नायं न जानाति स्म । तथापि विपरीतमेवार्थं लिखति । अत्र कारणमन्वेष्टव्यं भवति ॥

दशमाध्यायस्य चतुर्थपादस्य प्रथमं सूत्रं, अस्मिन् ग्रन्थे :—[1] "प्रकृतिलिङ्गसंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात्" इति लिखितं वर्तते । तथैव च तन्मुद्रणमारोपित मस्माभिः । तस्य सूत्रस्य यथावस्थितस्वरूपन्तु :—"प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात्" इति । एतद्ग्रन्थव्यतिरिक्तेषु सर्वेष्वेव ग्रन्थेषु विना वैरूप्यं एवमेव तत्सूत्रपाठः विराजते । तदनुसार्येव चार्थवर्णनं तेषु ग्रन्थेषु कृतमस्ति । एतद्वृत्तिग्रन्थे तु "प्रकृतिलिङ्गसंयोगात्..." इत्येव सूत्रपाठमाश्रित्य तदनुसार्येव व्याख्यानमपि कृतं विराजते । अस्मिन्मुद्रितपुस्तके ३७४ पुटादारभ्य ३७७-पुटपर्यन्तेषु चतुर्षु पुटेषु, मातृकागतो ग्रन्थभागः विना प्रमादं तथैव मुद्रापितो वर्तते । तत्र चक्षुः प्रविचालयतां वाचकमहाशयानां इदं वैरूप्यं स्पष्टतरं भायादेव ॥

तत्रत्यव्याख्यायाः विलक्षणत्वं आकरग्रन्थाननुरूपत्वञ्च ख्यापयितुं

---

१ मुद्रितपुस्तके ३७४-तमे पुटे ।

एतत्सूत्रव्याख्यारूपाः शाबरभाष्यपङ्क्तयः परमत्र सन्निधाप्यन्ते[1] :—

अथ दशमाध्यायस्य चतुर्थः पादः ।

( नक्षत्रेष्ट्यादावुपदिष्टैरुपहोमादिभिरातिदेशिकानां नारिष्ठहोमादीनां बाधाभावाधिकरणम् )

सू – प्रकृतिलिङ्गासंयोगा त्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥ (सि)

अस्त्यग्निः, "य एवं विद्वानग्निं चिनुते" इति ।

तत्र नक्षत्रेष्टिः – "अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत । सोऽत्र जुहोति । अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा । अंबायै स्वाहा दुलायै स्वाहा । नितत्न्यै स्वाहा अभ्रयन्त्यै स्वाहा । मेघयन्त्यै स्वाहा वर्षयन्त्यै स्वाहा । चुपुणीकायै स्वाहेति" । इति ॥

सन्ति तु प्रकृतौ नारिष्ठहोमाः "नारिष्ठान्होमाञ्जुहोती" ति ॥

तत्र संशयः — किं नारिष्ठहोमानां निवृत्तिः ? अथवाऽनिवृत्तिः समुच्चयः ? इति ॥

तथा श्येने श्रूयते, "लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ती"ति ॥

अस्ति प्रकृतौ, "निवीतं मनुष्याणां प्राचीनावीतं पितृणां उपवीतं देवानां उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति ॥

तदिह चोदकेन प्राप्तम् ।

तत्र संशयः – किमुपवीतस्य निवृत्तिः ? उतानिवृत्तिः – समुच्चयः ? इति ॥

तथा पृष्ठ्ये षडहे श्रूयते — "मध्वाशयेत घृतं वा" इति ॥

अस्ति तु प्रकृतौ, "पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य" इति ॥

---

[1] अत्र त्रयो वर्णका वर्तन्ते । आद्ये "प्रकृतिलिङ्गासंयोगा" दिति सिद्धान्तसूत्रम् । अन्त्ययोः इदमेव पूर्वपक्षसमर्पकम् । पाठस्तु सूत्रस्य सर्वत्र समान एव ।

तदिह चोदकेन प्राप्तम् ।

तत्र संशयः — किं तस्य निवृत्तिः ? उतानिवृत्तिः — समुच्चयः ? इति ।।

किं प्राप्तम् ? तस्य निवृत्तिरिति । प्रत्यक्षश्रुता उपहोमादयः चोदकप्राप्तानामानुमानिकानां निवर्तका इति । अपि च प्रकृतिलिङ्गसंयोगो भवति 'जुहोति' 'निवीताः प्रचरन्ति' 'आशयेत्' इति । यथा 'शरमयं बर्हिर्भवति' इति शराः कुशान्निवर्तयन्तीति ।।

एवं प्राप्ते ब्रूमः — अनिवृत्तिः समुच्चयः इति । कुतः ? प्रकृतिलिङ्गासंयोगात् । प्राकृतेन लिङ्गेन — कार्येण संयोग एषामुपहोमादीनां नास्ति ।।

१ सहि प्रत्यक्षदर्शनेन वा भवति : — यथा 'नैवारश्चरुः' इति ।।

२ अभावे विधानेन वा भवति : — यथा 'जुहूषा वा एतर्हि वाग्भवति, यर्हि पृष्टयष्षडहस्सन्तिष्ठते । न बहु वदेत् नान्यं पृच्छेत् नान्यस्मै प्रतिब्रूयात् मध्वाशयेत् घृतं वा' इति ।।

३ विकारेण वा : — यथा 'नैर्ऋतश्चरुर्नखावपूतानाम्' इति ।।

४ स्वशब्देन वा भवति : — यथा 'परिधौ पशुं नियुञ्जीत' इति ।।

५ प्रतिषेधेन वा भवति : — यथा 'न गिरा गिरेति ब्रूयात् यद्गिरा गिरेति ब्रूयात् आत्मानं तदुद्गाता गिरेत् । ऐरं कृत्वोद्गेयम्' इति ।।

६ अन्येन वा येनावगम्यते प्राकृतं कार्यममिनिर्वर्तयन्तीति ।।

तदिह न किञ्चिदप्यस्ति । नचैतावता निवृत्तिः, 'इदं प्रत्यक्षश्रुतम् । इदं चोदकेन प्राप्तम् ।' इति । प्रकृतिलिङ्गसंयोगे निवृत्तिर्भवति, नान्यथा ।।

नन्विदानीमेवोक्तं 'भवतीह प्रकृतिलिङ्गसंयोगः 'जुहोति' 'निवीताः प्रचरन्ति' 'आशयेत्' इति ।।

उच्यते । प्राकृतानां जुहोत्यादीनां जुहोत्याद्यन्तराणीमानि विधीयन्ते । तत्र तावज्जुहोतिरदृष्टार्थः । कथमसौ गम्येत ? प्राकृतस्यार्थे वर्तत इति । तथा उपवीतमदृष्टार्थम् । कथं तस्य कार्ये निवीतं वर्तत इति गम्यते ? तथा त्वं

वृत्त्यर्थम्। मध्वशनं घृताशनञ्च तस्मिन्नर्थे वर्तत इत्येतन्न ज्ञायत एव। तस्मान्नास्ति प्रकृतिलिङ्गसंयोगः ॥

अथोच्यते :–नैवोपहोमा जुहोत्यन्तरम्. प्राकृते होमे मन्त्रो विधीयते" इति। तच्च न। विधायकस्याभावात्। 'सोऽत्र जुहोति" इति परिसमाप्ते वाक्ये केवलस्य मन्त्रस्याम्नानम्। नास्ति वचनम्–'एवं जुहोति' इति। भिन्नान्येतानि वाक्यानि। 'सोऽत्र जुहोति' इति विधिवाक्यम्। 'अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा' इत्यादीनि मन्त्रवाक्यानि। तस्मान्न मन्त्रविधानार्थं जुहोतेः पुनःश्रवणम्। होमविधानार्थे श्रुतिर्विधायिका भवति। मन्त्रविधाने वाक्यम्। तस्मादपि न मन्त्रविधानम्। अतः समुच्चयः। उभयमपि प्रमाणेन प्राप्तम्। प्रत्यक्षश्रवणं प्रमाणं, चोदकोऽपि प्रमाणम्। नानाकार्यत्वान्नैतयोर्विरोधः। तस्माद्यथा प्रयाजादीन्न बाधन्ते, एवं नारिष्ठहोमानपि न बाधेरन्। अत एवंजातीयकं कर्मसंस्कारं विकृतावधिकं स्यादिति ॥ १ ॥

सू–चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥

अथ यदुक्तं 'शरमयं बर्हिर्भवति' इति। यथा शराः कुशान्निवर्तयन्ति, एवमिहापीति। अत्रोच्यते। युक्तं शरमये। भवति हि तत्र प्रकृतिलिङ्गसंयोगः। बर्हिश्शब्देनैवं विशिष्टं वा बर्हिर्भवति शरा वा बर्हिषः कार्ये वर्तन्त इति। इहतु प्रकृतिलिङ्गासंयोगः। तस्माद्विषमं बर्हिषेति ॥ २ ॥

(अथवा –सोमारौद्रयागे उपदिष्टैश्शरैरातिदेशिकानां कुशानां बाधनिरूपणम्)

एवं वाः–

सू–प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ ५ ॥

इदमाम्नायते, 'सोमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्' इति। तत्रेदं श्रूयते 'शरमयं बर्हिर्भवति' इति ॥

तत्र संशयः किं कौशं निवर्तते? न? इति ॥

किं प्राप्तम्? उभयस्य प्रमाणावगतत्वात्समुच्चयः ॥

एवं प्राप्ते ब्रूमः —

सू — चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ सि ॥

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेतेति । अस्ति हि तत्र प्रकृतिलिङ्गेन बर्हिश्शब्देन संयोगः । तस्मात्प्राकृतस्य निवृत्तिरिति ॥

(अथवा — वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितरथघोषादिना प्राकृतदर्भमन्त्रयोर्बाधनिरूपणम् )

एवं वा —

सू — प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ पू ॥

अस्ति वाजपेयः, 'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति ॥

तत्र श्रूयते — 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति । दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति ॥

अस्ति च प्रकृतौ, 'उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति' इति । तदिह चोदकेन प्राप्तम् ॥

तत्र संशयः — किं रथघोषेण दुन्दुभिघोषेण यो नादः, स मन्त्रस्य निवर्तकः, यद्द्रव्यं तद्दर्भयोः? उत उभयमुभयस्य निवर्तकम्? इति ॥

किं प्राप्तम्? शब्दत्वेन सामान्येन नादो मन्त्रस्य निवर्तकः, द्रव्यत्वेन द्रव्यं दर्भयोः ॥

ननु तत्पुरुषनिर्देशोऽयम् । तेन परार्थेन रथस्य घोषविशेषणत्वेनोच्चारणं, न स्वकार्येण निर्देशः ॥

अत्रोच्यते । द्वन्द्वनिर्देशोऽपीदृशो भवति । तत्रायमप्यर्थः, न रथः परार्थ उच्चरिष्यते । श्रुतिर्हि तथा हीयेत, लक्षणा च स्यात् । चोदनालिङ्गसंयोगश्च बाध्येत । तस्माद्घोषो मन्त्रस्य निवर्तको द्रव्यं दर्भयोरिति ॥

एवं प्राप्ते ब्रूमः —

सू — चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ सि ॥

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत, उभयस्य चोदनालिङ्गसंयोगो नैकैकस्य। 'रथघोषेण' इति श्रूयते, न 'रथेन घोषेण च' इति। रथविशिष्टो घोषो लक्षणं स्तोत्रोपाकरणस्य। प्रकृतौ दर्भौ लक्षणम्, मन्त्रश्च ॥

नन्विदानीमेवोक्तं द्वन्द्वनिर्देशो भविष्यतीति। नैतदेवम्। द्विवचनं हि तथा स्यात्। एकवचनेन च निर्देशः। तेनैको लक्षणम्, स च घोषः। तेन हि समभिव्याहारस्तृतीयायाः। ननु समुदायेन समभिव्याहारो भविष्यति। नहि। समुदायस्याशब्दार्थत्वात्। अथ समुदायो निर्दिश्येत, ततोऽभ्युपगतमुभयस्य निवर्तकमिति ॥

ननु मन्त्रो वाचक एव 'उपावर्तध्व'मिति। नेत्युच्यते। उपावर्तनमात्रस्याभिधायको मन्त्रः। न चोपावर्तनमात्रं स्तोत्रोपाकरणम्। अथाप्यभिधानं स्यात्, तथापि तस्य निवर्तकः। लक्षणेनोपाकर्तव्यमिति प्रत्यक्षा श्रुतिः। अभिधानेनोपाकर्तव्यमिति चोदकः। श्रुतिश्च चोदकाद्बलीयसी। तस्मादुभयस्य निवर्तको रथघोषो दुन्दुभिघोषश्चेति ॥

किं भविष्यति प्रयोजनम्?

यदि रथो घोषविशेषणम्, अरथविशिष्टोऽपि घोषः स्तोत्रोपाकरणं लक्षयेदिति ॥

अस्मिन्नेव स्थले एतद्ग्रन्थपाठं परिशीलयतां अत्र विद्यमानं तारतम्यं करतलामलकीभवेत्। अत्र किं कारणमिति निरूपयितव्यम् ॥

ग्रन्थकर्ता —

एतद्वृत्तिग्रन्थकर्तार मधिकृत्य यदेव किञ्चिद्विजिज्ञासित मस्माकं; तत्र सर्वत्र आदिमध्यान्तहीनोऽयं ग्रन्थ एक एव शरणम्। नान्यत्। ग्रन्थारंभः — अथवा अवसानं यद्यलप्स्यत, अस्यैव स्वोक्त्या किञ्चिदज्ञास्यत। नत्वेतदुभयमप्यस्ति। अतो विद्यमानग्रन्थभागे — पादाध्यायाद्यवसाने यत्किञ्चिल्लिखितमस्ति, तदवलंबनेन किञ्चिद् ज्ञातुं प्रयतामहे। कुशकाशावलंबनतुल्य मेवैतत् ॥

'अद्वैताश्रमेभ्यो नमः' 'स्वप्नवाराह्यै नमः' 'हयग्रीवाय नमः' इतीदं नमोऽन्तं वाक्यत्रयं तत्रतत्रोपलभ्यते ग्रन्थेऽस्मिन्[1]। 'अद्वैताश्रमिभ्यो अस्मद्गुरुभ्यो नमः' इत्यपि क्वचित्। 'श्रीमते कार्तवीर्यार्जुनाय नमः' इत्यन्यत्र। 'अद्वैताश्रमयतीन्द्रेभ्यो नमः' इतीतरत्र। मातृकातालपत्रेषु विद्यमान मेवेदं यथावत् ग्रन्थेऽस्मिन् मुद्रित मस्ति ॥

एतस्मा दिद मवगम्यतेः – यत् अयं स्वप्नवाराहीनाम्न्या देवताया उपासकः, हयग्रीवोपासकः, कार्तवीर्यार्जुनोपासकः, अद्वैताश्रमिनाम्नां यतिवरेण्यानां शिष्यः इति ॥

एतदुपास्यदेवतानामसंकीर्तनवशात् अयं तत्तद्देवताभक्त इत्यतोऽधिकं न किञ्चि दवगम्यते। अद्वैताश्रमयतीन्द्र इति स्वाचार्यनाम यदयं कीर्तयति, ततस्तु किञ्चिदस्य कालादिक मवगन्तुं शक्यम्। एतदाचार्यभूता एते अद्वैताश्रमिणः कस्मिन् काले कं भारतदेशभाग मलञ्चक्रुः इत्यादिकं ज्ञातव्यम्। तत्तु नकिञ्चित् ज्ञायते। स्वतो विरक्तानां सर्वसङ्गविमुक्ताना मेतेषां यतिवराणां स्वनाम - देश - कालादि - प्रख्यापनेऽपि न तथा आभिमुख्य मासीदिति तर्कयामः। अत एव तानधिकृत्य न किमपि ज्ञायते। अत एव चास्मिन्नुपोद्घाते ११ पुटे अस्य ग्रन्थकर्तुः आचार्यशिष्यादिविषये न किञ्चित् स्पष्टं ज्ञायते इत्युक्तम् ॥

अन्यच्चात्रावधान मर्हति। इयं मातृका केन लिखिता? किं ग्रन्थकर्त्रैव स्वहस्तेन? अथवा शिष्यद्वारा लेखिता? आहोस्वित् इद मुभय मतिक्रम्य केनाप्यन्येन विदुषा प्राचीनां मातृकामवलम्ब्य पश्चात्काले लिखिता? एतन्निर्णयाधीनः पूर्वोक्तविषयनिर्णयो भवति। यदि ग्रन्थकर्त्रैव लिखितेयं मातृका, तदा उपास्यदेवताऽऽचार्यादिकीर्तनं ग्रन्थकर्तु रेव संबंधि भवेत्। यदि तु प्रबन्धप्रणेतु रन्येन लिखितेयं स्यात् तदा नायं निर्बन्धः। लेखको हि स्वस्याप्युपास्यदेवतां स्वाचार्यनामापिच स्वेन लिख्यमानेषु ग्रन्थेषु तत्रतत्र

१ एतद्ग्रन्थे २, १७, ४४, २०६, २३६, २८४, ३७३, पुटेषु इदं द्रष्टुं शक्यम्।

लिखेदेव। तेन हेतुना नैकान्ततो निर्णेतुं शक्यं स्यात्। फलवतीनाम्न्या अस्या मीमांसासूत्रवृत्ते विषये तु, ग्रन्थकर्त्रैव स्वहस्तेनैव लिखितेयं मातृके त्यस्माक मभ्यूहः। तत्रेमानि कारणानि :–

(१) अतिचिरन्तनी इयं तालपत्रात्मिका मातृका पञ्चषशतवर्षेभ्यः पूर्वं प्रादुर्भूता स्यात् ॥

(२) लेखनशैली च तात्कालिकी भवितु मर्हति ॥

(३) एतद्ग्रन्थकर्तु रपि तात्कालिकता संभाव्यते ॥

इम मस्मदभ्यूहं द्रढयितुं पूर्वोक्तेषु द्वितीयं विषयं प्रथमतरं प्रदर्श्य तृतीयं विषयं ततः परस्तान्निरूपयामः ॥

लेखनशैली :–

एतन्मातृकालेखकः ग्रन्थाक्षरलेखनसंप्रदाये अतितरां निष्णात इति संभाव्यते। तथा अधीती वेदेषु चेति; तमिळ् अक्षरलेखने तेलुंगु अक्षरलेखने च स्वारसिकोऽस्य परिचयभूमा इति च। क्रमशः सोपपत्तिकं निरूपयामः ॥

(१) ग्रन्थाक्षरलेखकाः प्राचीनाः 'अ' इतीद मक्षरं, '[illegible]' इति ' ' इति च लिखन्ति। तदुभयमपि सङ्कीर्णमस्यां मातृकायां तत्रतत्र ॥

(२) 'कर्म' 'अर्क' 'निर्दिष्ट' इत्यादौ, 'कर्म्म' 'अर्क' 'निर्द्दिष्ट' इति हलक्षराणां द्वित्वलेखनं प्राचां ग्रन्थाक्षरलेखकानां परिचितम्; तथा वेदाध्ययनपरिचयवता मपि। इद मुभयमप्यस्यां मातृकायां भूयिष्ठ मुपलभ्यते ॥

(३) रेफस्य हलन्तरेण संयोगे तन्निर्देशप्रकारो द्वेधा ग्रन्थाक्षरलेखकैः क्रियते। 'अर्क' इतीदं, '[illegible]' इति लिखेयुः, '[illegible]' इति च। उभयप्रकार मपि लेखनं मातृकाया मस्या मुपलभ्यते ॥

---

१ No. B. 9598. फलवती 142 तमे पत्रे पूर्वभागे 11 पङ्क्तौ।

२ ,, ,, ,, ,, 149 ,, ,, ,, 7&8 ,,

३ ,, ,, ,, ,, ,, ,, ,, ,, ,, ,,

(४ तालपत्रेषु शिताग्रेण आयसेन आणिना लिखन्ति । तदा प्रमादादनपेक्षिताक्षरलेखन मसकृदापतेत् । लिखितस्याक्षरस्य दूरीकर्तु मशक्यत्वात्, तस्योपेक्षणीयतां प्रदर्शयितुं तदुपरि ... एवं सूक्ष्मान् बिन्दून् उल्लिखेयुः । तदस्यां स्वाभाविकं दृश्यते ॥

(५) 'र' इत्ययं वर्णः, ग्रन्थाक्षरे 'ற' इति लिख्यते सांप्रदायिकैः । अस्यान्तु 'ற' इति '  ' इति च उभयथा लिख्यते ॥

(६) 'ना' इतीद मक्षरं, ग्रन्थाक्षरे, 'நா' इति लिख्यते । अस्यान्तु तथापि लिख्यते, 'ணா' इति च । 'कृष्णाष्टमी' इति पदं, 'க்ருஷ்ணாஷ்டமீ' इति लिखित मत्र । 'க்ருஷ்ணாஷ்டமீ' इति तु लेखनं युक्तम् ॥

(७) 'उत्पादनार्थं' इतीदं, ग्रन्थाक्षरे, 'உத்பாதநார்த்த' इति लिख्येत । अत्र तु 'உத்பாதநாணு' इति लिखित मस्ति ॥

(८) '११,' इतीयं संख्या, द्राविडसंप्रदाय मनुसृत्य '௰க' इति ग्रन्थाक्षरलेखकैरपि लिख्येत । अत्रापि तथा लेखनमस्ति । क्वचित्तु '௰/க' इति लिखितमस्ति ॥

(९) १-२-३-४-५-६-७-८-९-१० इत्यादिसंख्यानिर्देशः ग्रन्थाक्षरलेखकैः க-௨-௩-௪-௫-௬-௭-௮-௯-௰ इत्येव द्राविडसंप्रदायानुरोधेन लिख्यते । अयं संप्रदायोविकलं अनुसृतोऽत्र ॥

---

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ४ | No. B. 9598. | फलवती | 105 | तमे | पत्रे | उत्तरभागे | 7 & 8 | पङ्क्तौ। |
| | ,, | ,, | ,, | 111 | ,, | ,, | ,, | 9 | ,, |
| ५ | ,, | ,, | ,, | 147 | ,, | ,, | पूर्वभागे | 3 | ,, |
| ६ | ,, | ,, | ,, | ,, | ,, | ,, | ,, | ,, | ,, |
| ,, | ,, | ,, | ,, | 122 | ,, | ,, | ,, | 2 | ,, |
| ७ | ,, | ,, | ,, | 106 | ,, | ,, | उत्तरभागे | 10 | ,, |
| ८ | ,, | ,, | ,, | 202 | ,, | ,, | पूर्वभागे | 8 | ,, |

(१०) 'साम्नो' इतीदं, ग्रन्थाक्षरे ஸாமநோ इति लिख्येत। अत्र तु 'नाम्नो' इति (நாமநோ) प्रमादाल्लिखित मस्ति। अत्र 'सा' इत्यस्य स्थाने 'ना' इत्यक्षरं प्रमादाल्लिखितम्। तेलुंगु अक्षरलेखनपरिचयमूलकमेवेदम्। तत्रैव 'स' कार 'न' कारयोः स्वल्पतरभेदेन ऐकरूप्यभ्रान्ति प्रसङ्गसंभावना भवति। 'स' इतीद मक्षरं 'స' इति लिख्यते तैलंगैः। तथा 'न' इतीदं, 'న' इति तैर्विलिख्यते। अल्पभेदत्वात् असकृत् प्रामादिकं व्यत्यस्तलेखनं तेषां शक्य-संभावनम्। तदत्र लब्धास्पदम्॥

एवं ग्रन्थाक्षरलेखनस्य, तैलङ्गाक्षरलेखनस्य, तमिल् अक्षरलेखनस्य च एकैकस्मिन्नपि अन्तर्वाणिजने स्वाभाविकतया परिचयातिशयो नायकराजाना-माधिपत्यकाले, तदव्यवहितपूर्वकाले च बभूव। चोलराजकाले ग्रन्थद्राविडाक्षर-लेखनसंप्रदायः स्वारसिको दक्षिणदेशं व्याप्नोति स्म। तदनन्तरप्रवृत्तो नायक-राज्यकालः। नायकराजानां तेलुंगुभाषा मातृभाषा। अतः तत्परिज्ञानं राजकुल-वाल्लभ्यार्थं जनानां—विशिष्य अन्तर्वाणिजनानां अत्यावश्यकं बभूव। पूर्व-परिचितयोः ग्रन्थद्राविडाक्षरयो रपि लेखनसंप्रदायो नोच्छेदं प्राप। अतः त्रयाणां संप्रदायानां सङ्करकालो नायकराजकालः तदव्यवहितपूर्वकालश्च। स एव चास्य फलवतीग्रन्थकारस्य कालः स्यादिति संभाव्यते। अत एव चाक्षरत्रय-लेखनसंप्रदायसाङ्कर्यं फलवतीमातृकाया मध्यक्षयामः॥

तञ्जावूर् सरस्वतीमहाल् ग्रन्थालये त्रिविधा मातृका विलसन्ति—ग्रन्थाक्षर-मय्यः, तेलुंगु अक्षरमय्यः, देवनागरीलिप्यङ्किताश्चेति। तासु प्राचीनतराः ग्रन्थाक्षरमय्य एव। प्राचीनास्तु तैलंगाक्षरमय्यः। अर्वाचीनास्तु देवनागरी-लिप्यङ्किताः। इमं विषयं परिशीलयतां पूर्वोक्तं तत्त्वं स्फुटतरं भायादेव॥

ग्रन्थकालः—

प्रकाशान्तरेणापीम मेवार्थं प्रतिष्ठापयामः। एतद्ग्रन्थ प्रणयनकालः कः? इति निर्णये इय मेव मातृका शरण मस्माकम्। अयं फलवती ग्रन्थकारः यानेवान्यान् पूर्वमीमांसाग्रन्थकर्तॄन् ग्रन्थान्वा स्वग्रन्थे निर्दिशति तेषां पङ्क्तिका[1]

---

१० No. B. 9598. फलवती 24। तमे पत्रे उत्तरभागे 2 पंक्तौ।

१ अनुबन्धः VIII

अस्मिन्मुद्रितग्रन्थे संयोजिता वर्तते । शबरस्वामिविरचितं भाष्यं, कुमारिलभट्टविरचितं वार्तिकं, पार्थसारथिमिश्रविरचितं तन्त्ररत्नञ्चायं तत्रतत्रोदाहरति । अतः तेभ्योऽर्वाचीनोऽयमिति ताव द्विवादम् । पार्थसारथिमिश्रस्य कालः 10 0 to 1120 A. D. इति निर्णीतो वर्तते । ततः पश्चादेवास्य ग्रन्थस्य प्रादुर्भाव इति निश्चप्रचम् ॥

अथान्येन हेतुना शास्त्रदीपिकाव्याख्यातुः सोमनाथा दप्यर्वाचीनत्व मेतद्ग्रन्थकारस्य संभाव्यते । सोमनाथदीक्षितस्य कालः 1600 A.D. इति निर्णीतः ॥

दशमाध्यायस्य प्रथमपादे [1]दशमाधिकरणं 'आज्यभागाग्न्यधिकरणम्' इति व्यपदिश्यते । अस्मिन्नधिकरणे सिद्धान्ते विरुद्धत्रिकद्वयसमावेशाख्यो दोष उद्भाव्यते । सोमनाथदीक्षितविरचितायां शास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां अयं विषयः स्पष्टतरमुच्यते :—

'एकस्मिन्वाक्ये अग्नेः संस्कार्यतया प्राधान्योद्देश्यत्वानुवाद्यत्वानि, सोमस्य यागनिर्वर्तकतया गुणत्वोपादेयत्वविधेयत्वानीति विरुद्धत्रिकापत्त्या वाक्यभेदः स्यादित्यर्थः'

इति तत्रत्यानि वाक्यानि ॥

फलवतीग्रन्थे च :—

'... आज्यभागयोरन्यतरस्य संस्कारकत्वं, अन्यतरस्यारादुपकारकत्वमिति वक्तु मशक्यत्वात्, तदुक्तौ च त्रिकद्वयदूषणापत्तेः, सौमिकाज्यभागवदेवाग्नेयाज्यभागोऽप्यारादुपकारक एव' इति वाक्यं दृश्यते ॥

अत्रानयोर्ग्रन्थयोः अर्थतश्शब्दतश्च सादृश्यस्य स्पष्टतरत्वात् अनयो रन्यतरस्यो पजीव्यत्वकल्पन मुपपन्नं भवेदिति संभावनाया अस्त्यवकाशः । तेन सोमनाथदीक्षिता दप्यर्वाचीनत्वं अस्या वृत्तेः कल्पयितव्यं भवति । अय मप्यूहः न तथा उपपत्तिमानिति भाति । परस्परनैरपेक्ष्येणापि ग्रान्थिकाना मेवं लेखनं संभावित मेव । अस्याः फलवतीमातृकायाश्च पञ्चपञ्चशतसंवत्सरप्राचीनत्वं अशक्यापह्नवम् । तस्मात् अत्र शैथिल्यमेवास्माकम् ॥

---

१ एतद्ग्रन्थरीत्या गणनेयम् ।

पार्थसारथिमिश्रादनन्तरकालिकत्वमेतद्ग्रन्थकारस्य सुनिश्चितमेव । ततः पश्चात्तनेषु मीमांसाग्रन्थेषु अस्या वृत्तेः कुत्रापि निर्देशो वर्तते वा? इति परिशीलनं कर्तव्यम् । तेन कथञ्चिदस्या वृत्तेः कालनिर्णयः साध्यस्स्यात् । तथाविधाश्च ग्रन्थाः मुद्रणमारोपिताः प्राकाश्यं नीताः बहवः । इदानीं यावत् अमुद्रापिताः मातृकारूपेणैव-सरस्वतीमहाल् ग्रन्थालये अन्येषु च मातृकालयेषु—अप्रकाशतया वर्तमानाश्च बहवः । तेषु सर्वेषु ग्रन्थेषु सावधानं अन्तः प्रविश्यान्वेषणं बह्वायाससाध्यमिति परित्यक्त मस्माभिः । उपलभ्यमाने त्वस्मिन् ग्रन्थे तत्र-तत्र निर्दिष्टानां प्राक्तनग्रन्थानां ग्रन्थकर्तॄणाञ्च पट्टिका निपुणनिरूपणपूर्वकमस्माभिस्संपादिता, अस्मिन्नेव मुद्रितपुस्तके अष्टमानुबन्धत्वेन संयोजिता च वर्तत एव । तदवलोकनेन शाबरभाष्ये तद्व्याख्यारूपे भट्टकुमारिलविरचिते वार्तिके तद्व्याख्यारूपे तन्त्ररत्ने च एतद्ग्रन्थकारस्य परिचयातिशयः विस्पष्टं ज्ञायते । अतः तै ग्रन्थैस्सह एतस्या वृत्तेः तोलनं स्थालीपुलाकनीत्या कतिपयस्थलेषु कुर्मः । वाचका विद्वांसः स्वयमेव शेषं पूरयन्तु ॥

शाबरभाष्यं फलवती च—

शाबरभाष्यं पुण्यनगरमुद्रितमेवात्र समवलम्ब्य तोलनं क्रियते । शाबरभाष्ये अनुपलभ्यमानानि (शाबरभाष्यसहित जैमिनिसूत्रेषु—शबरस्वामिना अव्याख्यातानि—अर्थात्—अनुल्लिखितानि) कानिचित् जैमिनिसूत्राणि फलवतीग्रन्थे सूत्रक्रमे निर्दिष्टानि व्याख्यातानि च दृश्यन्ते ॥

तादृशानां सूत्राणामकाराद्यनुक्रमणी[1]चास्मिन् मुद्रितपुस्तके पार्थक्येन दत्ता वर्तते । तस्यामेवंविधानि सूत्राणि सर्वाण्येव द्रष्टुं शक्यानि । तानि च निपुणनिरूपणे द्विप्रकाराणि भवन्तीतीदमवागच्छाम ॥

१ वस्तुतः शाबरभाष्ये अनुपलभ्यमानानि सूत्राणि ।

२ शाबरभाष्यस्थानि वाक्यान्येव अस्मिन् फलवती ग्रन्थे सूत्रवल्लिखितानि ।

आदौ इदं तारतम्यमस्माभिर्न ज्ञातमभूत् । फलवती मातृकाया अत्यन्तप्राचीनत्वात् अपूर्वाणि सूत्राणि बहूनि खनिप्रदेशोद्धृतसुवर्णतुल्यानि इदं—

---

१ अनुबन्धः II

प्रथमतया प्राकाश्यं नेष्यन्ते इति सुमहान् संरंभोऽस्माकमुदपद्यत । कृते तु निरूपणे वस्तुतत्त्वं करतलामलकीकृतमभूत् । कानिचिदेव सूत्राणि तथाविधानि । भूयिष्ठानि तु शबरस्वामिविरचितभाष्यस्थपङ्क्तिरूपाणि अस्मिन् ग्रन्थे सूत्रवल्लिखितानि च ॥

एवंविधानि सूत्राणि एकोनविंशतिः । तेषु चत्वार्येव शाबरभाष्ये अनुपलभ्यमानानि सूत्राणि –

१ तथा चान्यार्थदर्शनम् ।

२ न शेषभूतत्वात् ।

३ न वा प्रयोगसमवायित्वात् ।

४ सङ्ख्या चापि कपालवत् ।

इति । एतान्यधिकृत्यावश्यवक्तव्यं किञ्चिदुच्यते ॥

एतेष्वाद्यं सूत्रं मुद्रिते पूर्वमीमांसादर्शने सूत्रत्वेन नैव निर्दिष्टम् । शबरस्वामिना तु भाष्ये अनूद्यते । तदत्र सूत्रीकृतम् । द्वितीयन्तु शाबरभाष्ये सूत्रद्वयात्मना निर्दिष्टयोर्व्याख्यातयोश्च सूत्रयोः स्थाने एकमेव सूत्रमस्मिन् ग्रन्थे परिकल्पितम् । तेन विवक्षिततात्पर्यनिरूपणं न तथा स्वरसतरम्, यथा शाबरभाष्ये सूत्रद्वयेनेदं क्रियत इति । सहृदया एवात्र प्रमाणम् ॥

तृतीयन्तु सूत्रं वस्तुतः शाबरभाष्येऽविद्यमानमेव । अत एवात्र शाबरभाष्ये – '[1]तत्रोत्सूत्रिका पक्षव्यावृत्तिः' इत्युपक्रम्य व्याख्यानं क्रियते । तत्रैव च टिप्पण्यां अयं विषयो व्यक्तीकृतः । 'इदं च सूत्रं भाष्यकारैरदृष्ट्वा, 'तत्रोत्सूत्रिका पक्षव्यावृत्ति' रित्युक्तम् । वार्तिककारेण त्वनपभ्रष्टेषु

---

१ पू. मी. द. (फलवतीग्रन्थे) ६–३–१९ (४० शं सूत्रम्)

२ „ „ ६–४– ४ (१४ „ „ )

३ „ „ ६–८– ९ (३६ „ „ )

४ „ „ १०–१-१३ (४६ „ „ )

1 पू. मी. द. (पुण्यपत्तनमुद्रणम्) ६–८–९ (३७ „ सूत्रम्)

पुस्तकेषु दृष्ट्वा पठितमिति तन्त्ररत्नकारा आहुः' इति वाक्यानि तत्रत्यटिप्पणग्रन्थे दृश्यन्ते। अतः भाष्यकारेणानुपलब्धानि कानिचित्सूत्राणि भाष्यव्याख्यात्रा वार्तिककारेण भट्टकुमारिलेन दृष्टानीति विज्ञायते । तथाविधेष्वन्यतममिदं सूत्रमिति निश्चीयते। वार्तिककारादर्वाचीनोऽयं फलवतीग्रन्थकारः तदुपदर्शितमार्गेणैव यातीति सर्वमवदातम् ॥

स्थलान्तरेऽपि परिदृश्यत एवंविधस्संभवः । तृतीयाध्याये चतुर्थपादे नवमं सूत्रं 'विधिना चैकवाक्यत्वात्' इति। दशमं सूत्रं 'दिग्विभागश्च तद्वत् संबन्धस्यार्थहेतुत्वात्' इति । तत्रभवता शबरस्वामिना भाष्यकारेण अनयोस्सूत्रयोः अव्यवहितं पौर्वापर्यमङ्गीकृत्य व्याख्यानं कृतम्। अनयोरन्तराले षट् सूत्राणि सन्ति। नतु तानि भाष्यकारेण व्याख्यातानि। यदि तान्यपि तेन व्याख्यातान्यभविष्यन्, तदा दशमस्य 'दिग्विभागश्च .... ....' इत्यस्य सूत्रस्य क्रमप्राप्ता संख्या सप्तदशत्वरूपाऽभविष्यत् । दशमत्वेनैव तु सङ्ख्यातमिदं भाष्ये। अत्र वार्तिककारः तानि षट्सूत्राणि स्वयं विलिख्य व्याचख्यौ। तानि च सूत्राणि—

१ उपवीतं लिङ्गदर्शनात्सर्वधर्मस्स्यात्।

२ नवा प्रकरणात्तस्य दर्शनम्।

३ विधिर्वा स्यादपूर्वत्वात्।

४ उदक्त्वञ्चापूर्वत्वात्।

५ सतो वा लिङ्गदर्शनम्।

६ विधिस्तु धारणेऽपूर्वत्वात्।

इति निर्दिष्टानि व्याख्यातानि च तत्रभवता भट्टकुमारिलेन वार्तिककारेण ॥

अतत्यास्तन्त्रवार्तिकपङ्क्तयो वस्तुतत्त्वनिर्णयाय सहृदयानां पुरस्तादुपस्थाप्यन्ते—

"अतः परं षट् सूत्राणि भाष्यकारेण न लिखितानि। तत्र व्याख्यातारो विवदन्ते। केचिदाहुर्विस्मृतानि। लिखितो ग्रन्थः प्रलीन इत्यपरे। फल्गुत्वादुपेक्षितानीत्यन्ये। अनार्षेयत्वादित्यपरे। तथा च 'दिग्विभागश्च तद्वत्' इति निवीताधिकरणातिदेशस्तदानन्तर्यादुपपद्यत इति । वृत्त्यन्तरकारैस्तु सर्वैर्व्याख्या-

तानि। सन्ति च जैमिनेरेव प्रकाराण्यप्यनत्यन्तसारभूतानि सूत्राणि । व्यवहिताातिदेशाश्च 'पानव्यापच्च तद्वत्' इत्यादिष्वाश्रिताः। तस्मात्सूत्रमात्रं व्याख्येयम्। तत्र कैश्चित् त्रीण्यधिकरणानि कल्पितानि। अपरैश्चत्वारि। प्रथमन्तावदिदं चिन्त्यते। ... ... ... ... ... ... ... ... ... ... .. ... ... ... ..." इति। एवमुपन्यस्तेषु पक्षेषु चतुरधिकरणात्मकत्वपक्षमाश्रित्य व्याख्यानञ्च कृतं विराजते तत्रभवता वार्तिककारेण। एवंविधः संदर्भः शास्त्रान्तरेष्वपि तत्रतत्र समुपलभ्यत एव। तादृशेष्वन्यतम एवायं विषय इति सुधीभिर्विभावनीयम् ॥

चतुर्थन्तु सूत्रं भाष्ये पार्थक्येन–सूत्रात्मना अलिखितमप्यर्थतोऽनूद्यत एव। अयञ्च तत्रत्यो भाष्यग्रन्थः–

"... ... ... ... यदि हि कपालं चोदकेन प्राप्येत, कपालवच्चोदकेन सङ्ख्यापि प्राप्येत। ... ... ... ... ... ... ... ... सङ्ख्या चापि कपालवदिति यदुक्तं, तत्परिहर्तव्यम् ॥

सू–एकस्मिन्वा विप्रतिषेधात् ॥ ४६ ॥

यदि बहुषु कपालेषु न शक्यते चरुः पक्तुं, विप्रतिषेधादेकस्मिन् पक्तव्यः ॥ ... ..." इति।

अत्र पूर्वसूत्रव्याख्यानावसरे भाष्यकारेण स्वोक्तिरूपत्वेनोद्भावित आक्षेपः अस्मिन् सूत्रे अवतारिकायामनूद्यते, 'एकस्मिन्वा विप्रतिषेधा' दिति सूत्रेण तत्परिहारश्च क्रियते। यदि आक्षेपोऽपि सौत्र एव भवेत्–समनन्तरसूत्रेण तत्परिहार उपपन्नतरस्स्यादेव। इदानीं मुद्रिते भाष्यग्रन्थे तु 'सङ्ख्या चापि कपालवत्' इति सूत्रं नास्ति। भवितव्यन्तु तेन। तदेवास्मिन् फलवतीग्रन्थे कृतं दृश्यते। उपपन्नतरमिदम् ॥

भाष्यकारस्यापि शैली एवंविधैव दृश्यते। यत्र परिहारमात्रं सूत्रे दृश्यते, नत्वाक्षेपः; तत्र 'इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम्' इति अवतारिका दीयते भाष्ये। यत्रतु सौत्र एवाक्षेपः परिहारश्च, तत्रैव 'यदुक्तं ... तत्परिहर्तव्यम्' इत्यवतारिका दीयते। प्रकृतविषये च भाष्यशैल्या आक्षेपस्यापि सौत्रत्वं भासत इव ॥

अत्र फलवतीग्रन्थे तालपत्रस्य भग्नप्रमुषितत्वात् नापेक्षितो निर्णयस्सुशको भवति। उपलभ्यमाने च ग्रन्थभागे '... अन्त्रितपक्षानुवादप ...' इति पङ्क्तिः दृष्यते। अपूर्णेयं पङ्क्तिः। यदीयं पूर्णा समुपालप्स्यत, ग्रन्थकर्तुस्तात्पर्यमपि सुविदितमभविष्यत्। न त्वेतदस्ति। भाष्यशैलीरसिका विद्वन्मणयोऽत्र निर्णयं कुर्वन्तु ॥

इत्थं फलवत्यां उपलभ्यमानानां ग्रन्थान्तरेष्वनुपलभ्यमानानां एकोनविंशतिसूत्राणां मध्ये चत्वारि सूत्राणि पृथगवधानार्हाणि निरूपितानि। अन्यानि तु पञ्चदशसूत्राणि न तथा मुख्यानि। तानि हि शाबरभाष्यस्थ वाक्यरूपाण्येव; न जैमिनिप्रणीतसूत्ररूपाणि। इदञ्च तत्रतत्र टिप्पण्यामेव स्पष्टीकृतमस्माभिः। भाष्यलक्षणं हीत्थं वर्णयन्ति —

सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते तद्भाष्यं भाष्यलक्षणम् ॥

इति तत्र 'स्वपदानि च' इतीदं, भाष्यकारेण सूत्रतुल्यतया स्वयं परिकल्प्य तत्र विलिखितस्य स्वपदस्य' स्वयमेव व्याख्यानस्य च निर्देशकम्। तत्स्वपदमेवैतद्ग्रन्थकारः सूत्रवत् विलिख्य व्याख्यातवानित्येतावदेवात्र तत्त्वम्। ऐकैकश्येन तत्तत्स्थले टिप्पण्यां निर्दिष्टमेवेदमस्माभिः ॥

व्याख्याभेदः—

इतः परं फलवतीवृत्तौ भाष्यग्रन्थापेक्षया, व्याख्यानेऽन्यथाभावं विवरिष्यामः। ५१ स्थलेषु एवंविधो व्याख्याभेदः ग्रन्थेऽस्मिन् परिदृश्यते। तेषामाद्योऽयम्;

षष्ठाध्याये द्वितीयपादे प्रथमाधिकरणं सूत्रद्वयात्मकम्। तत्र द्वितीयं सूत्रं:—

'अपि वोत्पत्तिसंयोगाद्यथा स्यात्सत्त्वदर्शनं तथाभावो विभागे स्यात्'

इति। अत्र शाबरभाष्ये 'अविभागे स्यात्' इति पदच्छेदपूर्वकं व्याख्यातम्। अस्मिन् फलवतीग्रन्थे तु 'विभागे स्यात्' इत्येव पदच्छेदपूर्वकं व्याख्यानं कृतम्। सूत्रपाठस्तु उभयथापि पदच्छेदस्यानुकूलो वर्तते। उभयविधापि व्याख्या समुचितैव दृश्यते। एवमेवान्यत्रापि। विस्तरपरिजिहीर्षया तादृशस्थलानि परं पङ्क्तिकात्मना प्रदर्शयामः —

| क्रमाङ्कः | अध्याये | पादे | अधिकरणे | सूत्रे |
|---|---|---|---|---|
| २ | ६ | ३ | १४ | ३१ |
| ३ | ,, | ४ | ७ | १४ (प्रयोजने) |
| ४ | ,, | ५ | १५ | ४७ (प्रयोजने) |
| ५ | ,, | ६ | ५ | ३५ |
| ६ | ,, | ,, | ६ | ३७ |
| ७ | ,, | ७ | ७ | १३ |
| ८ | ,, | ,, | १३ | ३३–३४ |
| ९ | ,, | ८ | ५ | २४ |
| १० | ७ | १ | ,, | २३ |
| ११ | ,, | २ | १ | ६ |
| १२ | ,, | ४ | ,, | १ |
| १३ | ,, | ,, | ३ | १६ |
| १४ | ८ | १ | १५ | २६ |
| १५ | ,, | ,, | १९ | ३७ |
| १६ | ८ | २ | ३ | १६ |
| १७ | ,, | ,, | ५ | २५ |
| १८ | ,, | ,, | ६ | २७ |
| १९ | ,, | ३ | ,, | ११ |
| २० | ,, | ,, | ,, | २० |
| २१ | ,, | ४ | ५ | १४ |
| २२ | ,, | ,, | ,, | १६ |
| २३ | ९ | १ | ८ | २७ (प्रयोजने) |
| २४ | ,, | ,, | १५ | ३९ |
| २५ | ,, | ,, | २२ | ५४ |
| २६ | ,, | ३ | २ | ७ |
| २७ | ,, | ,, | ४ | १२ |
| २८ | ,, | ,, | ११ | ३० |

| क्रमाङ्कः | अध्याये | पादे | अधिकरणे | सूत्रे |
|---|---|---|---|---|
| २९ | ९ | ,, | १३ | ४० |
| ३० | ,, | ४ | ९ | ३६ |
| ३१ | ,, | ,, | ११ | ४३ |
| ३२ | ,, | ,, | १३ | ४९ |
| ३३ | ,, | ,, | १४ | ५७ |
| ३४ | १० | १ | १४ | ५१ |
| ३५ | ,, | २ | ७ | २१ |
| ३६ | ,, | ,, | ९ | ३० |
| ३७ | ,, | ,, | ११ | ३७ |
| ३८ | ,, | ३ | १ | ४ |
| ३९ | ,, | ,, | २ | १६ |
| ४० | ,, | ,, | ३ | २२ |
| ४१ | ,, | ,, | ६ | ३४ |
| ४२ | ,, | ,, | ११ | ४१ |
| ४३ | ,, | ,, | १८ | ६५ |
| ४४ | ,, | ४ | ६ | ७ |
| ४५ | ,, | ,, | ८ | ११ |
| ४६ | ,, | ,, | ९ | १३ |
| ४७ | ,, | ,, | १५ | २१ |
| ४८ | ,, | ,, | १७ | २५ |
| ४९ | ,, | ,, | ,, | २६ |
| ५० | ,, | ,, | २३ | ३८ |
| ५१ | ,, | ,, | २७ | ४६ |

एतेषां प्रातिस्विकरूपेण निरूपणे विस्तरस्यावश्यंभावितां प्रतिसंदधानैरस्माभिस्तत्परिजिहीर्षया प्रथमस्यैकस्यैव व्याख्याभेदस्य व्यक्तं निरूपणं कृतं स्थालीपुलाकनीत्या । अत्रशिष्टानां स्थाननिर्देशमात्रं कृतम् । रसिका विद्वन्मणयस्तावतैव विवक्षिते स्थले अन्तः प्रविश्य निरूप्य तृप्ता भविष्यन्तीति ॥

फलवती - वार्तिकञ्च

अतः परं भट्टकुमारिलप्रणीतस्य वार्तिकस्य प्रकृतग्रन्थस्य च परस्परसंबन्धं कतिपयेषु स्थलेषु प्रदर्शयामः ॥

षष्ठाध्याये सप्तमे पादे अष्टममधिकरणम् –

'अहर्गणे च तद्धर्मा स्यात्सर्वेषामविशेषात्'

इत्यादिसूत्रचतुष्टयात्मकम् । अत्र वार्तिककारीयं सिद्धान्तदूषणं अस्मिन् ग्रन्थे नैवोपन्यस्तम् ॥

तथा '[1]सौमिकन्तु प्रणयनमवाच्यं हीतरत्' इत्यत्र वार्तिककारीयं योजनान्तरं नामतो निर्दिश्य, '[2]इहतु विस्तरभयान्न लिख्यते' इति एतद्ग्रन्थकारो लिखति ॥

षष्ठाध्याये सप्तमपादे अष्टमाधिकरणं 'अहर्गणे च तद्धर्मा स्यात्सर्वेषामविशेषात्' इति सूत्रेण उपक्रमते । अत्र अहर्गणस्याष्टरात्रस्याद्यो विश्वजिद्यागः । तत्र नामातिदेशेन धर्मग्रहणं भाष्यकारो मन्यते । तेनास्मिन्नपि विश्वजिति सर्वस्वं दक्षिणा इति सिद्धान्तितं शाबरभाष्ये । तदेवास्मिन्नपि फलवतीग्रन्थेऽनुसृतम् ॥

वार्तिककारस्तु नैतदभ्युपगच्छति । 'अस्मिन्नधिकरणे सिद्धान्तदूषणम्' इत्युपक्रम्य अहर्गणघटके विश्वजिति नामातिदेशेन सर्वस्वदक्षिणाकत्वं खण्डयति सः । अयं विषयः अस्मिन्ग्रन्थे नैवोपन्यस्तः । तत्र किं कारणमिति न ज्ञायते ॥

---

१ फलवत्यां १४६-पुटे (७-३-८; ७-३-९)

२ फलवत्यां १४८ पुटे

नवमाध्यायप्रथमाधिकरणे 'भाष्यवार्तिकयोश्च नानासन्देहाः प्रदर्शिता अपि विस्तरभयान्नेह लिख्यन्ते' इति लिखन्नयं ग्रन्थकारः तयोर्ग्रन्थयोः अविस्मरणं ख्यापयत्येव ॥

नवमाध्याये प्रथमपादे '[1]नवमाधिकरणे' वार्तिके ग्रन्थलोपः जातः तन्त्ररत्ने अयं विषयो निर्दिष्टः। इदं ग्रन्थद्वयमपि सम्यग्विजानन् एतद्ग्रन्थकारः तं विषयं अत्र नैव निर्दिशति। अत्रत्यस्तन्त्ररत्नग्रन्थभागोऽमुं विषयं सूचयन्नत्र विलिख्यते :—

'[2]इह त्वेकेष्टकाऽऽकर्षणेऽपि न द्वितीयाऽऽकृष्यते। आकर्षणमेव ह्यवयवि सद्भावे प्रमाणम्। तच्च दर्शितं भाष्ये। कथं तदभावे तत्सिद्धिः? तस्मादवयव्य-भावादग्निशब्द इष्टकासमुदायवचनः। समुदायश्चामूर्तो न शक्यते प्रोक्षितुमिति तल्लक्षितानां प्रोक्षणं विधीयत इति प्रतीष्टकं कर्तव्यमिति ॥

अग्नेर्वा स्यात् इष्टकाभिरग्निं चिनुत इति शब्दस्तावदिष्टकानां तृतीयान्तानां पारार्थ्येनावगतत्वात्तदर्थं प्रोक्षणं न भवति। गुणानाञ्च परार्थत्वा दिति न्यायात् किन्तु द्वितीयासंयोगादग्न्यर्थं प्रोक्षणम्। अग्निशब्दश्च ज्वलनवचनोऽपि प्रोक्षणादि-वाक्येषु तदाधारभूते स्थले लक्षणया वर्तत इति वेदितव्यम् ॥

नन्वग्नि शब्देन समुदायोऽभिधीयते। उच्यते। प्रत्यक्षेणेष्टकाव्यतिरिक्तो-ऽवयव्युपलभ्यते। नच कालान्तरे पुरुषान्तरेऽवस्थान्तरेवाऽविपर्यासाद्भ्रान्त इति शक्यते कल्पयितुम्। अथेष्टकाः पृथक्कृत्यानुपलंभान्न तावद्व्यतिरिक्तोऽवय-व्यस्ति। अव्यतिरेके तु तन्मात्रापातः। व्यतिरेकाव्यतिरेकन्तु विप्रतिषेधान्न भवति। तस्मान्नावयवी विद्यत इत्युच्यते। तथा सति, इष्टकानामभावः स्यादित्याह। अपिचात्मीयानवयवानपेक्ष्य इष्टकाप्यवयविनी भवत्येव। तेन तद्वदग्निरभ्युपगम्यतामित्याशङ्कां विवृणोति ॥

---

१ एदद्ग्रन्थरीत्या गणयेनम्।

२ अयं भागः तन्त्ररत्नग्रन्थादुद्धृत्य प्रकाश्यते।

अथोच्येत इष्टका अपनी स निदर्श्यतां यदि व्यतिरिक्तोऽस्ति। न तु स निदर्श्यते। तस्मादिष्टका एव परमार्थतस्सन्तीति। परिहरति। एवं वर्ण्यमाने भवताऽऽत्मीयावयवव्यतिरिक्तेष्टका निदर्शयितव्या। न च भवतापि सा शक्यते निदर्शयितुम्। अपि चेष्टकानामवयवान्तरमेवं तेषामप्यवयवान्तराणामन्येऽवयवास्तेषामप्यन्य। तेन तेन क्रमेणाऽऽपरमाणुभ्यो गमनात्परमाणुषु प्रोक्षणमवतिष्ठते। न च ते शक्याः प्रोक्षितुम्। तस्मात्पूर्वपक्षवादिनः प्रोक्षण मेवानर्थकं स्यात् इति॥

अत्र तन्त्ररत्नोक्तविषयमूलभूतो वार्तिकग्रन्थो मातृकासु नोपलभ्यते। अतो वार्तिकग्रन्थभागोऽत्र नष्ट इत्यवावसेयम्। अयमंशः एतद्ग्रन्थकारेण नूनं ज्ञात एव स्यात्। तथापि न निर्दिश्यतेऽत्र॥

दशमाध्याये प्रथमपादे [1]पञ्चममधिकरणं 'प्रधानाच्चान्यसंयुक्तात्सर्वारंभान्निवर्तेत' इत्येकसूत्रात्मकम्। अत्र शाबरभाष्योक्तार्थदूषणपूर्वकं वार्तिककारेण अन्यथा निर्वाहः प्रदर्शितः। साऽत्र[2] स्पष्टतरं प्रकाश्यते। अत्र शाबरभाष्ये,

राजसूयान्तर्गतेष्वैष्टिकेषु आरंभणीयाया अननुष्ठानं प्रत्याम्नानादुपपादितम्॥

वार्तिकेतु इदं सन्दूषितम्।

'तस्मादयुक्तं प्रत्याम्नानाभिधानम्। अर्थलोप एव वक्तव्यः'

इति तत्रत्यो वार्तिकग्रन्थः।

फलवतीग्रन्थे च, 'प्रत्याम्नानवचन मभ्युपेत्यवादः। वस्तुतस्तु पृथक्प्रधानेष्टयारंभार्थत्वेन राजसूयादिषु ... ... अर्थलोपात् अन्वारंभणीयाया लोपो राजसूये। प्रत्याम्नानवाक्यञ्च क्रमपरम्'। इति लिखितमस्ति। वार्तिककृतः पक्ष एवात्र स्पष्टतरं निरूपित इति नेदं तिरोहितम्॥

फलवती – तन्त्ररत्नञ्च।

---

१ एतद्ग्रन्थरीत्या गणनेयम।

२ फलवती (मुद्रित) ग्रन्थे २९० - तमे पुटे।

एतद्ग्रन्थकारः तन्त्ररत्नग्रन्थं तत्रतत्र निर्दिशति। तेन तस्मिन् ग्रन्थेऽस्य परिचयातिशयः, श्रद्धाधिक्यं, बहुमानश्च आसन्निति ज्ञायते। तत्रतत्र नाम्ना ग्रन्थमिम मुदाहरत्ययम्। तादृशस्थलानि 'अनुबन्धः VIII' इति पङ्क्तिकायां पार्थक्येन समुद्धृत्य प्रदर्शितानि। दशमाध्यायस्य तृतीयपादे त्रयोदशाधिकरणे तन्त्ररत्नं अयं ग्रन्थकारः नाम्ना निर्दिशति। 'समं स्यादश्रुतत्वात्' इत्यस्याधिकरणस्य पूर्वपक्षसूत्रम्। अत्र ज्योतिष्टोमे ऋत्विजां दक्षिणादानविषये विभागपरिकल्पनाविषयो विचारो वर्तते। षोडशानामप्यृत्विजां सममेव दक्षिणादानं पूर्वपक्षवादी अभिप्रैति। अर्धिनः—तृतीयिनः—पादिनः—इत्यादिनिर्देशबलात् दक्षिणादाने तारतम्यं सिद्धान्तित मत्र॥

अत्र फलवत्यां—३६३ तमे पुटे

'अंशप्रकारोऽपि च याज्ञिकेभ्यो विधेय इत्याह च तन्त्ररत्ने।
तथात्वहं वच्मि च याज्ञिकानां विभागरीतिं सुखबोधनाय॥'

इति श्लोको वर्तते। अत्र तन्त्ररत्नग्रन्थं नामतो निर्दिश्य तदुपात्तं दक्षिणाविभागप्रकारमपि निरूपयति एतद्ग्रन्थकारः॥

इत्थं फलवतीग्रन्थे वक्तव्यांशाः सङ्क्षेपतः प्रतिपादिताः। इतः परं मीमांसाशास्त्रस्यानादित्वं, तदीयन्यायानां लोकयात्राया अत्यन्तोपयोगित्वञ्च प्रतिपाद्य भूमिकामेनां समापयितुमिच्छामः॥

मीमांसाशास्त्रं महर्षिणा जैमिनिना प्रणीतमिति सर्वजनीनमेतत्। तथापि नेदं शास्त्रं तदुपज्ञम्। ततः पूर्वमपि इदं शास्त्रमासीदेव। तदनुसरणमेव भगवता जैमिनिमहर्षिणा कृतम्। अत्र द्वित्राणि उदाहरणानि समुपस्थापयामस्सहृदयानां पुरस्तात्॥

कृष्णयजुर्वेदे तैत्तिरीयसंहितायां प्रथमकाण्डे पञ्चमप्रश्ने नवमानुवाके अग्नेरुपस्थानविषये मीमांसा लब्धप्रसरा दृश्यते। मीमांसकसंप्रदायानुसारेण अत्रत्यो विषयः निरूप्यते :—

१ अधिकरणनाम—अग्न्युपस्थानाधिकरणम्।

२ विषयः — अग्नेरुपस्थानम् ।

३ संशयः — इदं कर्तव्यं वा? न वा? इति ।

४ पूर्वपक्षः — न कर्तव्यमिति ।

५ सिद्धान्तः — कर्तव्यमिति ।

६ प्रयोजनम् — यथा पूर्वपक्षः — तथा उपस्थानं नानुष्ठेयम् । यथा सिद्धान्तः — तथा अनुष्ठेयम् इति ।

तत्र पूर्वपक्षवादी मन्यते — अग्नेरुपस्थानं न कर्तव्यम् । किं कारणम्? उपस्थानेन अग्निदेवतायाः क्लेशं वयमुत्पादयामः । कथम्? उपस्थानं हि नाम देवतासमीपे स्थित्वा मन्त्रपठनमेव । तदर्थकल्पिताश्च मन्त्राः नानाविधप्रार्थनागर्भिता वर्तन्ते । तादृशप्रार्थनापरिपूरणं शक्तिमत्याः देवतायाः अवश्यकर्तव्यमापतति । इदञ्चोपस्थानं अग्निहोत्रादिषु दैनन्दिनकर्मसु सायञ्च प्रातश्च अवश्यकर्तव्यं भवति । होमकाले च अत्यल्पमेव द्रव्यं यजमानेन देवतायै समर्प्यते । अपरिमिता च प्रार्थना क्रियते । अत एव प्रार्थ्यमानायाः देवतायाः क्लेशो जायते । प्रत्यक्षमेवेमं विषयं लोके वयं पश्यामः । धनाढ्यं कञ्चन पुरुषं दरिद्रः कश्चित् जम्बीरफलादिकमुपहृत्य प्रतिदिनं महत्तरं द्रविणराशिं याचति चेत्, क्लेशयत्येवासावमुम् । तत्तुल्यमेवेदम् । उपस्थानानुष्ठानव्याजेन देवता इत्थं न क्लेशयितव्या यजमानेन । तस्मात् नोपस्थेयोऽग्निः इति ॥

सिद्धान्तस्तु — अवश्यं कर्तव्यमेवाग्नेरुपस्थानम् । तेनैव हि क्रियायाः परिपूर्णता संपद्यते । ननूक्तं धनिकदरिद्रसमागमदृष्टान्तेन तस्यानौचित्यम् । सत्यमुक्तम् । अनुपपन्नन्तु तत् । कुतः? वैषम्यात् । धनिकदरिद्रदृष्टान्तो यजमानकर्तृकदेवतोपस्थानविषये नोपपद्यते । धनिकं यथा दरिद्रो याचते तथा यजमानो देवतां न याचते । किन्तर्हि? आशीर्वचनमेवेदं यदुपस्थानं नाम । प्रतिदिनं सायं प्रातः तदनुष्ठानेन देवतायाः परितोष एव भवति, न क्लेशः । माध्याह्निकसंध्योपस्थाने 'पश्येम शरदश्शतम् ... ... ... ... ' इत्यादिना बहुतरमाशासनमनुदिनं क्रियमाणमेव वर्तते । तेन भगवत आदित्यस्य न कोऽपि क्लेशो जायमानो विभाव्यते । सदाचार्यदिव्यचरणारविन्दयोः प्रणिपातपूर्वकं अहरहः

अन्तेवासिना आश्वासनं क्रियत एव । 'सर्वकलावल्लभो भूयासम्' 'तेजस्वी यशस्वी ब्रह्मवर्चसी स्याम्' इत्याद्यनेकप्रकारमाशंसनं माणवकेन क्रियमाणं गुरोर्न क्लेशमावहति । प्रत्युत परितोषमेव वर्धयति । पर्वक्रमेण च तादृशस्य सच्छिष्यस्य विवक्षितपूर्तिरपि भवत्येव । आशीर्वचनस्य याचनस्य च मध्ये अस्त्येव महान् भेदः । तन्निरूपणेन भ्रमोऽयमपगच्छेदेव नूनम् ॥

तस्मादग्न्युपस्थानं कर्तव्यमेव इति ।

एतत्प्रतिपादकं वेदवाक्यम् –

'उपस्थेयोऽग्नी ३ र्नोपस्थेया ३ इत्याहु र्मनुष्यायेन्न्वै योहरहराहृत्याथैनं याचति स इन्न्वैतमुपार्छत्यथ को देवा नहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहु राशिषे वै कयँजमानो यजत इत्येषा खलु वा आहिताग्नेराशी र्यदग्नि-मुपतिष्ठते तस्मादुपस्थेयः' इति । (तै. सं. १-५-९)

एवं मीमांसाधिकरणात्मकानि वेदवाक्यानि बहुल परिदृश्यन्ते ॥

२ ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्यावदेयं दधि हि पूर्वं क्रियत इत्यनादृत्य तच्छृतस्यैव पूर्वस्यावद्येत्' (तै. सं. २-५-३)

३ 'ब्रह्मवादिनो वदन्ति विचित्यस्सोमा ३ न विचित्या ३ इति' (तै. सं ६-१-९)

४ 'व्यावृत्ते देवयजने याजयेद् व्यावृत्कामं यं पात्रे वा तल्पे वा मीमाꣳसेरन् ... ... नैनं पात्रे न तल्पे मीमाꣳसन्ते' (तै. सं ६-२-६)

५ 'उत्सृज्या ३ न्नोत्सृज्या ३ मिति मीमाꣳसन्ते ब्रह्मवादिनस्त-द्वाहुरुत्सृज्यमेवेति ..... ते त्वाव नोत्सृज्ये इत्याहुः' (तै. सं. ७-५-७)

एतेषु सर्वेष्वेव स्थलेषु पूर्वप्रदर्शितरीत्या अधिकरणरचना सुधीभिरुन्नेया। विस्तरभयान्नेह प्रपञ्च्यते । एवमन्यान्यास्वपि वेदशाखासु मीमांसाधिकरण-रचनात्मकानि वाक्यानि दरीदृश्यन्ते । अतः भगवतो जैमिनेः मीमांसा-सूत्रप्रणयने आदर्शभूतानि एतानि वेदवाक्यान्यभूवन्निति सुधीरं वक्तुं प्रभवामः ॥

अन्यच्चात्रावधानमर्हति । पूर्वमीमांसासूत्रेषु भगवान् जैमिनिः, पूर्व-मीमांसासंप्रदायप्रवर्तकानां स्वसदृशानां बहूनां महर्षीणां नामानि तत्रतत्रोदा-

-हरति। अस्मिन् मुद्रितग्रन्थे [1]'अनुबन्धः VI' इत्यत्र तादृशानां महर्षीणां पावनानि नामानि पार्थक्येन प्रकाशितानि वर्तन्ते। तावन्तो महर्षयो मीमांसाशास्त्रप्रवर्तकाः जैमिनेः प्राक्काले—अनन्तरकालेऽपि वा व्यराजन्तेति स्पष्टतरमनेन। भगवतो जैमिनेरपि प्रमाणभूता एते इमां पुण्यतमां भारतभूमिमलञ्चक्रुरिति अभ्यूहितुमस्त्येवावकाशः। स एव हि सबहुमानं तान् कीर्तयति ॥

तैरन्यैर्महर्षिभिः मीमांसाशास्त्रं केनाकारेण प्रवर्तितमासीदिति न स्पष्टं ज्ञायते। जैमिनिवदेव सूत्रप्रणयनेन शास्त्रं प्रवर्तितं स्यात्। तेषाञ्च सूत्राणां कालक्रमेण लोपः सञ्जातस्स्यात्। अथवा वाचिकमेव मीमांसाशास्त्रप्रवचनं तैः कृतं स्यात्। आहोस्वित् उभयमपीदं तैः कृतं स्यात्। तदवलंबनेनैव तेषामन्यतमो जैमिनिः पूर्वमीमांसासूत्राणि प्रणिनायेति शक्यमभ्यूहितुम्। पश्चात्काले एतेषामेव भूयिष्ठः प्रचार आसीत्। तद्वशेन प्राचीनानि पूर्वमीमांसासूत्राणि उपेक्षितानि विनष्टानि च स्युः ॥

एवं वेदेषु महर्षिपरंपरासु च भूयिष्ठं लब्धप्रचारमेव पूर्वमीमांसाशास्त्रं भगवता जैमिनिमहर्षिणा सर्वलोकक्षेमाय अत्यद्भुतसूत्रप्रणयनेन प्रत्युज्जीवितम्। पाणिनिमहर्षिप्रणीतेषु व्याकरणसूत्रेष्वपि एतादृशमेव वस्तुतत्त्वमध्यक्षयामः। सोऽपि हि बहूनन्यान् व्याकरणशास्त्रप्रवर्तकान्महर्षीन् स्वसूत्रेषु सबहुमानं निर्दिशति ॥

अत्रेदमवधेयम्। एवमुदाह्रियमाणानां महर्षीणां विषये द्विविधो जैमिनेस्समुदाचारो दृश्यते। क्वचित् 'तेषामप्यभिमतोऽयं विषयः' इति तत्संप्रतिपत्तिप्रदर्शनद्वारा तान्पूजयति। क्वचिच्च तन्मते दोषोद्भावनपुरस्सरं तद्दूषणमपि क्रियत एवानेन। न त्वेतावता तेषां विषये बहुमानशैथिल्यं जैमिनेः प्रसज्यते। विषयविचारतन्निर्णयैकदत्तदृष्टित्वात् ॥

अत्रान्यदप्यवधेयम्। एवं मीमांसासूत्रेषु तत्र तत्र संकीर्त्यमानानां महर्षीणां मध्ये स्वात्मानमपि कीर्तयति जैमिनिमहर्षिः। अत्र सुधीभिर्वस्तुतत्त्वं निष्पक्षपातरीत्या निपुणनिरूपणपूर्वकमन्वेष्टव्यम् ॥

---

१ फलवतीग्रन्थोद्धृतानामेव महर्षीणां नामान्यत्र सङ्कलितानि।

१ इमानि सूत्राणि जैमिनिमहर्षे रन्येन तच्छिष्येण प्रणीतानि स्युः । तदैव जैमिनेः प्रथपुरुषनिर्देशस्सूत्रेषु सन्दृश्यमान उपपद्यते । अन्यथा स्वेनैव स्वात्मनः कीर्तनेऽङ्गीक्रियमाणे 'अहं' इत्युत्तमपुरुषसामानाधिकरण्यापत्तेः । एवं चेव, 'जैमिनि' प्रणीतत्वं शास्त्रस्य कथमुपपन्नं स्यात् इति वक्तव्यम् । जैमिनेरेवोपदेशेन समधिगतमर्थं तच्छिष्यस्सूत्रयामास । अतो जैमिनिप्रणीतत्वं न विहन्यते मीमांसाशास्त्रस्य । 'मनुस्मृतिः' 'याज्ञवल्क्यस्मृतिः' इत्यादिस्थलेऽपि ईदृश एव निर्वाहः अवश्याभ्युपेतव्यो भवति । 'मनुमेकाग्रमासीनं' इति, 'योगीश्वरं याज्ञवल्क्यम्' इति च तत्र निर्देशेन अन्यकर्तृकत्वसंभावनाया दुरपह्नवत्वात् । इदं केषाञ्चिन्मतम् ॥

२ जैमिनिमहर्षिणैव प्रणीतानीमानि पूर्वमीमांसासूत्राणि । तथैव सर्वलोकप्रसिद्धेः । शबरस्वामिप्रभृतिभिः, ततः पूर्वैरुपवर्षप्रभृतिभिः ग्रन्थकारैश्च ऐककण्ठ्येन मीमांसाशास्त्रस्य जैमिन्युपज्ञत्वव्यवहारस्य कृतत्वात् । तस्य चाश्रद्धेयत्वे मानाभावात् । एवन्तर्हि स्वस्यैव प्रथमपुरुषसमानाधिकरणेन स्वनाम्ना व्यवहारः कथं सङ्गच्छते? इति प्रश्नः प्रादुर्भवत्येव । 'कर्माण्यपि जैमिनिः फलार्थत्वात्' इत्यादिषु सूत्रेषु हि 'वदति' 'अभिप्रैति' इत्यादेः प्रथमपुरुषक्रियापदस्यैवाध्याहारेण वाक्यं पूरयितव्यं भवति, 'द्रव्यगुणसंस्कारेषु बादरिः' इत्यत्रेव । तत्कथन्नामोपपद्यते? नायं दोषः । स्वस्यैव प्रथमपुरुषक्रियापदसमानाधिकरणव्यवहारः महतां अप्रमेयप्रभावाणां सहज एव । स भगवान् रामायणकथाप्रधानपुरुषो रामः स्वस्य सत्यवादितां सत्यसङ्कल्पत्वञ्च 'रामो द्विर्नाभिभाषते' इति वदति । 'अहं द्विर्नाभिभाषे' इति हि तेन वक्तव्यम् । तथा उत्तररामचरिते शम्बुकवधप्रकरणे, 'रे हस्त! ....' इति श्लोके उत्तरार्धे, 'रामस्य बाहुरसि दुर्भरगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते?' इति रामः कथयति । 'मम बाहुरसि' इति हि वक्तव्यन्तेन । एवं 'आविवाहसमयाद्गृहे वने....' इत्यस्मिन् श्लोकेऽपि 'रामबाहु रुपधानमेष ते' इति निर्देशो भाव्यः । तथा शाकुन्तले वाणिजो द्रव्यस्य स्वामित्वविषयनिर्णयप्रसङ्गे,

'येनयेन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥'

इत्युद्घोषणप्रकारं दुष्यन्तः स्वयमेव कथयति। अन्यत्र च 'भद्रे। प्रसिद्धं दुष्यन्तचरितं' इति। एवंविधेषु सर्वेषु स्थलेषु यथावस्थितप्रथमपुरुषप्रयोगे रसपरिपोषं, उत्तमपुरुषप्रयोगे तद्वैधुर्यञ्च सहृदयानां हृदयन्त्वेव जानाति। स एव न्यायोऽत्रापि जमिनिप्रणीतसूत्रविषये प्रसरं लभते। इत्येवमपरेषामभिप्रायः॥

रसिकशिरोमणयः सहृदया एवात्र समुचितं निर्णयं कुर्वन्तु॥

इत्थं वेदोपज्ञं, अनेकैर्महर्षिभिः सूत्र-वृत्ति-प्रणयनमुखेन संवर्धितं मीमांसाशास्त्रमिदं वेदार्थनिर्णये अनितरसाधारणमुपकारं करोति इति विश्वजनीनमेतत्। तथा शास्त्रान्तराण्यवगाहमानानामपि हस्तावलंबो दीयत एवानेन। न केवलमेतावदेव। एतदध्ययनेन सुमहान् पुण्यराशिस्संपाद्यते॥

'यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ॥'

इति ह्यभियुक्ता वदन्ति॥

'मीमांसा' इति नामैवास्य शास्त्रस्य विशिष्टतरत्वं प्रतिपादयति। तथाहि:– मीमांसा इति पदस्य, 'पूजितार्थविषयकविचारः' इत्यर्थः। '[1]मान पूजायां' इति धातोः, [2]'मान्बधदान्शान्भ्यो दीर्घश्चाऽऽभ्यासस्य' इति सूत्रात 'सन्' विधीयते। '[3]सन्यङोः' इति सूत्रेण सन्नन्तस्य मान्धातोः प्रथमस्यैकाचो द्वित्वम्। अनन्तरमभ्यासकार्यम्। (मान्-धातोः सनि-मान्-स इति भवति। सन्यङोः–इत्यनेन प्रथमस्यैकाचो द्वित्वे मान् मान् स-इति भवति। अनन्तरं '[4]हलादिश्शेषः' इति सूत्रेण आदिहल्मात्रस्य शिष्यमाणत्वे-मामान् स-इति भवति। अथ '[5]ह्रस्वः' इति सूत्रेण अभ्यासस्याचो ह्रस्वत्वे-ममान् स इति भवति। ततः '[6]सन्यतः' इति सूत्रेण अभ्यासस्थस्यात-

१ ९७२-धातुः (भ्वादिषु)
२ अष्टाध्यायी ३-१-६
३ " ६ " ९
४ अष्टाध्यायी ७-४-६०
५ " " " ५९
६ " " " ७९

इकारे सति-मिमान् स-इति भवति । अनन्तरं 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' इति सूत्रेण अभ्यासस्थस्य इकारस्य दीर्घत्वे - मीमान् - स इति भवति ।) ततो '[1]नश्चापदान्तस्य झलि' इति सूत्रेण नकारस्य अनुस्वारे सति मीमांस-इति भवति । 'मान्बध ....' इति सूत्रेण मान्धातोर्विधीयमानस्य सन्प्रत्ययस्य, 'मानेर्जिज्ञासायाम्' इति वार्तिकेन जिज्ञासार्थकत्वात् तदनुसारेण '[2]अजाद्यतष्टाप्' इति स्त्रीप्रत्यये टापि कृते 'मीमांसा' इति शब्दो निष्पद्यते । जिज्ञासापदस्य च तत्कार्ये विचारे लक्षणा । अतः मीमांसापदं 'पूज्यार्थविषयकविचारः' इतीममर्थं प्रत्याययति । वेदार्थस्यैव अस्मदीयभारतपुण्यभूमौ पूज्यतमत्वात् वेदवाक्यार्थविचार एव मीमांसेति पदेन प्राधान्येन प्रतिपाद्यते । 'अथातो धर्मजिज्ञासा' इति शास्त्रारम्भसूत्रमपि इममेवार्थं द्रढयति । 'वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते' इति तत्रभवान् शबरस्वामी ॥

इत्थमभ्यर्हिततमस्यास्य मीमांसाशास्त्रस्य दैनन्दिनलोकयात्रायामपि मार्गदर्शित्व मतिरुचिरं विराजते । अत्र पञ्चषान्युदाहरणानि प्रदर्शयामः ॥

'अक्ताश्शर्करा उपदधाति' इत्येकं वेदवाक्यं वर्तते । चयनप्रकरणस्थमिदं वाक्यम् । इष्टकानामुपधानं कृत्वा नानाप्रकारेणाग्नेश्चयनं कर्तव्यम् । तदर्थमुपधीयमाना इष्टकाः अक्ताः स्युः इत्यस्मिन्वाक्ये उपदिश्यते । अञ्जनं केनचित् द्रवद्रव्येण कर्तव्यम् । इदन्तु स्पष्टमेव ज्ञायते 'अक्ताः' इति पदेन । केन द्रवद्रव्येणाञ्जनं कर्तव्यमिति प्रश्नस्समुत्तिष्ठति । उदाहृतवाक्ये अस्य प्रश्नस्योत्तरं न लभ्यते । 'अक्ताः' इति सामान्यनिर्देश एवात्र दृश्यते । न तु 'घृताक्ताः— तैलाक्ताः नवनीताक्ताः' इत्यादिरीत्या विशेषनिर्णयौपयिको निर्देशोऽत्र वर्तते । अतः अस्माद्वाक्यात् संदिग्ध (अनिर्णीत) एवार्थो ज्ञायते ॥

शर्करा इति सुधाप्रकृतिभूतानां अनतिदृढानामश्मनां नाम । तासामञ्जनं केन द्रव्येण कर्तव्यम्? इति संशये सति, किं यथासंभवं येन केनापि द्रवद्रव्येणाञ्जनं कर्तव्यम्? उत निर्णीतेन केनचिद्द्रव्यविशेषेण? इति संशयः ॥

---

१ अष्टाध्यायी ८–४–२४  २ अष्टाध्यायी ४–१–४

द्रव्यविशेषनिर्णायकलिङ्गाभावात् यथेच्छं येन केनापि द्रवद्रव्येण शर्कराणामञ्जनं कर्तव्यमिति पूर्वपक्षः ॥

सिद्धान्तस्तु घृतेनैवाञ्जनं कर्तव्यमिति । तत्रायं हेतुः । यद्यपि विधिवाक्ये विशेषनिर्णयः न शक्यते कर्तुम्, तथापि तच्छेषभूते सन्निहिते अर्थवादरूपे वाक्यान्तरे अञ्जनसाधनीभूतद्रव्यविशेषनिर्णयः सम्रुपजायत एव। 'तेजो वै घृतम्' इति किञ्चिद्वाक्यमेतद्विधिशेषभूतं दृश्यते। अस्मिन् वाक्ये तेजोरूपत्वेन घृतस्य स्तुतिः क्रियते। किमर्थं घृतस्यात्र स्तुतिः क्रियते? इति भवत्याकांक्षा। यद्धि विधेयं, तस्य स्तुतिः क्रियते। न तूदासीनस्य द्रव्यस्य। विध्यर्थवादयोरेकवाक्यतानियमात्। अतोऽञ्जनसाधनीभूतं द्रव्यमाज्यमेवेह विवक्षितमिति वाक्यशेषान्निर्णीयते ॥

प्रयोजनम् – पूर्वपक्षे - अनियमेन येन केनापि द्रव्येणाञ्जनं कर्तव्यम्। सिद्धान्ते – घृतेनैवाञ्जनं कर्तव्यमिति। प्रथमाध्याये चतुर्थपादे उपान्त्येऽधिकरणे अयं विषयो विचारपूर्वकं निर्णीतः। '[1]सन्दिग्धेषु वाक्यशेषात्' इति एकसूत्रात्मकमिदमधिकरणम् ॥

अयं न्यायः लोकव्यवहारस्य महान्तमुपकारमातनुते। सम्यक् आलोच्य, पूर्वतरं कर्तव्यप्रकारं निर्णीय समर्थाश्चोराः घातुका वा स्वोद्दिष्टमकार्यं कुर्वन्ति। न किमपि तेषां प्रचारसूचकं वस्तु तस्मिन् प्रदेशे लभ्येत। तथा अप्रमत्ता हि ते स्वकर्म निर्वर्तयन्ति। तत्र तदन्वेषणव्यापृतैः राजपुरुषैरयं न्यायोऽनुसर्तव्यः। विवक्षिते प्रदेशे यद्यपि लोप्त्रं किमपि न लभ्यते, तथापि प्रान्तपरिसरप्रदेशेषु निपुणतरं दृष्टिर्व्यापारयितव्या। यदि हस्तनिर्णेजनार्थो वस्त्रखण्डः अन्यद्वा संदिह्यमानव्यक्तिसंबन्धि प्रमादाच्च्युतं किञ्चिदुपलभ्येत, तदेवालं तत्त्वनिर्धारणाय। केनचित् रसिकेन [2]प्राड्विवाकेन इमं न्यायं श्रुतवता अयं अभिप्रायः आविष्कृतः ॥

षष्ठाध्याये प्रथमपादे तृतीयाधिकरणे – '[3]लिङ्गविशेषनिर्देशात्पुंयुक्तमैति-

---

१ पू. मी. द. १-४-२४

२ District Judge.

३ फलवत्यां ५ पुटे।

शायनः' इति पूर्वपक्षसूत्रम् । '[2]जातिन्तु बादरायणोऽविशेषात् तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्' इति सिद्धान्तसूत्रम् ॥

यागादिषु पुरुषस्य परं अधिकारः न स्त्रियाः इति पूर्वपक्षः । 'स्वर्गकामः' 'पशुकामः' इत्यादिपुल्लिङ्गनिर्देशबहुलत्वं वेदवाक्यानामत्र हेतुः । यदि स्त्रीणामपि तुल्योऽधिकारः स्यात्, तदा 'स्वर्गकामा–पशुकामा–' इत्यादिनिर्देशः स्यात् । नतु कुत्रापि तथा दृश्यते । तस्मात्पुरुषस्यैवाधिकार इति ॥

सिद्धान्तस्तु; दम्पत्योरुभयोरपि साधारण्येनैव यागादावधिकारः । न पुरुषमात्रस्य । कुतः? '[1]पाणिग्रहणाद्धि सहत्वं कर्मसु, तथा पुण्यफलेषु च' इत्यादिशास्त्रान्तरानुरोधात् । कथं तर्हि 'स्वर्गकामः' इत्यादिपुल्लिङ्गमात्रनिर्देशः? नायं दोषः । फलकामनायाः दम्पत्योरुभयोरप्यविशिष्टत्वात् । उभयलिङ्ग-निर्देशस्यासाध्यत्वात्, अन्यतरनिर्देशस्यावर्जनीयत्वाच्च पुल्लिङ्गनिर्देशः । '[2]अर्धो वा एष आत्मनो यत्पत्नी' इत्यादिश्रुतिभिः पत्नीसहितस्यैव पुरुषस्य पूर्णत्वाभि-धानात् । पत्नीरहितस्य यागादिष्वधिकाराभावात् । अतो दम्पत्योरुभयोरपि साम्यमेव इति ॥

अस्मदीये भारते पवित्रतमपुण्यभूमौ स्त्रीणामत्युन्नतं स्थानं अनेन स्पष्टतमम् ॥

षष्ठाध्याये तृतीयपादे प्रथममधिकरणं 'सर्वशक्तौ प्रवृत्तिस्स्यात्तथा-भूतोपदेशात्' इति पूर्वपक्षसूत्रेणोपक्रमते । 'अपि वाप्येकदेशः स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात्' इति सिद्धान्तसूत्रमत्र ॥

नित्यनैमित्तिकानि कर्माणि अवश्यमेव कर्तव्यानि । तेषु कतिपयानामङ्गाना-मनुष्ठाने अशक्तस्यापि यथाशक्ति अङ्गानुष्ठानेनापि प्रधानकर्मानुष्ठानमनुमन्यतेऽत्र । शक्तस्यैव सकलाङ्गानुष्ठाने निर्बन्धः । अशक्तस्य तु न तथा । यथाशक्तिन्याय इत्यस्याधिकरणस्य व्यवहारः । अयमपि लौकिकव्यवहारेषु बहुतरमुपयुज्यते । ऋणापाकरणादिविषये शक्तिहीनस्य, एकरूप्यकस्य स्थाने इयन्तः काचाः दीयन्ते चेत्तावदेव पर्याप्तं इति न्यायस्थानेष्वपि निर्णयः क्रियते ॥

---

१ फलवत्यां ५. पुटे । २ आपस्तंबसूत्रम् ।

३ तै–सं–६

षष्ठाध्यायस्य सप्तमे पादे सर्वस्वदानविषयो विचारो वर्तते । अयमत्यन्तोपयुक्तः लौकिकव्यवहारस्य ॥

विश्वजिन्नाम कश्चिद्यागः । तत्र यजमानेन सर्वस्वं दक्षिणात्वेन देयमिति वेदे कथ्यते । अत्र 'सर्वस्व' पदस्य अर्थविशेषनिर्णयः नानाप्रकारेण क्रियते । अतिरमणीयोऽयं विचारो लोकयात्रायामत्यन्तोपयुक्तश्च ॥

१. किं मातापित्रादयोऽपि दातव्याः ?

२. किं अखण्डं भूगोलं देयम्?

३. किं गृहे विद्यमानानि उपकरणान्यपि देयानि?

४. सर्वस्यापि दाने दक्षिणादानात्परं कर्तव्यो यागशेषस्त्यक्तव्य एव वा? तदपेक्षितद्रव्यस्यापि दत्तत्वात् । अथवा तत्करणोपयुक्तावश्यकवस्तु अदत्त्वा स्ववशे स्थापयित्वा तेन यागः पूरयितव्यः ?

इत्येवं बहुमुखः संशयः प्रादुर्भवति । 'सर्वस्व' शब्दस्य यथायथं सङ्कोचेनार्थपरिकल्पनया समुचितोऽर्थो निर्णीयतेऽत्र । लोकव्यवहारस्य नानाप्रकारेणोपयुक्तोऽयं विचारो रसिकैरवश्यमेवास्वादयितव्यः ॥

षष्ठाध्याये सप्तमे पादे त्रयोदशमधिकरणमप्येवमेव ॥

'सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु' इत्यस्याधिकरणस्य पूर्वपक्षसूत्रम् । 'अहानि वाऽभिसंख्यत्वात्' इति सिद्धान्तसूत्रम् ॥

'विश्वसृजा ऽ सहस्रसंवत्सरं' इति वेदवाक्ये विश्वसृजामयनाख्यस्य सत्रयागस्य सहस्रसंवत्सरकालानुष्ठेयत्वं प्रतीयते । शास्त्रस्य च मनुष्याधिकारत्वात् अयमपि सत्रयागो मनुष्यैरेवानुष्ठेयः इति कृत्वा शास्त्रमुपदिशतीति तावदविवादम् । यदेव शक्यमनुष्ठातुं तदेव शास्त्रेणोपदिश्येत । सहस्रसंवत्सरपरिमितस्यायुष्कालस्य मनुष्येष्वसंभवात् असाध्यविषयकोऽयमुपदेशो निरर्थकः । केनापि तस्यानुष्ठातुमशक्यत्वात् । इति पूर्वपक्षः ॥

अशक्यानुष्ठानस्य क्वापि शास्त्रे उपदेशो नैव दृष्टचरः । अतोऽत्रापि अनुष्ठानसाध्यमेवोपदिश्यत इति निरूपयितव्यम् । 'संवत्सर' शब्दोऽत्र

दिनवाची स्यात्। एवञ्च सहस्रदिनपरिमितः काल एवास्य सत्रयागस्य विधीयते। तावत्कालजीवित्वं कर्मानुष्ठानक्षमत्वञ्च मनुष्येषु संभावितमेव। अतो नानर्थकोऽयमुपदेशः इति सिद्धान्तः ॥

अत्र बहूनां मीमांसाशास्त्रप्रवर्तकानां महर्षीणां मतान्युपन्यस्यन्ते। अन्ते च स्वपक्षः सिद्धान्तीक्रियते जैमिनिमहर्षिणा। लोकानुभवस्य नानाप्रकारेण आसन्नतरोऽयं न्यायो विचारचतुरैर्भाव्यः ॥

दशमाध्यायस्य द्वितीयपादे त्रयोविंशमधिकरणं 'सर्वस्वाराधिकरणं' इति व्यवह्रियते। सर्वस्वारो नाम कश्चिद्यागः। यः अनामयः स्वर्गं लोकं प्राप्तुं कामयते, तदर्थञ्च स्वस्थतादशायामेव मरणं कामयते; तेनायं यागोऽनुष्ठेयः इति वेदे सङ्कीर्तितमस्ति। अस्मिन् यागे यजमानः यागपरिसमाप्तिकालपर्यन्तं न जीवति। यागमध्ये स्वयं अग्निं प्रविशेत्। तेन च दग्धो म्रियेत। शास्त्रेणैव तथानुष्ठानस्य विहितत्वात् नात्यात्महत्यादोषः प्रसज्यते। यागस्यारम्भस्तु अन्ययागतुल्यमेव ऋत्विग्वरणपूर्वकं भवति ॥

तत्र यागमध्ये यजमानस्याग्निप्रवेशात्परं ऋत्विग्भिः प्रक्रान्तं कर्म परिसमापयितव्यं वा? उत तावत्येवोत्सृज्य यथेच्छं गन्तव्यं वा? इति संशयः।

तथैवोत्स्रष्टव्यं इति पूर्वपक्षः। जीवति यजमाने तदभ्युदयाय ऋत्विग्भिः कर्म कर्तव्यम्। मृते तु तस्मिन् व्यर्थं कर्मानुष्ठानम्। तदिदं 'सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात्' इति पूर्वपक्षसूत्रेणोद्भाव्यते ॥

प्रक्रान्तं कर्म न मध्ये उत्स्रष्टव्यम्। परिसमाप्ति यावत्कर्तव्यमेवेति सिद्धान्तः। यागमध्ये अग्निं प्रविशन् यजमानः 'ब्राह्मणास्समापयत मे यज्ञं' इति ऋत्विजः संप्रार्थ्यैवाग्निं प्रविशति, न तूष्णीम्। अतस्तत्प्रार्थनानुरोधः ऋत्विग्भिः कार्य इति ॥

दशमाध्यायस्य द्वितीयपादे षोडशाधिकरणमारभ्य द्वाविंशाधिकरणपर्यन्तं अस्थियज्ञाख्यं याग मधिकृत्य विचारः क्रियते। सत्रयागे सप्तदश पुरुषाः दीक्षिताः यागं कुर्युः। ये यजमाना स्तएव ऋत्विजश्च भवन्त्यत्र। दीर्घकाल कर्तव्योऽयं सत्रयागः। तत्र यदि यागपरिसमाप्तेः पूर्वमेव तेषां मध्ये

कश्चिन्म्रियते, तदा कथं यागानुष्ठानं कर्तव्यम्? इति प्रश्नो भवति। वेदेनैवात्र समाधानमुक्तम्। यो मृतः, तस्य सन्निहितं बान्धवं तत्स्थाने दीक्षयित्वा तेन सह याग मनुष्ठाय समापयेयुरितरे ऋत्विजः। मृतस्य त्वस्थीनि सुरक्षितानि स्थापयितव्यानि कृष्णाजिने बद्धानि। संवत्सरा दूर्ध्वं तान्यस्थीनि यजमानस्थाने स्थापयित्वा यागान्तरं कर्तव्यम्। अस्य यागान्तरस्य अस्थियज्ञ इति नाम वेद एव कृतम्। 'यदि सत्राय दीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठस्स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ततस्संवत्सरेऽस्थीनि याजयेत्' इति वाक्ये अयं विषयः कथ्यते। रुचिरोऽयं विचारः। 'स्तोत्रेस्तोत्रे अस्थिकुम्भं निदधाति' इत्यत्र कोऽपि विधिरस्ति। अधुनातना अपि व्यपदिष्ट-महापुरुषस्य मरणे जाते देशान्तरवर्तिना अपि अस्थिकलशं नीत्वा दर्शयन्ति। चिरकालात्पूर्वमेव दिष्टं गतस्य भगवतो बुद्धस्य दन्ताः अद्यावधि विहारे परिपाल्यन्ते। एवंविधानां संप्रदायानां मूलभूतोऽयत्यो विचारः सहृदयै-रनुभाव्यः॥

दशमाध्यायस्य चतुर्थपादे पञ्चदश मधिकरणं 'विधिशब्दाभिधानाधि-करण'मिति व्यपदिश्यते। 'विधिशब्दस्य मन्त्रत्वे भावस्स्यात्तेन चोदना' इत्येकसूत्रात्मकमिद मधिकरणम्। सिद्धान्तसूत्रमेतत्। उत्सूत्र एवात्र पूर्वपक्षः॥

'विधिवाक्ये येन शब्देन देवताया निर्देशः कृतोऽस्ति, तेनैव शब्देन तद्देवतायाः निगदेषु कीर्तनं कर्तव्यम्। न पर्यायशब्देन।' इत्यत्र निर्णीयते। यथा —

'आग्नेयोऽष्टाकपालः' इत्यस्मिन्वाक्ये 'अग्नि' शब्दः श्रुतः। तस्मात् अस्य यागस्य अग्निर्देवता भवति। अग्नेः अनेकानि नामानि विलसन्ति। शुचिः पावकः - जातवेदाः - कृशानुः - वैश्वानरः - इत्यादीनि। अग्निशब्देनैव तु निगमेषु देवताया अभिधानं कर्तव्यम् - न शुचि - पावकादिशब्दैः। सर्वेषामेतेषां पदानां निघण्टुग्रन्थेषु प्रायपाठेनैकार्थत्वं यद्यपि सर्वसंप्रतिपन्नम्; तथापि विधिशब्दे-नैवाभिधानं देवताया नियम्यते। नन्वेवं अर्थ मनादृत्य शब्दस्यैव प्राधान्ये निर्वर्ण्यमाने शब्दस्यैव देवतात्वं प्रसज्येत। मन्त्रार्थवादेतिहासपुराणादिप्रसिद्धं देवताया विग्रहादिमत्त्वं गगनकुसुमायमानं स्यात्। 'इष्टमेवैत दस्माकम्' इति

केचिदुद्घुष्यन्ति। फलवतीग्रन्थकारस्तु स्वाभिप्राय मत्र विस्पष्टं प्रख्यापयति :— '[1]शब्देन हविस्संबन्धे शब्ददेवतास्वप्रसक्तियंद्यप्यनभिमतैषाम्, तथापि परमते शब्ददेवतापक्षेऽपि अग्निपदेनैवाभिधानमिति सुतरां शुच्यादिपदानामप्रसङ्गः इत्येतदर्थं, न तु तदभिमत मित्युपन्यस्तम्' इति ॥

अनेन देवताविग्रहादिक मङ्गीकुर्वतां वेदान्तिनां मत मेवास्य ग्रन्थकारस्याभिमतम्। न तु तदभाववादिनां मतमिति स्पष्टं ज्ञायते ॥

इत्थं फलवतीनाम्न्या अस्या मातृकाया मुद्रापण मस्माभिः बह्वायासपूर्वकं निर्व्यूढम्। एवंविधकार्यकरणे अस्माकं अधिकारसंपत्तिः ईषदपि नास्ति। अस्मदाचार्याः जगद्विख्यातवैभवाः समुचितेन शिक्षणेन अस्माकं चक्षुरुन्मीलितवन्तः। तदनुग्रह मेकमेवा वलंब्य अस्मिन्कर्मणि प्रवृत्ता वयम्। तद्बलेनैव च यथाकथञ्चित् उपात्तस्य कर्मणोऽन्त मस्पृशाम। अतोऽत्र नित्याधमर्णा वयं प्रथमतरं तेभ्यः कृतज्ञतां निवेदयामः। अस्मिन्मुद्रणे यदेव किञ्चि दुपपन्नमिव स्यात्, तत् तेषामेव तेजसः फलम्। यत्तु अनुपपन्नं तत्सर्वं अस्माकमेव बुद्धिमान्द्यविलसितमिति तत्त्व मावेद्यते। विकसितधिषणानां विद्वन्मणीनां निकटे तदर्थं क्षमाञ्च याचामहे ॥

एवंविधानां अत्यन्तोपयुक्तानां अन्येषु मातृकालयेषु अनुपलभ्यमानानां असङ्ख्यातानां संकलनं संरक्षणञ्च अस्मदीय पुण्यतम भारतदेश तिलकायमाने तञ्जापुरे[1] त्रिभिः राजवंशैः कृतम्। तत्तद्राजवंशकालीनैः विद्वद्वरेण्यैश्च सुबहु साहाय्य माचरित मत्र। तेभ्यस्सर्वेभ्यः समस्तैः भारतीयसज्जनैस्सह वयं कृतज्ञतामाविष्कुर्महे ॥

महाराष्ट्रराजेषु श्रीमान् शरभोजीराजः इमं मातृकालयं नानाप्रकारेण संवर्ध्य पर्यपालयत्। स्वयं विद्वान् सकलकलावल्लभश्चायं शरभोजिमहाराजः, यस्य नाम्ना वायं सरस्वतीमहाल् मातृकालयो व्यपदिश्यते। तस्मै सर्वैरन्तर्वाणिजनैस्सहिता वयं कृतज्ञतां निवेदयामः। राजवंशाना मागमापायित्वेन चिराय

---

१. फलवती ३८६ तमे पुटे ३८८ तमे च।

१ चोलराजाः - नायकराजाः - महाराष्ट्रराजाश्च त्रयः।

सम्यङ्निरीक्षणालाभात् अन्धं तमः प्रविष्टमिमं मातृकालयं राजकीयैर्नियुक्तः डाक्टर् A. C. बर्नल् महाशयो ररक्ष। विनश्यदवस्थस्यास्य मातृकालयस्य प्राणान् स एव प्रत्यस्थापयत्। शर्मण्य देशाभिजनस्यास्य, मन्ये प्राक्तनं जन्म भारतदेशीय विद्वत्कुले समभवत्, तद्वासनायाश्च पूर्वपुण्यवशेन अस्मिन्नपि जन्मनि अनुवृत्तिः समुन्मिमेष, तेनैव हेतुना अनितरसाध्यं अत्यद्भुतं सूचीपत्रं तेन विनिर्मितं सरस्वतीमहाल् मातृकाणाम्। अद्यतनानां विद्वज्जनानां सरस्वती-महाल् महार्णवं गाहमानानां इदमेव सूचीपत्रं हस्तावलम्बं ददाति। तस्य विषये नित्याधमर्णा भारतीया विद्वज्जनाः। तैस्सह वयमपि महानुभावायास्मै कृतज्ञतां निवेदयामः। अद्यत्वे असुलभं जीर्णश्चादसीयं सूचीपत्रं पुनर्नवीकर्तव्यम्। सरस्वतीमहाल् निर्वाहकाणां सर्वापेक्षया प्रथमतरं कर्तव्यमिदम्। तथा कुर्वन्त्विति तानभ्यर्थयामहे।

अस्मत्प्रियगुरुचरणाः सुगृहीतनामधेयाः डि. टि. ताताचार्यवर्या इदानीं वैकुण्ठे वसन्ति। एतद्ग्रन्थमुद्रणविषये बहुधा तैरुपकृतम्। तेभ्यो नमस्कुर्महे॥

संस्कृतभाषा संरक्षणैकतत्पराः तदर्थमेव स्वात्मानं समर्पितवन्तः Dr. V. राघवन् महाशयाः अत्र सुदूरमुपकृतवन्तः। नानादेशप्रसृमरकीर्तयः एते, अपूर्णस्याप्यस्य ग्रन्थस्य अवश्यप्रकाशनीयतां समुचितहेतुभिः राष्ट्रीयशासकानां सविधे उपापादयन्। तत्प्रस्तावेन च स्वयं तञ्जापुरसरस्वतीमहाल् ग्रन्थालयस्य साक्षात्सन्निधानं कृतवन्त एते, अस्मत्साहाय्येन मातृकागतान् विशेषान् सम्य-गवधृत्य ग्रन्थप्रकाशनार्थपरिकल्पितायां संस्थायां अध्यवोचन्। तादृशव्यवसाय-फलमेवेदं मुद्रणम्। निसर्गादेव संस्कृतभाषाभिवर्धनबद्धश्रद्धानां कर्मयोगिनां एतेषां विषये हार्दान् धन्यवादान् समर्पयामः॥

सरस्वतीमहाल् भूतपूर्वकार्यदर्शिनः अस्मत्प्रियसुहृदः रसिकश्रेष्ठाः विद्वत्पक्ष-पातिनः स्वयं प्रौढविद्वांसः तिरु. नी. कन्दस्वामिपिळ्ळै महाशयाः अस्य ग्रन्थस्य मुद्रणं अवश्यकर्तव्यमिति अस्मदीयमभिलाषं तथैवोररीकृत्य तदपेक्षितं संविधानं सद्यो व्यरीरचन्। इदानीं परिपूर्णतया मुद्रणं प्रापितमिमं ग्रन्थं द्रष्टुं ते न सन्ति। पूर्वतरं दिष्टगतिं गताना मेतेषां विषये हार्दां कृतज्ञता मावेदयामः॥

सरस्वतीमहाल् निर्वाहकैः पण्डितश्रेष्ठैश्च तदातदा बहूपकृतमत्र। चिरसंह-वासवशात् अस्माकं प्रियसुहृद्भावमुपगतानामेतेषां सर्वेषां विषये हार्दकृतज्ञता-विष्करणपूर्वकमाशास्महे, एवमेव सुदीर्घं कालं एवंविधे सत्कर्मणि व्याप्रियमाणा एते विजयन्तामिति ॥

अयं ग्रन्थः श्रीरङ्गदिव्यदेशे विराजमाने श्रीवाणीविलासमुद्रणालये संमुद्र्य प्राकाश्यं नीयते। एवंविधाना मुपयुक्तानां सद्ग्रन्थानां मुद्रापणे स्वभावत एव समुपचितश्रद्धा एतन्मुद्रणालयनिर्वाहकाः इति सुप्रसिद्धमिदम्। अस्य मुद्रणालयस्य अनितरसाधारणं भाग्यमिदं, यत् नानाशास्त्रसुशिक्षितमतयः ब्रह्मश्री वेङ्कटराम-शास्त्रिमहोदयाः अस्मिन्नुद्युक्ताः। प्रकृत्या अनलसाः एते महाविद्वांसः, अस्मिन् मुद्रणालये संमुद्र्यमाणान् ग्रन्थान् सश्रद्धं स्वयं प्रत्यवेक्षन्ते। प्रमादादिहेतुभिः प्रसक्तान् दोषानपनीय मुद्रणं श्लक्ष्णीकुर्वन्ति। अत एव 'श्रीवाणीविलास'मुद्रणानि विशिष्यन्तेतराम्। एतेषां, एतन्मुद्रणालयकार्यव्यग्राणा मन्येषाञ्च स भगवान् श्रीरङ्गशायी निरन्तरं मङ्गलमातनोतु ॥

श्रीरङ्गम्<br>पिङ्गल-माघ-कृष्ण-पञ्चमी<br>28—4—78

इति विदुषामनुचरः,<br>नावल्पाकं श्रीदेवनाथाचार्यः

## ( मातृकापत्राणां छायाचित्रानुबन्धिनो विषयाः )

फलवतीनाम्न्या अस्यां मातृकायां आदितः ९६ पत्राणि लुप्तानि। ९७ तममेव पत्रं विद्यमानेष्वाद्यम्। तस्य पूर्वभाग मुपेक्ष्य उत्तरभागमेव छायाचित्रग्रहणे उपायुञ्ज्महि; एवं सति एकप्रयोगेणैव ९८ तमपत्रस्य पूर्वभागोऽपि छायाचित्रे अन्तर्भावितः स्यादिति। तथैव कृतम्॥

परन्तु, छायाचित्रग्रहणकाले अस्माकं सान्निध्यं दुर्घटमासीत्। सरस्वतीमहाल् मातृकालय प्रधानाधिकृतेन इदं कार्यं निर्व्यूढम्॥

मातृकायाः आदौ मध्ये अन्ते चेति त्रिषु स्थानेषु तालपत्राणां छायाचित्रं गृहीत्वा मुद्रितपुस्तके संयोज्य वाचकमहाशयेभ्यो दर्शयितव्यमिति मतिरस्माकमासीत्। मातृकापत्राणि बहुधा भग्नानि। तेषां कथञ्चित् सङ्घटनेन यथावस्थितस्वरूपं संपाद्य, छायाचित्रग्रहणकाले संभावितवैरूप्यपरिजिहीर्षया अल्पतरप्रज्ञापत्र निक्षेपपूर्वकं सरस्वतीमहाल् प्रधानाधिकृताय कर्तव्यं सम्यगुपपाद्य छायाचित्रग्रहणनिर्वहणभारश्च निक्षिप्तस्तस्यैव हस्तेऽस्माभिः। तेनापि तथैवाङ्गीकृतम्। कृतश्च यथोद्दिष्टम्॥

हन्त! छायाचित्रे महत्तरं वैपरीत्यं जातम्। किङ्कर्तव्यतामौढ्यमस्माकमापतितम्॥

(१) त्रिष्वपि स्थानेषु तालपत्र भागद्वयस्यापि व्यक्ततरदर्शनार्हत्वं यथा स्यात्, तथा प्रतिरूपग्रहणमुद्दिष्टमस्माकम्। त्रिष्वपि स्थानेषु अन्यतरभागमात्रे स्पष्ट प्रतिपत्त्यर्हं, भागान्तरे तमोमयश्च छायाचित्रं गृहीतमस्ति॥

(२) प्रथमे द्वितीये च छायाचित्रे तालपत्रभागयोः पौर्वापर्यञ्च व्यत्यस्तम्। अधस्तनो भागः ऊर्ध्वं निवेशयितव्यः। ऊर्ध्वभागस्य च स्थान मधःप्रदेशे कल्पयितव्यम्। अतिमहानयं दोषः न जाने कथं लब्धास्पदः इति। तृतीये पत्रे परं नेदं वैपरीत्यं प्रसृतमिति मोमुद्यामहे॥

(३) तत्रापि प्रथमे पत्रेऽतिविचित्रं वैरूप्यं उपकल्पितं विराजते। वाचकमहाशयानां स्पष्टतरमिदं ज्ञायेत-यत्-पत्रमिदं मध्ये भग्नमिति। एवं सर्वाण्येव

पत्राणि बहुधा भग्नान्येतस्यां मातृकायाम् । महता प्रयत्नेन "पत्रखण्ड सन्धानं" कृत्वा पङ्क्तीनां यथावस्थितानुपूर्वीमुद्धृत्य मुद्रणं संपादितमस्माभिः । अस्मिन्नपि पत्रे तथा "सन्धानं" कृत्वा छायाचित्रग्रहणाय सन्नाहः परिकल्पितोऽस्माभिः । हन्त! फलकाले विपरीतमिदं जातम् । अस्य पत्रस्य दक्षिणार्धं व्यत्यासेन निक्षिप्तं छायाचित्रग्रहणकाले । वामभागे उपक्रान्तानां पङ्क्तीनां अनुवृत्तिः परिदृश्यमाने दक्षिणार्धे न दृश्यते । अन्या एव तत्रत्याः पङ्क्तयः । अत्रेदं तत्त्वम् :—अस्य पत्रस्य दक्षिणार्धे यः तिरोहितः परभागः तस्मिन् इमाः पङ्क्तयोऽनुवर्तन्ते । परिदृश्यमाने तु भागे, वामार्धस्य तिरोहिते परभागे विद्यमानाः पङ्क्तयोऽनुवर्तन्ते । अयं व्यत्यासः अचिन्तिततया छायाचित्रग्रहणकाले सञ्जात इति संभावयामः । पत्रस्यास्य दक्षिणार्धं प्रमादात् अधः पतितं स्यात् । तत् आदाय यथास्थानं निक्षिप्य छायाचित्रं गृहीतं स्यात् । तस्मिन्नेव समये अयं व्यत्यासः लब्धास्पदः स्यात् ॥

४ श्वेतं पत्रखण्डं तालपत्रे प्रत्यभिज्ञानाय वयं न्यक्षिपाम । तथा प्रार्थितं तत्रभवता सरस्वतीमहाल् प्रधानाधिकृतेन । अहो! छायाचित्रग्रहणकाले तस्य दूरीकरणं आवश्यकमिति नेदमुपपादनीयम् । परन्तु अनेन न कृतमिदम् । तेन हेतुना प्रज्ञापत्ररूपः श्वेतः पत्रखण्डः अस्मिन् पत्र भागद्वयेऽपि मातृकापत्रस्थितान्यक्षराणि तिरोदधत् प्रकाशतेतराम् ॥

इदं सर्वमनादृत्य यथावस्थित ग्रन्थसन्दर्भं अनुसंधाय मुद्रितपुस्तके—हस्तलिखितप्रत्यादर्शे च दृष्टिं प्रविचालयद्भिरस्माभिः "ग्रन्थाक्षरे" पङ्क्तीनामुद्धारः कृतोऽस्ति । वाचकमहाशयैः इदं सर्वं मनसि कृत्वा मातृकातालपत्रछायाचित्रवाचनकाले अवहितैर्भाव्यमिति सप्रश्रयं विज्ञापयामः । तदर्थमेव इदं सर्वं वृत्तं विस्तरेण निवेदितम् ॥

ना. श्री. देवनाथाचार्यः
(संपादकः)

## BLOCK No. 1.



अत्रत्यो ग्रन्थसंदर्भः समनन्तरपुटेषु ग्रन्थाक्षरेणैव यथामातृकं मुद्रापितो वर्तते । मुद्रितपुस्तके च (सं) ३ पुटादारभ्य ५ पुटे १६ पंक्तिं यावत् दृश्यते ।

## (Diseription to Block No. I,)

## 97 B.

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ... ... ... ... ... ... ஜெ௰ாவஷெ௱-

ஸ்யாச் வகாரெண ஹெசுவஜ்ஜாடு ... ... ... ... ... ... கஉ-

ணொ ஜெ்யாதி ... ... ... ... கஷ்டுாஹ்யம் ஞுஸம்ஶ்ரும் ஷுயொஜநம்

ஷுதிஸம்யொமாவியாநாஷெவநஷஷ்யஸ்ய ஷுவதஉராநஸ்யாஹி-

ஸம்பஙஃ ஞுஹிஉெவ்யந கஉணீ கதாஉகெவந ஸம்பஙஃ

ந ஸ வீ தாயஉகெவ கஉணீ தது ஷு ... ... ...

வதெஉதெதாயஉஃ தஷ்ஜஸா சுவஸாஜெதொஃ ௱ஞூஷெ

வாகெய்ஷு ஜெ்யாதிஷொஉாஹீநாம் கஜெஉாவஷெ௱ஸ்ஸ்யாச் கஹீஉ-

ஸசிதம் ஸாயீஸசிதம் ஞுமஉம் ஷுதாஉவஷெ௱ா வியாநம் ஸ்யாச்

சுநாயா ஞு ... ண ஜெ்யாதிஷொஉம் ஹாவயெச் ஐதி கஜுஷெ ஹஜும்

கஜ்ஞுடு ஜெ௱ாதகம் கஉ ஷெஷம் ஸம்ஹவதி தஷாஹாவாஉகெவ-

ஷெநவ ஞுமஉஸ்யாநயொ ந த ஸாயநகெவந ஷுயொஜந-

ஞுநஷ்டாநசிவம் வசிவஉவகெஷ ஞுஷெமஉண யகெஷ்யு ஐதி

ஸம்கஜுஃ ஸிஜாஷெஷ யஷாஶுதஜிதி —— ஹஜுாயிஉகாது

கஉணஶாஜ்ஸம் ஸவஉாயிகாஸம் ஸ்யாச் —— ஐஉராநாயதெ

உ௱உவசிணஉாஸாஹ்யாம் ஞுமஉகாஷொ யஜெத ஜெ்யாதிஷெ-

ாஷெந ஞுமஉகாஷொயஜெத ஐதெ்யவஉாஜி தது ஸம்௱யஃ கிஜிஷம்

௱ாஜ்ஸம் ஜஞுஉாதாயிகாஸம் உத ... ... ... ... ... ... ... — ...

ஐதி உ௱உவசிணஉாஸாஜிஷு உநஷ்யாஹீநு சுஜிதாஜி௱ெவ

யஜதி ஸாஉாநாச் தியஉமாஹீநாம் ஸவெஉஷாம் ஹஜுாயிஉகாச்

ஞுமஉாஜி௱சிவஹஜுகாஜிகாச் கஉணஃ உ௱உவசிணஉாஸாஃ

... ... ... ... ... ... உ௱உவசிணஉாஸாஹ்யாஜிதாஜி ௱ாஜ்ஸம்

---

98-A. 97-B, अनयोः छायाचित्रग्रहणकाले व्यत्यासः जातः (सं)

दक्षिणार्धपत्रस्थान्यत् ?

सिद्धान्ते समयप्राप्त्यधिकारे चातीतानां पृष्टं — लिङ्ग-विशेषनिर्देशात् पुंस्त्वंयुक्तमेवेति नियमः — दर्शपूर्णमा-साभ्यां स्वर्गकामो यजेत ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादिषु उत पुरुषाधिकारः किं वा स्त्री-पुंसयोरनियमाधिकारः इति संदेहे ज्योतिष्टोमादि-कं कर्म पुंयुक्तं पुरुष संयुक्तमेवेति नियमः श्रूयते येन कर्मणा हेतोः स्वर्गकामः इति लिङ्ग-विशेषस्य पुंस्त्वस्य निर्देशात् न स्त्री तस्मिन्नेव निर्दे-शादपीति — तल्लक्षणात् — चकारो हेतुवचनसम-र्थ्यायाः स्वर्गकामेन कर्मणा साधनेन ब्राह्मणा ... ... ... ... ... ... ... ... ... पुंस्त्वस्य ब्राह्मणस्य तल्लक्ष-णात् पुरुषवाचकविभक्तेः ब्राह्मणेन तद्विधा-नात् तदेव यदि ... ... ... ... ... ... ... साधन-त्वं स्त्रिया ... ... ... — जातिश्च बादरायणो विशे-षात् तस्मात् स्त्र्यपि श्रूयते जात्युपलक्षणात्
—

(98-A ends)

—

## BLOCK No. II.



अत्रत्यो ग्रन्थसंदर्भः समनन्तरपुटेषु ग्रन्थाक्षरेणैव यथामातृकं मुद्रापितो वर्तते । मुद्रितपुस्तके ३०१ पुटे ६ पंक्तेरारभ्य ३०३ पुटसमाप्तिं यावत् दृश्यते । (सं)

## (Discription to Block No. II,)

## 210-B.

[illegible]

---

अत्रापि व्यत्यासः छायाचित्रग्रहणकाले पत्रभागयोः संजातः (सं)

𑌵𑌿𑌕𑌾𑌰𑌃 𑌇𑌤𑌿 𑌯𑌥𑌾 𑌚 𑌹𑌵𑌿𑌰𑍍𑌵𑌿𑌕𑌾𑌰𑌃 𑌤𑌥𑌾 𑌕𑌿𑌂 𑌸𑍍𑌥𑌾𑌲𑍍𑌯𑌾𑌃
𑌹𑌵𑌿𑌰𑍍𑌵𑌿𑌕𑍍𑌰𑌿𑌯𑌤𑍇 𑌉𑌤 𑌨𑍇𑌤𑌿 𑌇𑌤𑌿 𑌤𑌤𑍍𑌰 𑌚𑌰𑍁𑌹𑌵𑌿𑌰𑍍𑌵𑌿𑌕𑌾𑌰
𑌏𑌵 𑌸𑍍𑌥𑌾𑌲𑍀 𑌅𑌪𑌿 𑌹𑌵𑌿𑌰𑍍𑌵𑌿𑌕𑌾𑌰 𑌏𑌵 𑌸𑍍𑌯𑌾𑌤𑍍 𑌨 𑌕𑌪𑌾𑌲𑌵𑌿𑌕𑌾𑌰𑌃
𑌕𑍁𑌤𑍋 𑌹𑍇𑌤𑍋𑌃 𑌇𑌜𑍍𑌯𑌾𑌸𑌂𑌯𑍋𑌗𑌾𑌤𑍍 𑌸𑌨𑍍𑌨𑌯𑌨𑍍𑌤𑌿 𑌇𑌤𑌿
𑌸𑌮𑍍𑌪𑍍𑌰𑌦𑌾𑌯𑌵𑌤𑌾𑌂 𑌚 𑌇𑌜𑍍𑌯𑌾𑌯𑌾𑌂 𑌹𑌵𑌿𑌷 𑌏𑌵 𑌸𑌂𑌯𑍋𑌗𑌾𑌤𑍍
𑌕𑌪𑌾𑌲𑌵𑌿𑌕𑌾𑌰𑌸𑍍𑌯 𑌚 𑌤𑍁 [illegible] 𑌯𑌾𑌗𑍋𑌪𑌕𑌾𑌰𑌿𑌤𑍍𑌵𑌾-
𑌤𑍍 [illegible] 𑌵𑌿𑌕𑌾𑌰 𑌏𑌵 𑌚𑌰𑍁𑌸𑍍𑌥𑌾𑌲𑍀 [illegible] — 𑌪𑍍𑌰𑌸𑌿-
𑌦𑍍𑌧 𑌹𑌣𑌾𑌚𑍍𑌚 — 𑌚𑌕𑌾𑌰𑍋 𑌵𑌿𑌶𑍇𑌷𑌾𑌤𑍍 𑌤𑍁 𑌹𑌵𑌿𑌰𑍍𑌵𑌿𑌕𑌾𑌰-
𑌪𑌕𑍍𑌷𑌮𑍇𑌵 𑌪𑌕𑍍𑌷𑌯𑌤𑌿 𑌤𑌤𑍍𑌰 𑌪𑍍𑌰𑌸𑌿𑌦𑍍𑌧 𑌹𑌣𑌾𑌤𑍍 [illegible]
𑌸𑍍𑌥𑌾𑌲𑍀 [illegible] 𑌚𑌰𑍁𑌶𑌬𑍍𑌦𑌸𑍍𑌯 𑌪𑍍𑌰𑌸𑌿𑌦𑍍𑌧𑌸𑍍𑌯 𑌚 𑌨
[illegible] 𑌹𑌣𑌾𑌤𑍍 𑌪𑍍𑌰𑌯𑍋𑌗𑌾𑌤𑍍 𑌸𑍍𑌥𑌾𑌲𑍀

( 210–B ends )

---

## (211-A Begins)

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... — [illegible] 𑌸𑌂𑌯𑍋𑌗𑌾𑌤𑍍 — 𑌚𑌕𑌾𑌰𑌃
𑌸𑍍𑌥𑌾𑌲𑍀𑌵𑌿𑌕𑌾𑌰𑌪𑌕𑍍𑌷𑌪𑍍𑌰𑌵𑍃𑌤𑍍𑌤𑌃 ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... [illegible]
𑌕𑍁𑌤𑍋 𑌹𑍇𑌤𑍋𑌃 [illegible] 𑌸𑌂𑌯𑍋𑌗𑌾𑌤𑍍 [illegible] 𑌸𑍍𑌥𑌾𑌲𑍀 𑌸𑌂-
[illegible] 𑌚𑌰𑍁𑌶𑌬𑍍𑌦 𑌲𑌕𑍍𑌷𑌣𑌯𑌾 𑌪𑍍𑌰𑌵𑌰𑍍𑌤𑌤𑍇 [illegible] ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... [illegible] 𑌲𑌕𑍍𑌷𑌣𑌯𑌾 𑌚𑌰𑍁𑌶𑌬𑍍𑌦 𑌇𑌤𑌿
[illegible] — 𑌨 [illegible] — ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... 𑌚
𑌪𑍍𑌰𑌸𑌿𑌦𑍍𑌧𑌪𑍍𑌰𑌯𑍋𑌗𑌸𑍍𑌯 𑌚𑌰𑍁𑌶𑌬𑍍𑌦𑌸𑍍𑌯 [illegible]
[illegible] 𑌸𑍍𑌥𑌾𑌲𑍀𑌸𑌂[illegible] 𑌲𑌕𑍍𑌷𑌣𑌯𑌾 𑌚 ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
— 𑌕𑌪𑌾𑌲𑌵𑌿𑌕𑌾𑌰𑍋 𑌵𑌾 𑌵𑌿𑌷𑌯 [illegible] — 𑌕𑌪𑌾𑌲
𑌵𑌿𑌕𑌾𑌰𑍋 𑌵𑌾 𑌕 ... ... ... ... ... ... ... ... ... ... ... ...
... ... 𑌵𑌿𑌕𑌾𑌰𑌃 𑌵𑌿𑌷𑌯𑍇 𑌹𑌵𑌿𑌰𑍍𑌵𑌿𑌕𑌾𑌰𑌸𑍍𑌯 𑌵𑌿𑌷𑌯𑍇 [illegible]
𑌕𑌪𑌾𑌲𑌵𑌿𑌕𑌾𑌰 𑌏𑌵 𑌕𑍁𑌤𑍋 𑌹𑍇𑌤𑍋𑌃 [illegible]

## BLOCK No. III.



अत्रत्यो ग्रन्थसंदर्भः समनन्तरपुटेषु ग्रन्थाक्षरेणैव यथामातृकं मुद्रापितो वर्तते। मुद्रितपुस्तके ३९५ पुटे १३ पंक्तेरारभ्य ३९८ पुटे १२ पंक्तिपर्यन्तं दृश्यते।

(सं)

## (Discription to Block No. III,)

### 245-B.

[illegible]

## अवधेयम्

अस्यां मातृकायां आदितः षण्णवतिपत्राणि लुप्तानि । सप्तनवतितममेव पत्रं आदौ वर्तते । तदपि वामार्धविकलम् । लुप्तेषु पत्रेषु आदितः पञ्च अध्यायाः गताः । सप्तनवतितमे (मातृकायाः आद्ये) पत्रे पञ्चमाध्याय चतुर्थपादस्य सप्तमाधिकरणावसानपङ्क्तिः, अष्टमाधिकरणैकदेशश्चोपलभ्येते । षष्ठाध्यायप्रथमपादस्य आद्यमधिकरणद्वयमपि वामार्धहीनेऽस्मिन्नेव मातृकायाः आद्यपत्रे लब्धास्पदं असमग्रमेवोपलभ्यते । उपरितनान्यपि पत्राणि पार्श्वद्वयहीनानि अतिजर्जराणि कीटजग्धानि च । विद्यमानानामन्तिमे २४६ तमे पत्रे दशमाध्यायचतुर्थपादे २५-तमं अधिकरणं लिखितमस्ति । यावच्छक्यं महत्तरं यत्नमास्थाय समुद्धृत्य लिखितान्यक्षराणि प्राकाश्यं नीयन्ते । दृष्ट्वा सहृदयाः प्रमाणम् ॥

ना. श्री. देवनाथाचार्यः

(संपादकः)

# मुद्रणसङ्केतविवरणम्

अस्मिन्मुद्रणे :—

१ सूत्रेषु वृत्तिग्रन्थे वा धनुश्चिह्नान्तर्गतो भागः मातृकायां (पत्रभागस्य भग्नत्वात्) अनुपलभ्यमानः अस्माभिर्योजितः ।

२ "क" इति अलहाबादनगरमुद्रापितस्य आङ्गलानुवादसहितस्य जैमिनिसूत्रपुस्तकस्य संज्ञा ।

३ "ख" इति पुण्यनगरमुद्रापितस्य भाष्यवार्तिकसहितस्य पूर्वमीमांसादर्शनस्य संज्ञा ।

४ मातृकायां भग्नेषु लुप्तेषु पत्रभागेषु विद्यमानं दैर्घ्यं सम्यक् परिच्छिद्य, अधस्तात् उपरिष्टाच्च विद्यमानासु पङ्क्तिषु अक्षरसन्निवेशमवलम्ब्य लुप्ताक्षरसङ्ख्यासूचनाय तत्र तत्र ... ... ... ... एवंरूपं चिन्हं दत्तमस्ति ।

(संपादकः)

श्रीः

जैमिनिसूत्रवृत्तेः फलवत्याः

# विषयानुक्रमणिका

---

| क्रमाङ्कः | विषयाः | पृष्ठम् |
|---|---|---|
| ७ | भक्षप्रैषाधिकरणम् | ११५-११६ |
| ८ | अनर्थकव्रतानित्यता | ११६ |
| ९ | पशुचोदनाधिकरणम् ( छागपशुन्यायः ) | ११६-१२१ |

## सप्तमोऽध्यायः

### प्रथमः पादः



### द्वितीयः पादः



### तृतीयः पादः

## नवमोऽध्यायः

### प्रथमः पादः

| क्रमाङ्कः | विषयाः | पृष्ठम् |
|---|---|---|
| २३ | कण्वरथन्तरे अविरुद्धानां बृहद्रथन्तरधर्माणां समुच्चयः | २४३ |
| २४ | बृहद्रथन्तरोभयसामके क्रतौ रथन्तरादिधर्माणां प्रकृतिवत् व्यवस्था | „ |
| २५ | पार्वणहोमयोर्विकृतावनतिदेशः | २४३-२४४ |
| २६ | पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानम् | २४४ |
| २७ | समिदादिपदानां नामधेयत्वेन प्रयाजानामारादुपकारकत्वम् | „ |

## तृतीयः पादः

| | | |
|---|---|---|
| १ | सौर्यादिविकृतावतिदिष्टमन्त्रे वैकृतद्रव्यादिवाचकपदोहः | २४५-२४६ |
| २ | मैन्द्रे चरौ प्राकृतबर्हिस्स्तरणमन्त्रे हरितपदस्थाने रक्तपदोहः | २४६-२४९ |
| ३ | यूपस्वर्वाधिकरणम् | २४९-२५० |
| ४ | पाशाधिकरणम् | २५०-२५१ |
| ५ | पाशविकल्पाधिकरणम् | २५२-२५३ |
| ६ | दर्शपूर्णमासयोः द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्यानूहः | २५४ |
| ७ | विकृतावपि द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्यानूहः | „ |
| ८ | पशुधर्मसामानविध्यपक्षे 'अस्मै' इत्यध्रिगुप्रैषस्याविकारः | २५५ |
| ९ | प्रतिनिध्यधिकरणम् | २५५-२५६ |
| १० | पशुगणे अध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकचक्षुरादिपदानामनूहः | २५६-२५७ |
| ११ | एकधाधिकरणम् | २५७-२५८ |
| १२ | मेधपत्यधिकरणम् | २५८-२६१ |
| १३ | बहुदेवताधिकरणम् | २६१-२६२ |
| १४ | अर्थान्तराधिकरणम् | २६२-२६३ |

## चतुर्थः पादः

| | | |
|---|---|---|
| १ | वङ्क्रयधिकरणम् | २६३-२६८ |
| २ | अश्ववङ्क्रयधिकरणम् | २६९-२७१ |

## दशमाध्यायः

### प्रथमः पादः

## तृतीयः पादः

श्रीः

# जैमिनिसूत्रवृत्तिः

# फलवती

—*—

(पञ्चमाध्याये चतुर्थपादे सप्तमाधिकरणम्-

सोमात् सान्नाय्यविकाराणां उत्कर्षाधिकरणम्–७)

**सूत्रम् — सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत् ॥ २५ ॥** (सि)

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... सोमादूर्ध्वमेव भवन्ति । कुत एतत्? प्रकृतिवत्–यथा प्रकृतिभूतसान्नाय्य ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... (प्रयो) जनन्त्वनुष्ठानरूपं अनियम-नियमाभ्यां व्याख्यातम् ॥ ७ ॥

(सोमविकाराणां दर्शपूर्णमासाभ्यां प्रागकर्तव्यताधिकरणम्–८)

**[1] तथा सोमविकारो द(र्शपूर्णमासाभ्याम् ॥२६॥)** (सि)

सोमविकारेषु गवादिष्वेकाहेषु संदेहः — दर्शपूर्णमासाभ्यां प्रागूर्ध्वञ्च प्रयोक्तव्याः? उतोर्ध्वमेव? इति ।

**सोमविकारः**–गवादिः, दर्शपूर्णमासाभ्यां ऊर्ध्वमेव स्यात् । तथा-दर्शपूर्णमासोत्तरकालं सोमस्यानुष्ठानं तथेति । न प्राग्दर्शपूर्णमासाभ्यां वैकृतानुष्ठानं,

---

१ तथा सोमविकारा दर्शपूर्णमासाभ्यां. क. ख.

तस्यार्थिकत्वात् । आर्थिकश्च चोद ... ... ... ... ... ... दनप्रदिशन्तीत्युक्तम् । दर्शपूर्णमासोत्तरकालता तु याऽस्ति, सैव चोदकेनातिदिश्यत इत्यर्थः ॥ २६ ॥

प्रयोजनन्त्वनुष्ठानरूपं प्राग्वत् पक्षयोः स्पष्टम् ॥ ८ ॥

इति जैमिनिसूत्रवृत्तौ फलवल्यां पञ्चमस्याध्यायस्य चतुर्थः पादः ।

---

पञ्चमाध्यायस्समाप्तः ।

हयग्रीवाय नमः । स्वप्रभाशाहै नमः ।

अद्वैताश्रमेभ्यो नमः ।

---

## षष्ठाध्याये प्रथमः पादः

(कर्मसंयोगाधिकरणम् – १)

**द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ॥ १ ॥ (पू)**

"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येवमादि समाम्नातम् ।

तत्र संदेहः – किं स्वर्गो गुणः, कर्म प्रधानतः? उत कर्म गुणतः, स्वर्गः प्रधानतः? इति ।

द्रव्याणां – स्वर्गशब्दाभिधेयसूक्ष्मकौशेय (वस्त्रादी)नां, कर्मसंयोगे- ... ... ... ... ... ... ... ... ... ... ... ... ... ... दिकर्मसंबन्धे वक्तव्ये, गुणत्वेन – उपसर्जनत्वेन–साधनत्वेनैव, अभिसंबन्धः – अन्वयः । नतु भाव्यत्वेन ॥ १ ॥

**असाधकन्तु (तादर्थ्यात्) ॥ २ ॥ (सि)**

तुना पक्षो व्यावर्त्यते । प्रीतिरूपत्वात् स्वर्गः, असाधकं – कर्म प्रति न करणम् । कुतो हेतोः? तादर्थ्यात् — ... ... ... ... ... ... ... ... ... ... ॥ २ ॥

**(प्रत्यर्थश्चाभिसंयोगात्कर्मतो ह्यभिसम्बन्धस्तस्मात्क) र्मोपदेशः स्यात् ॥ ३ ॥**

चकारेण हेत्वन्तरं ... ... ... ... ... ...कर्मणो ज्योति ... ... ... ... अदुग्यं स्वसंश्रं प्रयोजनं प्रति संयोगात्–विधानादेव, मनुष्यस्य प्रवर्तमानस्य अभिसम्बन्धः–आभिमुख्येन कर्मणि कर्तृत्वेन संबन्धः। न स प्रीत्यर्थत्वे कर्मणि तत्र प्र ... ... ... ... वर्तेतेत्यर्थः। तस्मात्–समा अवसाद्धेतोः ईदृशेषु वाक्येषु ज्योतिष्टोमादीनां, कर्मोपदेशः स्यात्–कर्मीभूतं-साध्यीभूतं स्वर्गं प्रत्युपदेशो विधानं स्यात्। अन्यथा स्वर्गेण ज्योतिष्टोमं भावयेत् इति कल्पने फलं कल्प्यम्। क्लेशात्मकं कर्म। नेदं संभवति। तस्माद्भाव्यत्वेनैव स्वर्गस्यान्वयो नतु साधनत्वेन ॥ ३ ॥

प्रयोजनन्त्वनुष्ठानरूपं – पूर्वपक्षे "स्वर्गेण यक्ष्ये" इति संकल्पः, सिद्धान्ते तु यथाश्रुतमिति ॥ १ ॥

(सर्वाधिकाराधिकरणम्–२)

**[1]फलार्थित्वात्तु कर्मणश्शास्त्रं सर्वाधिकारं स्यात् ॥ ॥ ४ ॥ (पू)**

इदमाम्नायते — दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत– ज्योतिष्टोमेन स्वर्गकामो यजेत इत्येवमादि।

तत्र संशयः— किमिदं शास्त्रं जन्तुमात्राधिकारं? उत (समर्थमनुष्याधिकारं?) इति।

दर्शपूर्णमासादिषु मनुष्यादीन् अमितादिश्ये च यजतिसमाम्नानात्, तिर्यगादीनां सर्वेषां फलार्थित्वात्–स्वर्गादिरूपफलकामित्वात्, कर्मणः–दर्शपूर्णमासादि (कर्मणः, शास्त्रं–) दर्शपूर्णमासाभ्यामित्यादि शास्त्रं, सर्वाधिकारं–अविशेषेण सर्वे अधिकारिणो यस्मिन् तत्–अविशेषाधिकारं स्यात्, अविशेषेण सर्वान् (अधिकरोतीत्यर्थः) ॥ ४ ॥

---

१ फलार्थत्वात्कर्मणः क. ख.

**कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते ॥**

॥ ५ ॥ (सि)

वाकारः पक्षव्यावर्तकः। कृत्स्नाङ्गोपसंहारस ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... श्रुतिसंयोगात्-श्रुतिवि (हित) कर्मसंयोगात्, दर्श-
पूर्णमासा ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ ५ ॥

**[1]न देवमात्रं देवतान्तराभावात् ॥ ६ ॥**

अङ्गोपसंहारदक्षत्वेऽपि देवमात्र-देवता अपि न अधिक्रियन्ते कर्मणि। कुतः? देवतान्तराभावात्-न ह्यग्न्यादि (देवता) कर्तृके कर्मणि हविर्भोक्त्रग्न्यादिदेवतान्तरमस्ति। न च स्वस्मै स्वेन हविस्त्यागः कर्तुं युक्तः। तस्मान्नाधिक्रियन्ते देवताः। ६ ॥

**न ऋषीणामार्षेयाभावात् ॥ ७ ॥**

ऋषीणामपि नाधिकारः कर्मणि। कुतः? आर्षेयाभावात्-भृग्वाद्यृषिकर्तृके कर्मणि वरणीयभृग्वाद्यन्तराभावात्। नहि भृग्वादयः आत्मानमेव वृण्वते। तस्मात्तेषामपि नाधिकारः॥ ७ ॥

**न तिरश्चां द्रव्यपरिग्रहः ॥ ८ ॥**

तिरश्चां-श्येन शुनकादीनां यतो द्रव्यपरिग्रहो नास्ति असमर्थत्वात् द्रव्यार्जने। तस्मादपि नाधिकारः॥ ८ ॥

प्रयोजनन्त्वनुष्ठानरूपं-पूर्वपक्षे तिर्यगाद्यधिकारे च, सिद्धान्ते समर्थाधिकारे चातितरां स्पष्टम्। २ ॥

---

१ एतदादिसूत्रत्रयं शाबरभाष्यस्थवाक्यरूपम्। न तु जैमिनिप्रणीतत्वेन सूत्रक्रमे पूर्वैः मुद्रापितम्। अत्र तु सूत्रत्वमेवैषां कल्पितम्।

(क्रतुषु स्त्रिया अप्यधिकाराधिकरणम्–३)

**लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः ॥ ९ ॥ (पू)**

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत–इत्येवमादिषु उत पुरुषाधिकारः? किंवा स्त्रीपुंसयोरनियमाधिकारः? इति संदेहे —

ज्योतिष्टोमादिकं कर्म, पुंयुक्तं–पुरुषसंयुक्तमेवेति ऐतिशायनः आचार्यो मेने। कुतो हेतोः? स्वर्गकामः इति लिङ्गविशेषस्य–पुँल्लिङ्गस्य निर्देशात्। न स्त्री, तल्लिङ्गेन निर्देशाभावादिति ॥ ९ ॥

**[1]तद्भक्तित्वाच्च ॥ १० ॥**

चकारो हेत्वन्तरसमुच्चयार्थः। "अविज्ञातेन गर्भेण हतेन ब्रह्महा" ... ... ... ... ... ... ... ... ... ... ... (हत्रय आसाधयते चिनु) पुँल्लिङ्गस्य भ्रूणशब्दस्य तद्भक्तित्वात्–पुरुषवाचकविभक्तिमत्वात्, भ्रूणशब्देन तदभिधानात् तस्यैव धर्मो ... ... ... साधनत्वं अश्रधान ... ... ... ... ॥ १० ॥

**जातिन्तु बादरायणोऽविशेषात् तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥ ११ ॥ (सि)**

... ... ... ... ... ... ... ... ... ... ... ... ... ...

जाति ... ... ... र्य स्वर्गकामशब्दः अविवक्षितलिङ्गस्सन् वर्तते। कुतः? अविशेषात्–स्वर्गकामनायोगस्य उभयत्राप्यविशेषात्। तस्मात्– ... ... ... ... प्रागेवज्यो ... ... ... ... तीयेत। जात्यर्थस्य – कामनायोगसामान्यरूपार्थस्य अविशिष्टत्वात् – स्त्रीपुंसयोस्साधारणत्वात् उभयोः कर्तृत्वम्। स्त्रीनिवृत्तिपरत्वे परिसंख्या अष्टदोषदुष्टा प्रसज्येत ॥ ११ ॥

---

१ "तद्भक्तित्वाच दोषश्रुतिरविज्ञाते" "क" तद्युक्तित्वाच ... ख.

[1]द्रव्यवत्त्वात्तु पुंसां स्यात्, द्रव्यसंयुक्तं, क्रयविक्रयाभ्यां अद्रव्यत्वं स्त्रीणां, द्रव्यैस्समानयोगित्वात् ॥ १२ ॥

तुना उक्तः पक्षो व्यावर्त्यते। पुंसामेवाधिकारः स्यात्। कुतः? द्रव्यवत्त्वात्–स्ववत्त्वात्। कर्म च द्रव्यसंयुक्तं–द्रव्यसाध्यमिति यावत्। तस्मात् पुंसोऽधिकारः। क्रयविक्रयाभ्यां–पितृविक्रयभर्तृक्रयाभ्यां हेतुभ्यां, स्त्रीणां अद्रव्यत्वं–अस्वत्वं–अस्वातन्त्र्यमिति भावः। तस्मात्, स्त्रीणां द्रव्यैः– भर्तृद्रव्यैस्सह समानयोगित्वात्–तुल्ययोगक्षेमत्वात् अस्वाः स्त्रियो नाधिक्रियन्त इति ॥ १२ ॥

तथाचान्यार्थदर्शनम् ॥ १३ ॥

चकारः उक्तसमुच्चयार्थः। लिङ्गमुक्तेऽर्थे प्रदर्शयति— यथा पत्न्या क्रीता सती–इति अन्यार्थदर्शनं तथैव–पूर्वोक्तवदेव अस्वातन्त्र्यप्रतिपादकं स्यात् ॥ १३ ॥

तादर्थ्यात्कर्म तादर्थ्यम् ॥ १४ ॥

भार्यायाः तादर्थ्यात्–भर्त्रर्थत्वात्, भर्तृशुश्रूषणार्थत्वात्, कर्म–निकर्तनकटकरत्नोत्पादितं द्रव्यमित्यर्थः। तत् द्रव्यञ्च, तादर्थ्यं–भर्त्रर्थतां प्रतिपद्यते। अन्यस्वभूतया तया यत्किंचिदार्जितं द्रव्यं, पत्युरेव द्रव्यं भवति, न स्त्रियाः इति ॥ १४ ॥

फलोत्साहाविशेषात्तु ॥ १५ ॥

तुना "भार्यापुत्रः" इत्यादिना निराकृतं अद्रव्यत्वं निवर्त्यते। भार्यापि 'यजेते'ति श्रुतिमनुरुद्ध्य दुर्बलां स्मृतिमप्रमाणीकृत्य द्रव्यार्जनं कुर्यात्। कुतः? फलोत्साहाविशेषात्–स्वर्गाख्ये फले प्राप्तव्ये कर्मसाधनद्रव्य

---

१ "चोदितत्वाद्यथाश्रुति" इति सूत्रमेकं, तद्व्याख्या च अत्र क ख दृश्येते। अस्यां मातृकायां तन्नोपलभ्यते।

... ... ... ... ... ... ... ... जयेत ... ... .. अविशेषात् ... ... श्रुत्वादित्यर्थः । १५ ॥

## अर्थे च समवेतत्वात् ॥ १६ ॥

उक्तार्थे हेत्वन्तरसमुच्चयार्थश्चः। भार्यापि अर्थे-"धर्मे चार्थे चे" त्यर्थे भूति च द्रव्येति समवेतत्वात्-संश्लिष्टत्वात्। धर्मार्जने उभयोः द्रव्यवत्तासाध्ये अनयोस्तारतम्यमित्यर्थः ॥

अथवा

अर्थे-धने, भार्यायाश्च "पत्नी हि पारीणह्यस्येशे" इति समवेतत्वात् -संबद्धत्वात्, भर्तृवत् स्ववती इति भावः ॥ १६ ॥[1]

प्रयोजनन्त्वनुष्ठानरूपं-भर्तुरेवाधिकारः पूर्वपक्षे, सिद्धान्ते तु उभयोरिति ॥ ३ ॥

(स्ववदधिकरणम्-४)

## स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥ (सि)

दम्पत्योः स्ववत्त्वे तुल्ये समधिगते सति संदिह्यते—पृथक् पत्नी यजते-यजमानश्च? उत संभूय दम्पती यजेयाताम्? इति।

तुना पक्षो व्यावर्त्यते। स्ववतोः-पत्नीयजमानयोः ऐककर्म्यं स्यात्-एकस्मिन्नेव कर्मणि उभयोरनुप्रवेशः स्यात्, न पृथग्यजेयातामिति भावः। कुतः? वचनात्-'पत्न्यवेक्षितमाज्यं भवति" "यजमानावेक्षितमाज्यं भवति" इति वचनात्। वचनस्य प्रमाणत्वादित्यर्थः ॥ १७ ॥

## लिङ्गदर्शनाच्च ॥ १८ ॥

---

१ अतः परं, "क्रयस्य धर्ममात्रत्वं" "स्ववत्तामपि दर्शयति" इति सूत्रद्वयं, तद्व्याख्यानञ्च क, ख उपलभ्येते। अस्यान्तु मातृकायां तन्न दृश्यते।

"मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं" इति संभूय यष्टृत्वे लिङ्गदर्शनाच्च न पृथग्यजिर्दम्पत्योः ॥ १८ ॥

**क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ १९ ॥**

पत्न्याः पत्याशतमधिरथमिति क्रीतत्वात्, भक्त्या तु —भक्त्यैव— उपचारेण, स्वामित्वं, नतु तात्त्विकं-शास्त्रीयं-इत्यर्थः ॥ १९ ॥

**फलार्थित्वाच्च स्वामित्वेनाभिसंबन्धः ॥ २० ॥**

पत्नीयजमानयोः फलार्थित्वात् संपत्नी पत्या (सुकृतेन गच्छताम्) ... ... ... ... ... ... ... ... ... ... ... ... रूपफलार्थित्वात्, स्वर्गादिरूपफलार्थित्वस्य चाविशेषात् संभूयैव यष्टृत्वं न पृथगिति ॥ २० ॥[1]

प्रयोजनन्त्वनुष्ठानरूपं—बहु ... ... ... ... लोपः स्यात्पूर्वपक्षे सिद्धान्ते तु न तथेति ॥ ४ ॥

(व्याधानाधिकरणम्—५)

**द्व्याधानञ्च द्वियज्ञवत् ॥ २१ ॥ (पू)**

आधाने श्रूयते—"क्षौमे वसानौ जायापती अग्निमादधीयाता"मिति।

तत्र [2]किं प्राङ्निर्णीतप्रकारेण, "अग्निमादधीत" इत्युक्तेऽपि दम्पत्युपपत्तेः, किं द्वौ पुरुषौ सस्त्रीकावादधीयाताम्? उत एकः? इति विशये सति —

क्षौमे वसानावादधीयातामिति विहितं द्विकर्तृकमाधानं— सभार्यद्विपुरुषकर्तृकं स्यात्। तत्र दृष्टान्तः—द्वियज्ञवदिति। यथा — "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाता" मिति राजपुरोहितयोस्सभार्ययोर्द्वयोरेकस्मिन् कर्मण्यधिकारः, तद्वदत्रापि। चेति वाक्यालङ्कारे ॥ २१ ॥

---

१ "फलवत्ताञ्च दर्शयति" इति सूत्रमेकं तद्व्याख्या च क, ख अत्र उपलभ्येते, अस्यान्तु मातृकायां न. २ इदमधिकम्।

गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात् ॥२२॥ सि)

तुना प्रागुक्तपक्षो व्यावर्त्यते। क्षौमवसनरूपगुणस्य, विधानत्वात्- विधीयमानत्वात्, न पुरुषद्वित्वविधिः। कुतः? पत्न्यैव द्वितीयशब्दः — द्विवचनान्तशब्दः कृतार्थः स्यात्। (नतु) सभार्यं पुरुषद्वयं ब्रूत इत्यर्थः ॥ २२॥

प्रयोजनन्त्वनुष्ठानरूपं-पक्षयोः स्पष्टम् ॥ ५ ॥

(पुंस एवोपस्थानाद्यधिकाराधिकरणम्-६)

तस्या यावदुक्त माशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २३ ॥ (सि)

स्त्रीपुंसयोस्सहाधिकारे दर्शपूर्णमासादौ समधिगते, अपरं संदिह्यते- किं सर्वं याजमानं पत्न्या कर्तव्यम्? उत-यावदुक्तमाशीर्ब्रह्मचर्यञ्चेति।

तस्याः — पत्न्याः, श्रुत्या यावदुक्तं तावदेव कर्मण्यनुष्ठेयं स्यात्। नतु (धर्मानर्म) यजमानस्येव सर्वत्र समन्त्रकेषु प्राप्तिः। उक्तमेव प्रदर्शयति— आशीर्ब्रह्मचर्यमिति। "इन्द्राणीवाविधवाभूयासं" इत्याशीः। व्रतसंग्रहणं ब्रह्मचर्यम्। इदमु ... ... ... नतु समन्त्रकं सर्वम्। कुतः? अतुल्यत्वात्— पत्न्याः अवैद्यत्वेन पुरुषातुल्यत्वात् न सर्वत्र याजमानसंज्ञकेषु प्राप्तिः ॥ २३ ॥

प्रयोजनन्त्वनुष्ठानरूपं पक्षयोः स्पष्टम् ॥ ६ ॥

(अपशूद्राधिकरणम्-७)

चातुर्वर्ण्यमविशेषात् ॥ २४ ॥ (पू)

अग्निहोत्रादीनि कर्माण्युदाहरणम्। किमेषु चातुर्वर्ण्याधिकारः? उत त्रैवर्णिकानामेव? इति संदेहे —

अग्निहोत्रादिशास्त्रस्याविशेषत्वात् शास्त्रस्य मनुष्याधिकारत्वमात्रेण शूद्रेऽप्यविशेषात् अग्निहोत्रादिविधेरनिर्दिष्टवर्णविशेषत्वाच्च, चातुर्वर्ण्यं चत्वारो वर्णा अधिक्रियन्त इति न शूद्रनिरासः ॥ २४ ॥

निर्देशाद्वा त्रयाणां स्यादग्न्याधेये[1]ऽप्यसम्बन्धात् क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥ २५ ॥ (सि)

वाकारः पक्षव्यावर्तकः। आत्रेय आचार्यो मन्यते, त्रयाणां—ब्राह्मणादीनामेवाग्निहोत्रादिकर्मण्यधिकारः स्यात्। कुतः? अग्न्याधेयेऽपि "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्येवमादिषु त्रयाणामेव निर्देशात्—संकीर्तनात् त्रैवर्णिकानामेवाधिकारः स्यात्—न शूद्रस्य। कुतः? विद्याग्नि ... ... ... ... त्वात् क्रतुषु ब्राह्मणश्रुतिः—ब्राह्मणस्यैवाग्निमत्त्वेन श्रुतौ श्रवणं, अनग्नित्वादविद्यत्वात् शूद्रः कर्महीनो भवेत्। अग्निम ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ण श्रुतिः ॥ २५ ॥

निमित्तार्थेन बादरिस्तस्मात्सर्वाधिकारं स्यात् ॥ २६ ॥

वसन्ते ब्राह्मणोऽग्नि (मादधीत) ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... निमित्तार्थत्वेन हेतुना न प्रापकत्वम्। अतो न व्यावर्त्यते शूद्रः। तस्मात् ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... दिति बादरिराचार्यो मेने ॥ २६ ॥

अपि वान्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥ २७ ॥

(वाकारः पक्षव्यावर्तकः। अन्या) र्थदर्शनात्—अन्यार्थं ब्राह्मणाद्यर्थमेवाधानादिदर्शनात्, यथाश्रुति—श्रुतिमनतिक्रम्याधिकारः प्रतीयेत—श्रुत्युपात्तानामेवाधिकारः ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... शूद्रस्याधिकारः ॥ २७ ॥

[2]अनिर्देशात्तु पक्षे स्युः ॥ २८ ॥

---

१ अपिर्नास्ति-क-ख.

२ निर्देशात्तु पक्षे स्यात्-क. ख.

तुना पक्षो व्यावर्त्यते । पक्षे—"य एवं विद्वानग्निमाधत्ते" इति वाक्यस्य विधायकत्वपक्षे, अनिर्देशात्—त्रैवर्णिकानामेवानिर्देशात्–सामान्यवाचि यच्छब्देनाधिकारिविशेषसङ्कीर्तनाभावात्, सर्व एव शूद्रान्ता आधाने अधिकारिणः स्युः ॥ २८ ॥

वैगुण्यान्नेति चेत् ॥ २९ ॥

इति चेत्—पश्यसि, शूद्रस्य कर्तृत्वे, कर्मणि वैगुण्यात् तत्प्रयुक्तं फलं न साधयतीति प्रागुक्तमेव सूत्रेणानूदितम् ॥ २९ ॥

न काम्यत्वात् ॥ ३० ॥

अभिवर्ताख्यब्रह्मसामचक्षुर्निमि[1]त्यादीनां अनारभ्याधीतानां अनिर्दिष्टाधिकारिविशेषत्वेन शूद्रेणापि तत्कर्मानुष्ठानस्य काम्यत्वात् तस्याप्यधिकारसिद्धेः, त्वदुक्तं वैगुण्यं कर्मणि न भवतीत्यर्थः ॥ ३० ॥

संस्कारे च [2]तत्प्रमाणत्वात् ॥ ३१ ॥

चकारेण हेत्वन्तरं समुच्चीयते । "पयोव्रतादिसंस्कारे श्रूयमाणस्य वाक्यस्य च पुरुषसाध्यत्वेन तत्प्रमाणत्वात् पुरुषप्रधानत्वादित्यर्थः । एतदुक्तं भवति–(कर्तृ)सामर्थ्योपजननार्थत्वात्पयोव्रतादेः तद्विनापि यस्य यष्टुं सामर्थ्यमस्ति तस्य व्रतेन विनापि सामर्थ्यसिद्धेः, शूद्रो बलवान् विनापि व्रतेनाधिक्रियत इति स्यात् ॥ ३१ ॥

अपि वा वेदनिर्देशादपशूद्रं[3] प्रतीयेत ॥ ३२ ॥

अपिवेति (पक्षव्यावर्तनं) ... ... ... ... यीते ... ... ... ... ... ... ... ... वेदनिर्देशात्—वेदार्थमेव वसन्ते ब्राह्मणमुपनयीतेत्येवमादीनां

---

१ चक्षुर्निमित इत्यादीनां—इति साधु ।

२ तत्प्रधानत्वात्–क. ख.

३ अपशूद्राणां–क, ख.

वेदार्थं निर्देशात् — अभिधानात् शूद्र ... ... ... ... ... ... ... त्वेन वेदाध्ययनाभावात्, अपशूद्रं—शूद्रवर्जितमेव कर्म प्रतीयेत ॥ ३२ ॥

[1]गुणार्थत्वान्नेति चेत् ॥ ३३ ॥

इति चेत् पश्यसीति—पूर्वोक्तानु वा ... ... शूद्रस्य गुणार्थत्वात् अध्ययनेना ... ... ... ... र्थत्वात्। अयमर्थः—अध्ययनमात्रेण कर्मण्यधिकारसिद्धेः, उपनयनं विनैव स्वयमुपेत्याध्येष्यते नोपनयनं तत्र तन्त्रमित्यर्थः। नेति व्यावृत्तिः ॥ ३३ ॥

संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ॥ ३४ ॥

उपनयनाख्यस्य संस्कारस्य, तदर्थत्वात् वेदाध्ययनार्थत्वात् उपनीतस्यैव उपनेत्रध्येतृसमीपगमनसिद्धेः विद्यार्थमेवोपनयीतेति पुरुषश्रुतिः। अतोऽनुपनीतस्य शूद्रस्य न विद्याग्रहणे केवलमधिकारः ॥ ३४ ॥

विद्यानिर्देशान्नेति चेत् ॥ ३५ ॥

अवैद्यत्वाच्छूद्रस्यानधिकारः कर्मणि स्यादिति पश्यसि चेत्, तन्न—अनुपनीतत्वे शूद्रस्य कर्मणि विद्यानिर्देशात् — विद्ययैवाध्ययनस्य निर्देशात् आक्षेपात्। अनुपनीतोऽपि शूद्रोऽधीत्य वेदं कर्मण्यधिकारी स्यात् ॥ ३५ ॥

अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३६ ॥

"न शूद्रेणाध्येतव्य"मिति शूद्रस्य अवैद्यत्वात् — अनधीतवेदत्वात् कर्मणि शूद्रस्याधिकाराभावः स्यात् इतो न विद्या अध्ययनाक्षेप्त्री इत्यर्थः ॥

तथा चान्यार्थदर्शनम् ॥ ३७ ॥

---

१ गुणार्थित्वात्—क, ख.

चकारो लिङ्गप्रदर्शनार्थः। "[1]पद्यचावा एतच्छमशानं यच्छूद्रः" इति अन्यार्थदर्शनं — त्रैव ... ... ... ... यनार्थमेव दर्शनं, तथैव स्यात् — शूद्रानधिकारप्रतिपादकं स्यात् ॥ ३७ ॥

प्रयोजनन्तु, नातिगहनमिति न विलिख्यते ॥ ७ ॥

(अद्रव्यस्यानधिकाराधिकरणम् –८)

## (त्रयाणां द्रव्यसंपन्नः) कर्मणो [2]द्रव्यसिद्धत्वात् ॥ ३८ ॥

अग्निहोत्रादीन्येवोदाहरणम्। तत्र किं अद्रव्याणामनधिकारः? उताधिकारः? इति (संदेहे सति;) अग्निहोत्रादिकर्मसु, त्रयाणां त्रैवर्णिकानां मध्ये द्रव्यसंपन्न एवाधिक्रियते। (कुतः? कर्मणः —) अग्निहोत्रादिकर्मणः ... ... ... ... ... ... ... ... ... ... ... ... ... मित्यर्थः ॥ ३८ ॥

## अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ३९ ॥ (सि)

तुना पक्षो व्यावर्त्यते। ... ... ... ... ... ... ... ... ... ... ... ... नाधिकारो न स्यात्। द्रव्यसंयोगः — द्रव्यसंबन्धः; अर्थाद्धि भवति। अयमर्थः—अद्रव्योऽपि द्रव्यार्जनं कृत्वा समर्थः कुर्यात् ... ... ... ... ... ... ... ... ... ... ... त् इत्यर्थः ॥ ३९ ॥

प्रयोजनन्त्वनुष्ठानरूपं द्रव्यवदधिकारे अद्रव्यस्यार्जित्वाधिकारेऽपि नातिगहनम् ॥ ८ ॥

(अङ्गहीनाधिकरणम् –९)

---

१ पद्यु ह वा ... ...इति साधु।

२ ... द्रव्यसिद्धित्वात् क, ख.

## अङ्गहीनश्च तद्धर्मा ॥ ४० ॥ (सि)

अग्निहोत्रादीन्येवोदाहरणम् । किमङ्गहीनोधिक्रियते ? उत न ? इति सन्देहे —

अङ्गहीनः-प्रतिसमाधेयाङ्गवैकल्यः पुमांश्च तद्धर्मा भवेत् - अद्रव्यधर्मा भवेत् । विकलाङ्गप्रतिसमाधानेनापि समर्थो यष्टुमिति ॥ ४० ॥

प्रयोजनन्त्वनुष्ठानरूपं पक्षयोश्चिन्त्यम् ॥ ९ ॥

(अप्रतिसमाधेयाङ्गवैकल्यस्य कर्मानधिकाराधिकरणम् -१०)

## उत्पत्तौ नित्यसंयोगात् ॥ ४१ ॥ (सि)

अप्रतिसमाधेयाङ्गवैकल्यं पुरुषं प्रति सन्देहः— किं सोऽप्यधिक्रियते ? नेति ।

अप्रतिसमाधेयाङ्गवैकल्यस्य, उत्पत्तौ - जन्मन्येव नित्यसंयोगात् - नित्यसंबन्धात् अप्रतिसमाधेयत्वेन संबन्धात् स नाधिक्रियते ॥ ४१ ॥

प्रयोजनन्त्वनुष्ठानरूपं पूर्वपक्षे कतिपयाङ्गलोपः, सिद्धान्ते तु न तथेति ॥१०॥

(अत्र्यार्षेयाधिकरणम्-११)

## अत्र्यार्षेयस्य हानं स्यात् ॥ ४२ ॥ (सि)

आर्षेयं वृणीते, एकं वृणीते— द्वौ वृणीते— त्रीन् वृणीते— न चतुरो वृणीते— न पञ्चातिवृणीते— इत्यत्र संदेहः —

किमत्र्यार्षेयस्याधिकारः ? उत न ? इति ।

अत्र्यार्षेयस्य—त्र्यार्षेयवरणं कर्तुमशक्नुवानस्य एकार्षेयस्य द्व्यार्षेयस्य वा वरणकर्मणि, हानं अनधिकारः स्यात् ॥ ४२ ॥

प्रयोजनन्त्वनुष्ठानरूपं पूर्वपक्षे ह्यार्षेयादीनामपि वरणं स्यात्, सिद्धान्ते तु त्र्यार्षेयस्यैव वरणम् ॥ ११ ॥

( रथकाराधिकरणम्–१२ )

## वचनाद्रथकारस्या[1]धानस्य सर्वशेषत्वात् ॥ ४३ ॥ (सि)

आधाने श्रूयते — वर्षासु रथकार आदधीतेति ।

तत्र सन्देहः— किं त्रैवर्णिकानामन्यतमो रथकारः? उत अत्रैवर्णिकः? इति ।

तत्रात्रैवर्णिकस्यैव रथकारस्य आधाने अधिकारस्स्यात् । कुतः? वचनात् — वर्षासु रथकार इति वचनात् । हेत्वन्तरञ्च — रथकारकर्तृकस्या धानस्य सर्वशेषत्वात् — सर्वेषामाधाने विहिते रथकाराधानस्य शेषत्वात् — परिशिष्टत्वात् । अयमर्थः — त्रैवर्णिकानामाधाने विहिते परिशिष्टमिदमाधानं वर्षा-संबद्धं, तेषूत्पत्तिशिष्टवसन्तादिकालसंबद्धेषु निवेशमलभमानं, त्रैवर्णिकातिरिक्त-मेवाधिकरोति, न तु रथं करोतीति व्युत्पत्त्या, त्रैवर्णिकानामन्यतम एवाधिकारी इति ॥ ४३ ॥

## [2]कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् ॥ ४४ ॥

त्रैवर्णिका एवाधिक्रियन्ते । कुतः? कर्मसंयोगात् रथकरणकर्म-संयोगात् — रथकर्तृत्वेन विशेषणेन त्रैवर्णिकानामधिकारस्स्यादित्यर्थः । कुतः? शूद्रस्य — रथकारस्याविद्यत्वादसामर्थ्येन प्रतिषिद्धत्वात् ॥ ४४ ॥

## [3]अकर्मकत्वात्तु नैवं स्यात् ॥ ४५ ॥

तुना पक्षो व्यावर्त्यते । त्रैवर्णिके शिल्पोपजीवनस्य निषिद्धत्वेन

---

१ '.... आधानेऽस्य सर्वशेषत्वात्' इति, '...आधानस्यासर्वशेषत्वात्' इति च ग्रन्थान्तरपाठः अस्यान्तु मातृकायां तृतीयः पाठभेदोऽयम् ।

२ न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात्–क, ख.

३ अकर्मत्वा नैवं स्यात्–क, ख.

अकर्मकत्वात् - रथकर्तृत्वाभावात्, एवं-त्वदुक्तप्रकारेणाधिकारः, न स्यात् — अत्रैवर्णिकरथकाराधिकार इति यावत् ॥ ४५ ॥

आनर्थक्यञ्च संयोगात् ॥ ४६ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। त्रैवर्णिकपरत्वे वर्ण्यमाने, तेषामाधाने वसन्तादिकालसंयोगात् — संबन्धात्, उत्पत्तिशिष्टगुणके, गुणान्तरानन्वयाच्च उपदिश्यमानानां वर्षाणां ततो व्युदस्तत्वेन आनर्थक्यं स्यात्। तस्मात् पृथग्विधित्वाद्रथकारोऽत्रैवर्णिकोऽधिकारीति ॥ ४६ ॥

गुणार्थेनेति चेत् ॥ ४७ ॥

... ... ... ... ... ... जीवन ... ... न त्रैवर्णिकेषु रथकारस्याभावात्, अत्रैवर्णिकरथकारस्याधिकारः इति पश्यसि चेत्; त्रैवर्णिक एव कश्चित्, गुणार्थेन ... ... ... ... ... ... ... ... ... ... ह्येन प्रयोजनेन रथकारो भविष्यति, तस्येदमाधानं इति वक्तव्यम्। वसन्तादिवाक्यानां प्रापकत्वमेव ... ... ... ... ... ... .. ... ... ... ... ... ॥ ४७ ॥

[1]उक्तमनिमित्तत्वम् ॥

... पनत्वादेव न त्रैवर्णिको रथकार इत्यर्थः ॥ ४८ ॥

सौधन्वास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन् ॥ ४८ ॥

(तुना पक्षो व्यावर्त्यते) सौधन्वनाऋभवस्सूरचक्षस इति, ऋभूणां त्वाङ्गिरसां, तन्नेमिमृभवोयथा—इति च मन्त्रवर्णात् — मन्त्रलिङ्गात्, सौधन्वना एव जातिविशेषशक्ताः प्रतीयेरन् — तेषाञ्च त्रैवर्णिकेभ्यो हीनत्वात्, शूद्रेभ्यः उत्कृष्टत्वाच्च तेषामेवाधिकार इति ॥ ४८ ॥

---

१ इदं सूत्रं व्याख्या च-क. ख. अस्यान्तु मातृकायामत्र पत्रं विनष्टम्।

प्रयोजनन्त्वनुष्ठानरूपम् — अधिकारिभेदादप्यनुष्ठानात् भेदोपपत्तेः स्पष्टं [1]प्रयोजनम् ॥ १२ ॥

( निषादस्थपत्यधिकरणम् –१३ )

## स्थपतिर्निषादस्स्याच्छब्दसामर्थ्यात् ॥ ४९ ॥

वास्तुहोमे, रौद्रं चरुं निर्वपेत्, नास्य रुद्रः प्रजाश्शमयेत् —इत्यारभ्य श्रुतं — 'एतया निषादस्थपतिं याजये'दिति। तत्र किमधिकृतानां त्रैवर्णिकानामन्यतमो निषादस्थपतिः? उतान्य एव? इति सन्देहे —

एतया निषादस्थपतिं याजयेदिति श्रूयमाणः स्थपतिः निषाद एव स्यात् न तु निषादानां स्थपतिः स्वामी त्रैवर्णिकान्यतमः। कुतः? शब्दसामर्थ्यात् — निषादस्थपतिशब्दस्य कर्मधारयस्य निषादरूपस्थपत्यर्थप्रत्यायन एव समर्थत्वात्। अन्यथा तत्पुरुषपक्षे लुप्ता षष्ठी संबन्धबोधिकेति लक्षणा स्यात्, सा च दुर्बलेति भावः ॥ ४९ ॥

## लिङ्गदर्शनाच्च ॥ ५० ॥

'कूटं दक्षिणा' इति निषादमात्रोपकारकदक्षिणारूप लिङ्गदर्शनाच्च निषाद एव स्थपतिः स्यात्, न तु त्रैवर्णिकान्यतम इति। ५० ॥

अनुष्ठानरूपं प्रयोजनं अधिकारिभेदेनोपपन्नम् ॥ १३ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां षष्ठस्याध्यायस्य प्रथमः पादः ॥

ओं हयग्रीवाय नमः।

स्वप्नवाराह्यै च नमो नमः।

---

१ इदमधिकम्.

## षष्ठाध्याये द्वितीयः पादः

(सत्रे प्रत्येकं कृत्स्न फलभोक्तृणामधिकाराधिकरणम् — १)

### पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात् ॥ १ ॥ (सि)

'ऋद्धिकामास्सत्रमासीरन्' 'सप्तदशावरास्सत्रमासीरन्' इति श्रूयते।

तत्र किं तस्य तस्य कृत्स्नेन फलेनार्थिनः सतेऽधिकारः? उत परिषदः फलार्थिन्याः? इति संदेहे—

ऋद्धिकामास्सत्रमासीरन्नित्यत्र न परिषदोऽधिकारः। किन्तु तस्य तस्यैवाधिकारः स्यात्। प्रत्येकमधिकारः स्यादित्यर्थः। कुतः? पुरुषार्थैकसिद्धित्वात् — पुरुषार्थस्य ... ... ... ... एकैकं प्रति कार्त्स्न्येन सिद्धित्वात् सिद्धेरित्यर्थः ॥ १ ॥

### [1]अपि वोत्पत्तिसंयोगाद्यथा स्यात्सत्त्वदर्शनं तथाभावो विभागे स्यात् ॥ २ ॥

अपि वेति हेत्वन्तर (समुच्चयः।) यत्र सप्तदशावरास्सत्रमासीरन्निति संख्यासाप्तदश्यस्य कर्मोत्पत्तिसमय एव संयोगात् संबन्धात् न संख्यासाप्तदश्यसंबन्धार्थं वचनम्, यतः परिषदधिकारिणी स्यात्। न तथेत्यर्थः। विभागे – कर्तृविभागे पृथक् कर्तृत्वेऽपि, भावः-फलकार्त्स्न्यसद्भावः एकैकस्य स्यात्। यथा हस्त्यादि सत्त्वस्य दर्शनं बहुपुरुषकर्तृकं कार्त्स्न्येन स्यात्, नावयवतः, तथात्रेत्यर्थः ॥ २ ॥

प्रयोजनन्त्वनुष्ठानरूपं–फलसङ्कल्पमेकेनैवोन्नयेन्नान्यथा ॥ १ ॥

(कर्तृ) संख्याधिकरणम् — २)

### प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ ३ ॥ (पू)

---

१ अपि चोत्पत्ति ...... क. ख.

दर्शपूर्णमासादिषु संदेहः—किमेको द्वौ बहवो वा यजेरन् इत्यनियमः? उत एक एव यजेतेति।

दर्शपूर्णमासादि प्रयोगे-अनुष्ठाने, प्रयोगविधौ—प्रधानविधावित्यर्थः। पुरुषश्रुतेः-असंख्याविशिष्टपुरुषे यागश्रुतेः-यागश्रवणात्, प्रयोगे-अनुष्ठाने, यथाकामी स्यात्—यथाकाममधिकारी स्यात्। अयं भावः—दर्शादियागेषु पुरुषमात्रश्रवणात्, एकत्वविवक्षायां कारणाभावाच्च, एको द्वौ बहवो वा यजेरन्निति॥ ३॥

प्रत्यर्थं श्रुतिभाव इति चेत्॥ ४॥ (सि)

एकत्वविवक्षाविनि ... ... ककारणाभावात् [1]नियम इति पश्यसि चेत् नैतदुपपद्यते। कुतः? अर्थं-फलं प्रति श्रुतिभावः-ज्योतिष्टोमेनेत्यादि श्रुति-सद्भावः स्यात्। अयमर्थः—फलं (प्रत्युपदिश्यते यागः—यागेन फलं) निर्वर्तयेदिति। यागं प्रति कर्तुर्गुणभूतत्वात् एकत्वं विवक्षितमिति॥ ४॥

(तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात्कर्तुः) प्रधानभूत-त्वात्॥ ५॥

ज्योतिष्टोमादिकर्मणां, तादर्थ्ये-पुरुषार्थत्वे सति, पुरुषः क्रतुं प्रति गुणार्थो न-नाङ्गमित्यर्थः। (गुण) त्वनियामके न्याये अनुक्ते-अप्रदर्शिते सति गुणत्वं न प्रतीमः। कुतः? गुणरूपस्यार्थस्य प्राधान्यरूपादर्थात् अर्थान्तरत्वात् अतः क्रतुः प्रधानभूतत्वात् (एकत्वमविवक्षितमिति न) कर्तृनियमः स्यात्॥

अपि वा कामसंयोगे संबन्धात्प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणावत्॥ ६॥

अपि वेति पक्षव्यावृत्तिः क्रियते। कामसंयोगे-कामसंयोगिपुरुषमात्रे अविवक्षिते क्रतोः संबन्धात्-संबन्धावगमात्, प्रयोगाय - प्रयोगार्थं-ज्योति-ष्टोमादिकर्मार्थमेव, उपदिश्येत-विधीयेत। क्रत्वर्थतया गुणभावाद्विवक्षित-

---

१ अनियम इति साधु.

मेकत्वमित्यर्थः। गुणत्वप्राधान्यबोधकविधिद्वयाभावेन पुरुषस्य गुणतैवेति दृष्टान्तबलेनाह—गुणप्रधानभावे हि वर्ण्यमाने, विषाणावत्-कृष्णविषाणायामिव "कृष्णविषाणया कण्डूयते' 'कृष्णविषाणां प्रास्यति' इति विधिद्वयवत् प्रत्यर्थं-अर्थमर्थं प्रति, प्रतिप्रयोजनं विधिश्रुतिः स्यात्-विधिभेदः स्यात्। तादृक् नेहेत्यर्थः ॥ ६ ॥

[1]अन्यः स्यादिति चेत् ॥ ७ ॥

गुणभावेन प्राधान्याभावाच्च विवक्षितमेकत्वमिति पश्यसि चेत्, पुरुषेण यागं कुर्यादिति यागं प्रति गुणभावे वर्ण्यमाने, स्वर्गकामः पुरुषः साधनभूतत्वात् गुणभूतात् पुरुषादन्यः स्यात्। अयमर्थः-अन्यार्थं करोत्यन्यः कामयत इति विपरीतमेवेदं स्यात् ॥ ७ ॥

[2]फलकामो निमित्तमिति चेत् ॥ ८ ॥

गुणत्वे कर्तुः प्राधान्याभावात् अन्यः स्वर्गकामो यजेतेति पश्यसि चेत्, निमित्ते यजमान निमित्ते यजमानार्थे ... ... ... ... ... ... ... ... ... ... ... ... तौ यजेत ततश्च तत्र सार्थकौत्वा ... देवान्यस्य फलकामोऽन्यो-यजेतेति त्वदुक्त दोषो नावतरतीति ॥ ८ ॥

न नित्यत्वात ॥ ९ ॥

आन्तरालिकानामायुरादीनां स्वर्गादिफलानाञ्च यजमान एवाधातरि नित्यत्वात्-नैयत्यात्, अन्य आन्तरालिक फलकामः ... ... ... ... ... ... ... ... संगच्छते। तस्मादन्यकर्तृकत्वे कर्मणि प्राधान्यहानिवर्णनमयुक्तमित्यर्थः ॥

कर्म तथेति चेत् ॥ १० ॥

'युवं हि स्थः स्वर्पती इति एते असृग्रमिन्दव इति यजमान द्वित्वबहुत्व-

---

१ अन्यस्य स्यादिति चेत् क. ख.

२ अन्यार्थेनाभिसंबन्धः इति सूत्रमेकं तद्व्याख्या च इतः पूर्वं क. ख. दृश्येते, अत्र तु न.

विधिदर्शनात् अत्रापि तथेति पश्यसि चेत्, तत्र क्रतुविशेषे कर्म तथा-युक्तं द्वियजमानकं बहुयजमानकं वा, नात्र तथा युक्तमिति भावः ॥ १० ॥

न समवायात् ॥ ११ ॥

तत्र कर्मविशेषे द्वयोर्बहूनां वा यजमानानां वचनादेवोत्पत्तौ सत्त्वात् त्वदुक्तं दूषणं नात्रावकाशं लभत इत्यर्थः ॥ ११ ॥

प्रयोजनन्त्वनुष्ठानरूपं अनियमनियमाभ्यां व्याख्यातम् ॥ २ ॥

( प्रक्रमान्नियमाधिकरणम्— ३ )

[1] प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात् ॥ १२ ॥(सि)

प्रजाकामो यजेत, पशुकामो यजेत इत्यादि समाम्नातम्। तत्र संदेहः— किं प्रक्रान्तं नियोगतः परिसमापनीयं? उतेच्छाकार्यं हेयमिति ॥

प्रजाकामादिस्थलेष्वैहिकफलकेषु अवाप्ते वा कर्ममध्ये फले, अपगतायां वा फलेच्छायां, कर्म प्रक्रमात् — आरंभात् नियम्येत — अपवर्गपर्यन्तमनुष्ठेयम् कुतः? आरंभस्य — कर्मोपक्रमस्य क्रियानिमित्तत्वात् — क्रियानुष्ठानरूपत्वात् क्रियायाश्चानुष्ठीयमानायास्समाप्त्यर्थत्वात् इत्यर्थः। ततोऽवश्यं समापनीयम् ॥

फलार्थित्वाद्वाऽनियमो यथाऽनुपक्रान्ते ॥ १३ ॥

वाकारः — उक्तपक्षव्यावर्तकः। अनुष्ठातुः पश्वादिफलार्थित्वात् — फले कर्ममध्ये संप्राप्ते ... ... ... ... ... ... ... ... ... ... ... ... तत्र दृष्टान्तः— यथाऽनुपक्रान्ते — अनारब्धे कर्मणि आरब्धव्यनियमो नास्ति तथा आरब्धस्य परिसमाप ... ... ... ... ... ... ... ... ... ... ... ... मित्यर्थः ॥ १३ ॥

[2] नियमो वा कर्मनिमित्तत्वात् कर्तुस्तत्कारणं स्यात् ॥ १४ ॥

---

१ प्रक्रमात्तु नियम्येतारंभस्य क्रियानियम्यत्वात् क.

२ नियमो वा तन्निमित्तत्वात् ... क. ख.

वाकारः पक्षव्यावर्तकः समाप्तौ नियमः – आवश्यकता कुतः ? ... ... ... ... ... आरंभ ... कर्मनिमित्तत्वात्–क्रियानुष्ठानहेतुत्वात् आरब्धं कर्म स्वसमाप्तौ कारणं स्यात्। आरंभस्य लोकसिद्धत्वेनाविधेयत्वात् यजेतेत्याख्यात ... ... ... ... ... ... ... ... ... योऽर्थः। तस्मादारब्धं परिसमापयितव्यमित्यर्थः ॥ १४ ॥

प्रयोजनन्त्वनुष्ठानरूपं – अङ्गहानिपूर्तिभ्यां व्याख्यातम् ॥ ३ ॥

( प्रारब्धलौकिककर्मसमाप्तेरनियमाधिकरणम् — ४ )

## लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥ १५ ॥ (पू)

गृहशकटरथादौ आरब्धे संदेहः —

किं मध्ये इच्छापगमे फलप्राप्तौ वा प्राग्वत् समापनीयम्? उत उत्स्रष्टव्यम्? इति।

तत्र लोके गृहादिकर्माणि, वेदवत् – वेदोक्तकर्मवदेव समापनीयानि। कुतः? अधिपुरुषज्ञानं – अधिकारिणः पुरुषस्य समाप्त्यावश्यकत्वज्ञानम्, ततः – शिल्पशास्त्रादवावगम्यते। देवतासंयुक्तश्चैवंजातीयकं कर्म, तस्मात्समापनीयमिति ॥ १५ ॥

## अपराधे च तैश्शास्त्रम् ॥ १६ ॥

चकारो हेत्वन्तरसमुच्चयार्थः ... ... शेषशकटादिषु, अराद्यपराधे – अपराधे सति, तैः–शिल्पिभिः "अरेभग्ने इन्द्रबाहुर्बद्धव्यः" इति च "ब्राह्मणा भोजयितव्याः पायसं" इति च, प्रायश्चित्तार्थं शास्त्रं स्मर्यते। तस्मात् प्रायश्चित्तविधानाच्चावश्यं समापनीयमिति ॥ १६ ॥

## अशास्त्रा तूपसंप्राप्तिशास्त्रं स्यादप्रकल्पकं तस्मादर्थेन गम्येत[1] प्राप्ते शास्त्रमर्थवत् ॥ १७ ॥ (सि)

---

१ गम्येताप्राप्ते शास्त्रमर्थवत् इति क. ख. पाठः; स एव साधीयान् (सं)

तुना पूर्वपक्षो व्यावर्त्यते। गृहादेरुपसंप्राप्तिः शास्त्रादवगन्तव्या। शास्त्रञ्च–श्रुतिश्च ईदृशस्मृतेः अप्रकल्पकं–दृष्टार्थेषु शास्त्रमप्रकल्पकमित्यर्थः। तस्मात्–उक्ताद्धेतोः, अर्थेन–आभिरूप्याद्यर्थेन–प्रयोजनेन परिसमाप्यते न विधितः कुतः? अप्राप्ते ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...

प्रयोजनन्त्वनुष्ठानौपयिकं चिन्त्यम् ॥ ४ ॥

(प्रतिषेधाधिकरणम् — ५)

## प्रतिषेधष्वकर्मत्वात् [1]क्रिया स्यात्प्रतिषेधानां विभक्तत्वादकर्मणाम् ॥ १८ ॥ (पू)

न कलञ्जं भक्षयेत्, न सुरां पिबेत्, न लशुनं गृञ्जनं भक्षयेत्, इत्याद्युदाहरणम् ॥

तत्र किमिदं फलकामेन न भक्षयितव्यम्, (उत) निष्कामो भक्षयेन्न वा? उत नियोगतो वर्जयितव्यं? इति संदेहे —

न कलञ्जं भक्षयेदित्येवमादिषु प्रतिषेधवाक्येषु भक्षणाभावे उच्यमाने, अभावस्य अकर्मत्वात्–अननुष्ठेयत्वाद्धेतोः संकल्परूपा मानसी क्रिया स्यात्। उपसंहरति—अकर्मणां—अननुष्ठेयानां, प्रतिषेधानां—अभावानां विभक्तत्वात्—कर्मण्यनुप्रवेशाभावेन व्युदस्तत्वात् अभक्षणरूपस्संकल्प एवानुष्ठेयः स्यात् नान्यथा ॥ १८ ॥

## शास्त्राणान्त्वर्थवत्त्वेन पुरुषार्थौ विधीयते तयोस्समवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥ १९ ॥ (सि)

---

१ क्रिया स्यात्प्रतिषिद्धानां ... क. ख.

तु विशेषार्थः। 'नेक्षेतोद्यन्तमादित्य' मित्यत्र शास्त्राणां—तस्य व्रतं; नेक्षेतोद्यन्तमादित्यं एतावता हैनसायुक्तो भवतीति उपक्रमविध्युपसंहारवाक्यानां अक्रत्वङ्गत्वेन पठितानां पुरुषार्थत्वे अर्थवत्त्वेन — प्रयोजनवत्त्वेन हेतुना प्रजापतिव्रतादिः पुरुषार्थः — पुरुषशेषः विधीयते इति तत्र युक्तः पर्युदासः, व्रतमित्युपक्रमात् संकल्पस्वरूपः। इह "न कलञ्जं भक्षये" दित्यादौ पुरुषार्थ विनिगमकयोस्तयोरुपक्रमोपसंहारयोः असमवायित्वात्-अभावात्, तादर्थ्ये-क्रत्वर्थत्वे सति विध्यतिक्रमः — भक्षणविधेः — भक्षणानुष्ठानस्य अतिक्रमः-अभाव इत्यर्थः। तस्मान्न पर्युदासः, किंतु प्रतिषेध एव ॥ १९ ॥

अनुष्ठानन्तु प्रयोजनं अभक्षणसंकल्पनिषेधाभ्यामवगन्तव्यम् ॥ ५ ॥

(गुर्वनुगमनाद्यधिकरणम् — ६)

## तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ २० ॥ (पू)

"गुरुरनुगन्तव्योऽभिवादयितव्यश्च" "वृद्धवयाः प्रत्युत्थेयस्संमन्तव्यश्च" इत्यादयः स्मार्ता धर्मा उदाहरणम् ॥

तत्र संदेहः — किमेते जातमात्रे प्रवर्तन्ते ? उत उपनीतमात्रे ? इति ॥

गुर्वनुगमनादीनि स्मार्तानि व्रतानि शिष्यमाणानि, जननेन — जातमात्रे अनुपनीते त्रैवर्णिके, प्रवर्तेरन् — "उपनयनादूर्ध्वमेते धर्माः, न पूर्वं" इति विशेषानुपलम्भात् उपनयनात्पूर्वमपि प्रवर्तेरन्नित्यर्थः ॥ २० ॥

## अपि वा वेदतुल्यत्वा[1]दुपनयनेन प्रवर्तेरन् ॥ २१ ॥ (सि)

अपिवेति पक्षव्यावृत्तिः क्रियते। उपनयनेन संस्कृते पुरुषे उक्ता नियमाः प्रवर्तेरन्। कुतः? वेदतुल्यत्वात् — वेदाध्ययनतुल्यत्वात्। यथा उपनीतस्यैव वेदाध्ययनं, नानुपनीतस्य, तथात्र व्रतानामनुष्ठानं उपनयनोर्ध्व-

---

१ .... उपायेन प्रवर्तेरन् क. ख.

भावि। "[1]प्रागुपनयनात्कामचारवादभक्षः" इति पूर्वमननुष्ठानस्मरणात्, उपनीतमात्रो व्रतानुचारीति उपनीतस्यैव व्रतोपसंग्रहणस्मरणाच्च ऊर्ध्वमेव प्रवर्तेरन् ।। २१ ।।

प्रयोजनन्त्वनुष्ठानरूपं पक्षयोः स्पष्टमिति न विलिख्यते ।। ६ ।।

(अभ्यासाधिकरणम् — ७)

## अभ्यासो [2]वाऽकर्मशेषत्वात्पुरुषार्थो विधीयते ।। २२ ।। (पू)

"यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्ययं पुरुषार्थ एव यागः, ततोऽभ्यासश्च न कर्मशेषः इत्येतत्समधिगतं [3]प्राक् ।।

तत्र संदेहः — किं जीवनरूपनिमित्तसातत्यात्, कर्म नैमित्तिकं सातत्येन कर्तव्यं ? उत न सातत्येन ? इति ।।

अग्निहोत्रादीनामकर्मशेषत्वात — अकर्मार्थत्वात्, पुरुषार्थ इति हेतोः सायं जुहोति, प्रातर्जुहोति, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत, इति विहितकालादीन्यङ्गान्यप्यतिक्रम्य पुरुषगतजीवननिमित्तस्य सातत्यात् कर्मण्यप्यभ्यासः सातत्येन विधीयते। अतोऽहोरात्रमनुष्ठानं नैरन्तर्येण ।। २२ ।।

## तस्मिन्न संभवन्नर्थात् ।। २३ ।।

अग्निहोत्रादि ... ... ... ... तस्मिन्—आहारविहाररूपे काले असंभवन् अनुष्ठातुमशक्यस्सन् ... ... ... ... ... अनुष्ठीयते । अतस्त्वमुक्ताहारविहार ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... त्यर्थः ।। २३ ।।

## [4]काले ह्युपदिश्येत ।। २४ ।। (सि)

---

१ गौतमधर्मसूत्रम्

२ वाकारः क. ख. नास्ति

३ पू. मी. द. 2-4-1

४ न कालेभ्य उपदिश्यन्ते क ख.

प्रदोषमग्निहोत्रं होतव्यं व्युष्टायां प्रातः, तथा-पौर्णमास्यां पौर्णमास्या यजेत ... ... ... ... ... ... ... रूप कालविशेषे हि अग्निहोत्रादिरुपदिश्यते। अतस्सातत्येन प्रयोगो न ... ... ... ... ते ॥ २४ ॥

[1] दर्शनात्काललिङ्गानाम् ॥ २५ ॥

यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेदिति नियतकालत्वलिङ्गानां दर्शनात्–उपलम्भात् न सातत्येनानुष्ठानं, किंतु कालविशेषेषु। अयमर्थः–सातत्येनानुष्ठाने सति अतिपातनोक्तिर्न संगच्छेतेत्यर्थः[2] ॥ २५ ॥

प्रयोजनन्त्वनुष्ठानरूपं – सातत्यनियतकालत्वाभ्यां व्याख्यातमिति न विलिख्यते ॥ ७ ॥

(अग्निहोत्रादिकर्मणां निमित्तानुरोधेनावृत्त्यधिकरणम् — ८)

तेषामौत्पत्तिकत्वादागमनेन [3] प्रवर्तेरन् ॥ २६ ॥ (सि)

प्रदोषेऽग्निहोत्रं होतव्यं तथा व्युष्टायां प्रातरिति च, पौर्णमास्यां पौर्णमास्या यजेत – अमावास्यायाममावास्यया यजेत इत्येतदेवोदाहरणम् ॥

किं प्रदोषादिकालेषु सकृदेवेमानि होतव्यानि? उत प्रतिप्रदोषं प्रतिदर्शपूर्णमासं? इति संदेहे —

तेषां – अग्निहोत्रादिकर्मणां, औत्पत्तिकत्वात् – उत्पत्तिसमय एव कालविशेषान्वयित्वात्, आगमेन – विहितकालागमनेन कृत्वा प्रवर्तेरन् ॥ आगते विहितकाले अनुष्ठीय ... ... त्यर्थः ॥ २६ ॥

[4] तथा च लिङ्गदर्शनात् ॥ २७ ॥

---

१ दर्शनात्काललिङ्गानां कालविधानम् क. ख.

२ पुनरुक्तमिदम्।

३ .... प्रवर्तेत क. ख.

४ तथा हि लिङ्गदर्शनं क. ख.

चकारो हेत्वन्तरसमुच्चयार्थः। "अप वा एष सुवर्गाल्लोकाच्च्यवते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाति[1]पातये"दित्यति[2] पातनलिङ्गं, तथा—आगत आगते काले अनुष्ठानं प्रदर्शयति। अतो न विहित ... ... ... ... नुष्ठानमित्यर्थः ॥ २७ ॥

प्रयोजनन्त्वनुष्ठानरूपं-स (कृद) सकृद्धोमप्रभेदेन स्पष्टमिति न विलिख्यते॥८॥

( क्रत्वर्थनैमित्तिकानां निमित्तावृत्तावावृत्त्यधिकरणम् — ९ )

## तथान्तःक्रतु[3] संयुक्तानि ॥ २८ ॥ (सि)

दर्शपूर्णमासयोः श्रूयते—भिन्ने जुहोति, स्कन्ने जुहोति—इत्येवमादीनि श्रुतानि[4] ॥

तत्र संदेहः—किं बहुभेदनेऽपि सकृदेव होमः? उत प्रतिभेदनं प्रतिस्कन्दनञ्च होतव्यं? इति ॥

अन्तःक्रतुसंयुक्तानि—क्रतुमध्यसंयुक्तानि भिन्ने जुहोति, स्कन्ने जुहोति—इत्येवमादीनि कर्माणि, आगत आगते निमित्ते, तथा—अग्निहोत्रादिवदेवानुष्ठेयानि। नैमित्तिकानां असकृन्निमित्त ... ... ... असकृदनुष्ठानमित्यर्थः॥

प्रयोजनन्त्वनुष्ठानरूपं पूर्ववदेव वर्णनीयम् ॥ ९ ॥

( गुर्वनुगमनादीनां निमित्तावृत्तावावृत्त्यधिकरणम् — १० )

## आचाराद्गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् ॥ २९ ॥ (सि)

गुर्वनुगमनादिषु संदिह्यते—आगत आगते गुरौ अनुगमनादीनि कर्तव्यानि? उत सकृत्कृतमपि कृतार्थं? इति ॥

---

१ ... पादयेत इति साधु।

२ ... पादन इति च।

३ प्रयुक्तानि क. ख.

४ इदं पुनरुक्तम्।

सकृदेवेति आचारात् – शिष्टाचारात् गृह्यमाणेषु अनुष्ठेयेषु "गुरुरनुगन्तव्योऽभिवंद्यश्च" इत्येवमादिषु, तथैव – प्रतिनिमित्तागमनं अनुष्ठानं स्यात्। कुतः? गुर्वनुगमनाभिवादनादीनां पुरुषार्थत्वात् पुरुषाभ्युदयार्थत्वात् ॥ २९ ॥

प्रयोजनन्त्वनुष्ठानरूपं – असकृत्सकृदभिवादनादिभेदेन व्याख्येयम् ॥ १० ॥

(ज्योतिष्टोमादीनां त्रैवर्णिकस्य नित्यताधिकरणम् ११)

**ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३० ॥ (सि)**

इदं श्रूयते – सोमेन यजेत, गर्भाष्टमे ब्राह्मणमुपनयीत, प्रजामुत्पादयेत् इति ॥

तत्र संदेहः – किमेतान्यनियतानि? उत नियतान्यवश्यकर्तव्या(नीति) ॥

(ब्रा)ह्मणस्य – ब्राह्मणादीनां, सोमविद्याप्रजं – सोमो ज्योतिष्टोमः, विद्या (वेदाध्ययनं) प्रजा-प्रजोत्पादार्थ एकवद्भाव इति। ... ... ... ... ... ... रानुष्ठेयम्। कुतः? ऋणवाक्येन – "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इति ऋणवाक्येन सोमादीनां संयोगात् – संबधात्। ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... आवश्यकत्वं सोमादीनां प्रदर्शयतीत्यर्थः ॥ ३० ॥

प्रयोजनन्त्वनुष्ठानरूपं – अननुष्ठानावश्यानुष्ठानाभ्यां द्योतितम् ॥ ११ ॥

**ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३० ॥**

... ... वा – सोमादयः किं ब्राह्मणस्य नियताः, राजन्यवैश्ययोरनियताः? उत सर्वेषां नियताः? इति संदेहे सति —

ब्राह्मणस्य तु – ब्राह्मणस्यैव सोमविद्याप्रजं – नेतरयोः क्षत्रियवैश्ययोः। कुतः? ऋणवाक्येन ब्राह्मणस्यैव संयोगात् – संबन्धात्, तस्यैव

नित्यानीमानीति सूत्रारूढः पूर्वपक्षः । सिद्धान्तस्तु—ब्राह्मणपदस्य क्षत्रिय-वैश्योपलक्षकत्वेन नेतरयोर्निवृत्तिः[1] इति । ३० ॥

प्रयोजनन्त्वनुष्ठानरूपं — अत्रैवर्णिकाधिकारत्रैवर्णिकाधिकारप्रभेदेन स्पष्टम् । इदं नातीव रुचिरं प्रयोजनम् ॥ १२ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां षष्ठाध्यायस्य द्वितीयः पादः ॥

---

## षष्ठाध्याये तृतीयः पादः

(सर्वशक्त्यधिकरणम् — १)

### सर्वशक्तौ प्रवृत्तिस्स्यात्तथाभूतोपदेशात् ॥ १ ॥ (पू)

बह्वृचब्राह्मणे श्रूयते—अकामसंयुक्तमग्निहोत्रं, अकामसंयुक्तौ च दर्शपूर्णमासौ । यथा—यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाविति । नात्र कामसंयुक्तं वाक्यमुदाहरणम्, किन्त्वकामसंयुक्तमिदमेवोदाहरणम् ॥

तत्र संदिह्यते—किं अकामस्थले कृत्स्नाङ्गोपसंहारसमर्थस्यैवाधिकारः ? उत कतिपयाङ्गोपसंहारसमर्थस्यापि ? इति ॥

नित्यवत् श्रूयमाणेषु अग्निहोत्रादिषु अनुष्ठातृपुरुषस्य सर्वशक्तौ—सर्वाङ्गोपसंहारशक्तौ—सामर्थ्ये सत्येव, प्रवृत्तिः स्यात्—(कर्मानुष्ठाने प्रवृत्तिः स्यात्) यथा काम्ये कृत्स्नाङ्गोपसंहारः, तथाभूतोपदेशात्—यावज्जीवादि प्रधानविधिरूपप्रयोगविधिषु, तथाभूतस्य—कृत्स्नाङ्गोपेतस्यैव, उपदेशात्—उपदिश्यमानत्वात् अत्र कृत्स्नाङ्गोपसंहारदक्षस्यैवाधिकारः, न तु कतिपयाङ्गसमुपसंहारसमर्थस्यापीति ॥ १ ॥

### अपि वाप्येकदेशः[2] स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात् ॥ २ ॥ (सि)

---

१ अत्र "इति" पदं मातृकायां नास्ति ।

२ अपिवाप्येकदेशे स्यात् — क. ख.

अपिवेति पक्षव्यावृत्तिः क्रियते। न कृत्स्नाङ्गोपसंहारः, किन्तु प्रयाजादीनामङ्गानामपि मध्ये, यागस्वरूपनिर्वाहकदृष्टप्रयोजनरूपाङ्ग एकदेशः स्यात्—दृष्टार्थाङ्गोपसंहारः स्यात्, न कृत्स्नस्येत्यर्थः। कुतः।? हि हेतौ। यस्मात् प्रधाने—आग्नेयादिके अनुष्ठिते, अर्थनिर्वृत्तिः—प्रयोजननिर्वृत्तिः, अतो यत्किञ्चिदङ्गोपेतप्रधानानुष्ठानमित्यर्थः। इतरत्तु—प्रयाजाद्यङ्गम्, गुणमात्रं—उपसर्जनमात्रम् न तेषां पृथक् स्वातन्त्र्यम्। कुतः? तदर्थत्वात्—प्रधानार्थत्वात्—अन्यशेषत्वात्॥ २॥

[1]तदकर्माश्रयदोषस्ततो विशेषः स्यात्प्रधानेनाभिसंबन्धात्॥

तदकर्माश्रयदोषः—तस्य प्रधानस्य, अकर्म—अकरणं, तदाश्रयो दोषः, 'अपवा' इति वाक्ये श्रूयते। ततो हेतोः प्रधानमात्रानुष्ठानरूपो विशेषः स्यात्। 'अपवा' इति वाक्ये श्रूयमाणस्य पौर्णमासादिशब्दस्य प्रधानेनाभिसंबन्धात्—प्रधानपरत्वादित्यर्थः। अतः प्रधानमात्रानुष्ठानं नाङ्गैकदेशस्यापीत्यर्थः॥ ३॥

कर्माभेदन्तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशः स्यात् [2]प्रधानेनाभिसम्बन्धात्॥ ४॥

यदुक्तं "पौर्णमास्यां पौर्णमास्या यजेत" इत्येवमादिषु ... ... ... ... प्रधानेनाग्न्यादिना अभिसंबन्धात्, पौर्णमास्यादिशब्दात् साङ्ग (प्रधानप्रयोगस्य ... ... ...) सर्वेषामङ्गप्रधानानामविविक्तानां उपदेशः स्यात्, अतः कृत्स्नाङ्गानुष्ठानमिति, तदयुक्तम्। कुतः? प्रयोगवचनैकत्वात्—साङ्गं कर्म युगपदनुष्ठेयमिति प्रयोगवचनस्यैकत्वात्। अनुष्ठानैक्यप्रतिपादनपरत्वात् कर्माभेदं—अङ्गप्रधानाभेदं, जैमिनिः—आचार्यो मेने। अतोऽङ्गप्रधान विवेको-[3]ऽस्तीत्यर्थः॥ ४॥

---

१ तदकर्मणि च दोषस्तस्मात्ततो विशेषस्स्यात ... क. ख.

२ अस्मिन् सूत्रे 'प्रधानेनाभिसंबन्धात्' इत्यन्तिमो भागः क. ख. नास्ति।

३ नास्तीत्यर्थः इति स्यात्।

अर्थस्य व्यपवर्गित्वादे[1]कदेशस्यापि प्रयोगे स्याद्यथाक्रत्वन्तरेषु ॥ ५ ॥

अर्थस्य–दर्शपूर्णमासादिशब्दार्थस्य व्यपवर्गित्वात् – विशेषेणाङ्गेभ्योऽपवर्गित्वात् – अङ्गविभिन्नत्वात्, पौर्णमासादिशब्दस्य प्रधानपरत्वादित्यर्थः। एकदेशस्यापि – क्रतुस्वरूपनिष्पादकाङ्गैकदेशस्यापि, प्रयोगे – अनुष्ठाने, फलं स्यात् इत्यर्थः। यथा, प्रकृतिविकृतिषु क्रत्वन्तरेषु, विकृतेः क्रतोः प्रकृतौ धर्मा न प्राप्नुवन्ति, तथात्रापि काम्यस्थलेष्विव कृत्स्नाङ्गोपसंहारो न स्यात्। काम्यक्रतुप्रकृतिकत्वाभावादस्य नित्यस्येत्यर्थः ॥ ५ ॥

विध्यपराधे च दर्शनात्[2] ॥ ६ ॥

चकारो हेत्वन्तरार्थः। "तदेव यादृक् कीदृक् च होतव्यमि"ति, विध्यपराधे – विधीयमानद्रव्यापचारे च, कर्मसमाप्तेः दर्शनाच्च न कृत्स्नाङ्गोपसंहारेणानुष्ठानमित्यर्थः ॥ ६ ॥

प्रायश्चित्तविधानाच्च ॥ ७ ॥

चकारेण हेत्वन्तरं समुच्चीयते। लिङ्गं प्रदर्शयति, यथा-भिन्ने जुहोति इति भेदननिमित्तकर्माङ्गहोमेषु साङ्गानुष्ठाने सत्यपि फलं न दृश्यते ; एवं अङ्गसामर्थ्यं फलजनने प्रयोजकं न भवति। तस्मात् नाङ्गोपसंहारेणानुष्ठानं नित्यकर्मणीत्यर्थः ॥

प्रयोजनन्त्वनुष्ठानरूपं – ... ... कोटि ... ... ... ... ... ... ... ॥ १ ॥

(काम्याधिकरणम् — २)

काम्येषु चैवमर्थित्वात् ॥ ८ ॥ (पू)

"ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" "सौर्यञ्चरुं निर्वपेद्ब्रह्मवर्चसकामः" "वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः" इत्यादिषु संदिह्यते – किं विगुणमपि कर्मफलसाधनं ? उत कृत्स्नाङ्गोपसंहारयुक्तमेव ? इति ॥

---

१ अर्थस्य ... देकस्यापि प्रयोगे ... रेषु क. ख.

२ विध्यपराधे च दर्शनात्समाप्तेः क. ख.

सौर्यादिषु काम्येषु कर्मसु, एवं – उक्तप्रकारवत् – विगुणमपि फलसाधनं, अतो न कृत्स्नाङ्गोपसंहारः। कुतः? अर्थित्वात् – विगुणस्यापि काम्यकर्मणो यदि फलदातृत्वं, तर्हि तावतापि काम्यकर्माधिकृतस्य फलवत्त्वात् अविशेषेण सर्वे प्रवर्तन्त इत्यर्थः ॥ ८ ॥

## असंयोगात्तु नैवं स्याद्विधेः शब्दप्रमाणत्वात् ॥ ९ ॥ (सि)

तुना पक्षो व्यावर्त्यते। त्वदुक्तं एवं न स्यात्। कुतः? विधेः विधिमात्रस्य प्रधानमात्रानुष्ठानस्य स्वीयफलेन असंयोगात् – असंबंधात्। हेत्वन्तरश्चाह – काम्यस्थलेषु कृत्स्नाङ्गोपसंहारेणानुष्ठाने, शब्दस्य – काम्यविधिशब्दस्य प्रमाणत्वात् – नियामकत्वात् इत्यर्थः ॥ ९ ॥

[1]प्रयोजनन्त्वनुष्ठानरूपं–कतिपयकृत्स्नाङ्गोपसंहाराभ्यां व्याख्यातव्यम् ॥२॥

( द्रव्यान्तराधिकरणम् — ३ )

## क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यात् ॥ १० ॥ (पू)

दर्शपूर्णमासयोः व्रिप्रकृतिकः पुरोडाशो यागसाधनं श्रुतः। तत्र यदि नीवारप्रकृतिकेन पुरोडाशेन यागः क्रियेत, तदा किं यागान्तरम्? उत स एव यागः? इति संदेहे –

क्रियाणां – दर्शपूर्णमासादि कर्मणां, व्रीहिव्यतिरिक्त द्रव्यान्तरे – द्रव्यान्तरसंबन्धे सति विभागः स्यात् – कर्मपृथक्त्वं स्यात् – द्रव्यभेदात्कर्मभेद इत्यर्थः। कुतः? आश्रितत्वात् – कर्मस्वरूपस्य द्रव्यमाश्रित्य वर्तमानत्वादित्यर्थः। अतो न तदेव कर्म ॥ १० ॥

## अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयञ्च सत्त्ववत् ॥ ११ ॥ (सि)

---

१ अकर्मणि चाप्रत्यवायात्–इति सूत्रं, तद्व्याख्या चात्र क. ख.

अपि वेति पक्षव्यावृत्तिः क्रियते। गोत्ववत्–गोत्वजातिर्यथा ... ... ... ... दपि न भिद्यते, तद्वत् दर्शपूर्णमासादिषु नीवारादिद्रव्यान्तर ... ... ... ... ... ... ... ... ऐककर्म्यं–एककर्मतैव स्यात्, न तु कर्मान्तरत्वम्; कुतः? अव्यतिरेकात्–नीवारादिसमन्व ... ... ... ... ङ्गभेदेऽपि दर्शादिकर्मणोऽव्यतिरेकात्–अभिन्नत्वात्। हेत्वन्तरञ्च व्याचष्टे–रूपशब्दाविभागाच्च–द्रव्यदेवतासंबन्धनिरूप्यस्य कर्मरूपस्य च दर्शादिशब्दस्य च अविभागात्–ऐकरूप्यादित्यर्थः। तस्मात् दर्शादि नामधेयञ्च सत्त्ववदेव–गोत्ववदेव। व्यक्तिभेदेऽपि न कर्मसामान्यं भिद्यत इत्यर्थः॥ ११॥

प्रयोजनन्त्वनुष्ठानरूपं – उभयत्रानुष्ठानभेदाप्रतीतेरन्वेषणीयम्। अथवा विकृत्यन्तरे वा प्रयोजनं वर्णनीयम्॥ ३॥

(श्रुतद्रव्यापचारे, नित्यकर्मणः प्रारब्धकाम्यकर्मणश्च प्रतिनिधिना समापनाधिकरणम्–४)

## श्रुतिप्रमाणत्वाच्छिष्टाभावे नाऽऽगमोऽन्यस्याशिष्टत्वात्॥१२॥ (५)

अग्निहोत्रादीनि कर्माण्युदाहरणम्।

किं तेषु श्रुतद्रव्यापचारे तदन्तं कर्मोत्स्रष्टव्यं? उत प्रतिनिधिमुपादाय कर्म कर्तव्यं? इति संदेहे —

अग्निहोत्रादिषु श्रुतद्रव्यापचारः शिष्टाभावः, तस्मिन् सति, तस्य कर्मणः श्रुतिप्रमाणत्वात्–व्रीहिश्रुतिप्रमाणत्वात्–तद्द्रव्यकत्वेनैव विधानात् अन्यस्य–द्रव्यान्तरस्य प्रतिनिधित्वेन तत्स्थाने नाऽऽगमः–अनुपसंग्रहणम्। तदन्तमेव कर्मोत्स्रष्टव्यमित्यर्थः। कुतः? अशिष्टत्वात्–व्रीहिगुणककर्मवत् नीवारगुणककर्मणः फलाजनकत्वादित्यर्थः॥ १२॥

## क्वचिद्विधानाच्च॥ १३॥

चकारो हेत्वन्तरसमुच्चयार्थः। क्वचित् "सोमाभावे पूतीकानभिषुया"

दिति विधानात् न श्रुतद्रव्यापचारे सर्वत्र प्रतिनिधिः। प्रतिनिधेरविधेयत्वा-दित्यर्थः ॥ १३ ॥

## आगमो वा चोदनार्थाविशेषात् ॥ १४ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। द्रव्यान्तरस्य आगमः – आनयनं श्रुतद्रव्यापचारे। कुतः? चोदनार्थाविशेषात् – यजतिचोदनार्थस्य द्रव्यान्तरानयनेऽपि अविशेषात् – ऐकरूप्यात् न नीवारगुणककर्मणः फलानवाप्तिरित्यर्थः ॥ १४ ॥

## [1] तन्नित्यं तच्चिकीर्षा हि ॥ १५ ॥

क्वचिद्विधानादिति यदुक्तं तन्न सङ्गच्छते। हिर्हेतौ। यस्मात्कारणात् तच्चिकीर्षा–तत्सोमसदृशद्रव्योपादानम् सादृश्यात् सर्वत्र प्राप्तम्। अतः पूतीकेष्वीषत्सदृशेषु विधानं तादर्थ्यं नियमार्थतां भजते–नियमविधिस्तत्रेति ॥ १५ ॥

प्रयोजनन्त्वनुष्ठानरूपं कोटिभ्यामनुवर्णितम् ॥ ४ ॥

( देवताग्न्यधिकरणम्—१ )

## न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १६ ॥

अग्न्याद्या देवताः, आहवनीयाद्या अग्नयः, शब्दो–बर्हिर्देवसदनं दामीत्यादिः, क्रियाः – समिद्यागप्रभृतयः ॥

तदेषु संदेहः –किं देवताग्निशब्दक्रियाणामपचारः ... ... ... तदा प्राग्वत् प्रतिनिधिमुपादायानुष्ठेयम्? उत न? एतेषां प्रतिनिध्यभावः इति ॥

देवताग्निशब्दक्रियं–एकवद्भावः। लुप्यमानमिदं न प्रतिनिधिस्थानम्। कुतः? अन्यार्थसंयोगात् – प्रतिनिधीयमानानां देवताग्निशब्दक्रियाणां, अन्येन – प्रकृतेतरेण, अर्थेन प्रयोजनेन संयोगात्–संबन्धात्। देवतान्तरेण

---

१ अत्र नियमार्थः क्वचिद्विधिः इति सूत्रं, तद्व्याख्या च क. ख.

अग्न्यन्तरेण—शब्दान्तरेण—क्रियान्तरेण च क्रियमाणं कर्म न तदेव भवति, अतो न प्रतिनिधीयेरन्निति ॥ १६ ॥

[1]देवता च तदर्थत्वात् ॥ १७ ॥

चकारो हेत्वन्तरद्योतकः। देवता न प्रतिनिधीयेत। कुतः? तदर्थत्वात्—दर्शादिकर्मणो देवतार्थत्वात्। अयमर्थः—विधीयमानैव देवता भवति—नाविधीयमाना। प्रतिनिधीयमानायाश्च न विधिः। अतो न देवताप्रतिनिधिरिति [2]शेषः ॥ १७ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—स्पष्टमेव प्रतिनिध्यप्रतिनिधिभ्यामिति नात्र लिख्यते ॥ ५ ॥

( प्रतिषिद्धमाषादेः प्रतिनिधित्वाभावाधिकरणम्—६ )

प्रतिषिद्धश्चाविशेषेण हि तच्छ्रुतिः ॥ १८ ॥ सि)

अथ यत् प्रतिषिद्धं "अयज्ञियो वै माषः" "अयज्ञियाः कोद्रवाश्च" इति, तत्र संदेहः—

किमिदं माषादिकं श्रुतद्रव्यापचारे प्रतिनिधेयं? उत न? इति ॥

च एवार्थे। प्रतिषिद्धं माषादिकञ्च ... ... ... ... निधियोग्यम्। कुतः? हिर्हेतौ। यस्मात्कारणात् तच्छ्रुतिः—... ... ... ... माषप्रतिषेधपरा श्रुतिः, अविशेषेण—सामान्यत एव ... ... संबन्धं वारयति। अतो न माषादिकं क्रतौ प्रतिनिधेयम् ॥ १८ ॥

प्रयोजनन्त्वनुष्ठानरूपं स्पष्टम् ॥ ६ ॥

---

१ देवतायाश्च तदर्थत्वात् क. ख.

२ इदं त्यक्तुं युक्तम् (सं)

( स्वामिनः प्रतिनिध्यभावाधिकरणम्—७ )

तथा स्वामिनः फलसमवायात् फलस्य [1]कर्मनियोगत्वात् ॥ १९ ॥ (सि)

अग्निहोत्रादीन्युदाहरणम् । तेषु [1]याजमाने अपचरति संदिह्यते—किमन्यः प्रतिनिधातव्यः? उत न? इति ॥

तत्र स्वामिनः—यजमानस्य च न प्रतिनिधिः। कुतः? फलसमवायात्—ऋत्विक्परिक्रयं द्रव्योत्सर्गञ्च कुर्वत एव फलसमवायात्। प्रतिनिधीयमानस्तु परिक्रयं परित्यागञ्च कुर्वन् यजमान एव स्यात् न प्रतिनिधिः। उक्तस्यार्थस्य विवरणम्—फलस्य—स्वर्गादिफलस्य च कर्मनियोगत्वात्—ऋत्विक्परिक्रयादिकर्मनियोगः—कर्मविधिः, तदधीनत्वात्। ऋत्विक्परिक्रयादि कुर्वत एव फलसंबन्ध इत्यर्थः ॥ १९ ॥

प्रयोजनन्त्वनुष्ठानरूपं—प्रतिनिध्यप्रतिनिधिभ्यां वर्णितम् ॥ ७ ॥

( सत्रे कस्यचित्स्वामिनो मरणे प्रतिनिध्युपादानाधिकरणम्—८ )

बहूनान्तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥ २० ॥ (सि)

"सप्तदशावरास्सत्रमासीरन्" इत्येतदुदाहरणम्। तत्र, किमत्रापि यस्मिन्कस्मिंश्चित्स्वामिन्यपचरति न प्रतिनिधेयं पुरुषान्तरं? उत प्रतिनिधेयं पुरुषान्तरं? इति संदेहे —

प्रवृत्ते—सत्रे प्रवितते सति बहूनां यजमानानां ... ... ... ... कस्यचिदपचारः स्यात्, तत्स्थाने अन्यं—अपचरितपुरुषनेदिष्ठं पुरुषान्तरं, आगमयेत्। कुतः? अवैगुण्यात्—एवं सति सप्तदशकर्तृकस्य कर्मणः अवैगुण्यमुपपादितं भवतीति ॥ २० ॥

प्रयोजनन्तु विस्पष्टम् ॥ ८ ॥

---

१ ... फलस्य कर्मयोगित्वात् क. ख.

१ यजमाने इति साधु (सं)

( सत्रे प्रतिनिहितस्य स्वामित्वाभावाधिकरणम्–९ )

## स स्वामी स्यात्त[1]त्संयोगात् ॥ २१ ॥ (पू)

तस्मिन्नागम्यमाने पुरुषे संदेहः – किमयं स्वामी? उत कर्मकरः? इति ।

सः – प्रतिनिधीयमानः, स्वामी स्यात् न केवलं कर्ता । कुतः? तत्संयोगात् – ... ... ... ... प्रतिनिधीयमानस्य स्वामिस्थाने संयोगात् संबन्धात्, तत्स्थानापन्नस्य तद्धर्मत्वमित्यर्थः ॥ २१ ॥

## कर्मकरो वा [2]कृतत्वादवशिष्टैः ॥ २२ ॥ (सि)

वाकारः पक्षव्यावर्तकः । आगम्यमानः कर्मकर एव स्यात्, नतु स्वामी फलभाक् । कुतः? कृतत्वात् – अवशिष्टैः प्रे ... ... ... ... कर्म अवशिष्टैः ऋत्विक्त्वेन कृतत्वात् ॥ २२ ॥

## तस्मिंश्च फलदर्शनात् ॥ २३ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । "यो दीक्षितानां प्रमीयेत, अपि तस्य फलं" इति तस्मिन् मृत एव फलदर्शनात् – फलोपदर्शकवाक्योपलम्भात्, न स्वामित्वमानीयमानस्य किन्तु कर्तृत्वमेवेत्यर्थः ॥ २३ ॥

प्रयोजनन्त्वनुष्ठानरूपं नातीव गहनम् ॥ ९ ॥

( सत्रे प्रतिनिहितस्य स्वामिधर्मत्वाधिकरणम्–१० )

## स तद्धर्मा स्या[3]त्तत्संयोगात् ॥ २४ ॥ (सि)

किमसावागम्यमानः स्वामिधर्मा? उत ऋत्विग्धर्मा? इति संदेहे —

---

१ स स्वामी स्यात्संयोगात ख.

२ ... भृतत्वात–क. ख. । अत्र मातृकायां सूत्राधारभूतः पत्रभागः छिन्नः । व्याख्यानपङ्क्तिभ्यः – कर्मकरो वा कृतत्वादवशिष्टैः – इति सूत्रशरीरमभ्यूह्यते । (सं)

३ कर्मसंयोगात क. ख.

सः — सत्रे प्रतिनिधीयमानः पुरुषः तद्धर्मा — स्वामिधर्मा स्यात्। कुतः? तत्संयोगात् — तत्स्थानापन्नत्वादित्यर्थः। स्वामिसंस्कारयुक्त एव स्यात्, न ऋत्विग्धर्मा इति॥ २४॥

प्रयोजनन्त्वनुष्ठानरूपं स्पष्टम्॥ १०॥

(श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधिनियमाधिकरणम्—११)

## सामान्यं तच्चिकीर्षा हि॥ २५॥ (सि)

श्रुतद्रव्यापचारे प्रतिनिधिमुपादाय कर्तव्यमिति समधिगते सति अपरं संदिह्यते — किं यत्किञ्चिदसदृशमुपादाय द्रव्यं प्रयोगः स्यात्? उत सदृशं? इति॥

श्रुतव्रीह्यादिद्रव्यापचारे सति यस्मिन् द्रव्ये श्रुतद्रव्यावयवसामान्यं — दीर्घशूकत्वादिकं वर्तते तदेव प्रतिनिधेयं नान्यत्। कुतः? हिर्हेतौ। यस्मात् कारणात् प्रतिनिधिस्थलेषु तच्चिकीर्षा — श्रुतद्रव्यसदृशद्रव्यान्तरचिकीर्षा। अतः सदृशानामेवोपादानं न विसदृशानाम्॥ २५॥

अनुष्ठानन्तु प्रयोजनरूपं अन्वेषणीयम्॥ ११॥

(द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम्—१२)

## निर्देशात्तु विकल्पे यत्प्रवृत्तम्॥ २६॥ (सि)

अग्नीषोमीये पशौ श्रुतम् — खदिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति इति॥

खदिरगुणके प्रयोगे खदिरव्यापत्तौ भवति संशयः — किं वैकल्पिकस्य पालाशादेरुपादानं? उत खदिरसदृशस्यैव? इति॥

... ... ... राद्धे अग्नीषोमीयादिपशुषु वैकल्पिकानां पलाश ... ... ... ... ... ... ... ... ... ... ... ... .... तदपचारे जाते, विकल्पे — पलाशादि-विकल्पे यत् — खदिरादि, प्रवृत्तं — क्रतुसंबद्धं, तत्सदृशमेवोपादीयते प्रति-

निधित्वेन। कुतः? निर्देशात्—तस्मिन् यागे खदिरस्यैव निर्देशात् तत्सदृशोपादानम्, न तु वैकल्पिकरोहितकादिग्रहणमित्यर्थः ॥ २६ ॥

[1]अशाब्दमपीति चेत् ॥ २७ ॥

अपिः त्वर्थे। खदिरसदृशोपादानं इति पश्यसि चेत्, त्वत्पक्षे तु अशाब्दं स्यात् अश्रुतसदृशोपादानं स्यात्। मत्पक्षे तु, श्रुतवैकल्पिकग्रहणमित्यर्थः ॥ २७ ॥

नानङ्गत्वात् ॥ २८ ॥

खदिरसंबन्धिनि प्रयोगे कदरस्यैव तत्सदृशस्योपादानम्। कुतः? विकल्पे श्रुतस्य पलाशादेः तस्मिन्प्रयोगे अनङ्गत्वात् न पलाशाद्युपादानम्। सदृशग्रहणे तु तत्सदृशस्यापचरित द्रव्यसदृशत्वादेवाङ्गत्वं स्यादित्यर्थः ॥ २८ ॥

प्रयोजनन्त्वनुष्ठानरूपं—प्रकृतानन्वेषणीयम् ॥ १२ ॥

(पूतीकानां सोमप्रतिनिधित्वाधिकरणम्—१३)

वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ २९ ॥ (सि)

"यस्सोमं न विन्देत् पूतीकानभिषुणुयात्" इति श्रुतम् ॥

तत्र संदेहः—किं अभावे निमित्ते विधिः? उत प्रतिनिधिनियमः? इति ॥

"यदि सोमं न विन्देत् पूतीकानभिषुणुयात्" इत्यत्र इतरस्य—श्रुतस्य सोमस्य अभावात् तत्स्थाने पूतीकाः प्रतिनिधिः, न तु नैमित्तिकत्वं—अभावे निमित्ते विधिरिति। इतरेषु द्रव्येषु तत्सामान्ये भूयसि सत्यपि न तेषां प्रतिनिधित्वम्। सोमस्य अभावे—अपचारे इतरेषां भूयोऽवयवसामान्यात् उपसंग्रहणं अन्याय्यं न्यायेन प्राप्तं न्याय्यं, तदुप ... ... ... ... तेषां

---

१ अशब्दमिति चेत् क. ख.

साम्यसिद्धये उपसंग्रहणमिति नोपादानं, वचनाच्च विसदृशानां नियम इति न नैमित्तिकत्वम्; यतस्तल्लोपे तत्सदृशस्योपादानं स्यादित्यर्थः ॥ २९ ॥

प्रयोजनन्त्वनुष्ठानरूपं – प्रकृतावन्वेषणीयम् ॥ १३ ॥

(प्रतिनिध्यपचारे श्रुतद्रव्यसदृशस्यैव प्रतिनिधित्वाधिकरणम्–१४)

## न प्रतिनिधौ समत्वात् ॥ ३० ॥ (सि)

यदा प्रतिनिधिद्रव्य ... ... ... ... ण विनष्टं तदा तत्प्रतिनिधिसदृशमुपादेयम्? उत उपात्तविनष्टसदृशं? इति संदेहे —

श्रुतिविहितद्रव्यापचारे सति प्रतिनिधौ प्रतिनिध्यन्तरेणा ... ... ... ... प्रतिनिहितद्रव्यसदृशोपादानम्। कुतः? समत्वात् – प्रतिनिहितद्रव्यलोपे प्रतिनिधीयमानस्य द्रव्यस्यापि प्रतिनिहितसमत्वात् न तत्सदृशोपादानम् ॥ ३० ॥

## [1]स्याच्छ्रुतिलक्षणे ॥ ३१ ॥

श्रुतिलक्षणे – श्रुतिवर्णिते पूतीके अपचरति सति तत्सदृशस्यैव द्रव्यान्तरस्योपादानं स्यात्। श्रुतत्वाविशेषादित्यर्थः ॥ ३१ ॥

## न तदीप्सा हि ॥ ३२ ॥

न पूतीकसदृशानामुपादानम्। कुतः? हिर्हेतौ। यस्मात्कारणात् तदीप्सा – तत्सदृशस्य-सोमसदृशस्य द्रव्यस्य पूतीकस्थलेऽन्वीप्सा न त ... ... पि सोमसदृशस्यैवेप्सा, न पूतीकसदृशस्येत्यर्थः ॥ ३२ ॥

प्रयोजनन्त्वनुष्ठानरूपं – भेदेन पक्षयोश्चिन्त्यम् ॥ १४ ॥

(मुख्यापचारे पुनर्मुख्यप्राप्तौ तस्यैवोपादानाधिकरणम्–१५)

## मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ ३३ ॥ (सि)

---

१ स्याच्छ्रुतिलक्षणे नियतत्वात् - इति क. ख. पाठः, अधिकरणभेदश्च।

प्रतिनिध्युपादाने प्रवृत्तस्य मुख्यलाभे सति किं मुख्यं परित्यज्यैव प्रतिनिधिग्रहणसंकल्पबलात् प्रतिनिधिमुपाददीत? उत मुख्यद्रव्योपादानम्? इति संदेहे–

मुख्याभावे यत्र प्रतिनिधिमुपादातुं प्रवृत्तः, अकृतकिंचित्संस्कारे च प्रतिनिधौ, मुख्ये च प्राप्ते मुख्यमेव गृह्णीयात्। कुतः? हिरेवकारार्थे। तदभावात्–मुख्याभावादेव प्रतिनिधेः आगमः–ग्रहणं न तु मुख्येऽपि लब्धे प्रतिनिधिद्रव्यग्रहणमिति ॥ ३३ ॥

प्रयोजनन्त्वनुष्ठानरूपं–पक्षयोर्न भिद्यते, तदन्वेषणीयम् ॥ १५ ॥

(प्रतिनिधिना कृते च कार्ये श्रुतद्रव्यलाभेऽपि तदनुपादानाधिकरणम्–१६)

## प्रवृत्तेऽपीति चेत् ॥ ३४ ॥ (पू)

प्रतिनिधिद्रव्ये कृतप्रयोजनसंस्कारे जाते सति, यदि श्रुतमेव द्रव्यमुपलभ्यते, तदा किं मुख्येनैव समापनम्? उत कृतकतिपयसंस्कारेण प्रतिनिहितेनैव? इति संदेहे—

प्रतिनिधौ प्रयोजनपर्यन्तसंस्कारजाते–प्रवृत्तेऽपि मुख्यप्राप्तौ मुख्यस्यैवोपादानं इति पश्यसि चेत्, इति सूत्रेणैवानुवादः ॥ ३४ ॥

## नानर्थकत्वात् ॥ ३५ ॥ (सि)

त्वदुक्तं मुख्योपादानं नैव स्यात्। कुतो हेतोः? अनर्थकत्वात्–कृतप्रयोजने हि प्रतिनिधौ मुख्यग्रहणस्यानर्थकत्वात्। प्रयोजनश्रुत्यर्थात् यूपादौ नियोजनादावनुष्ठिते न प्रतिनिधिग्रहणमित्यर्थः ॥ ३५ ॥

प्रयोजनन्त्वनुष्ठानरूपं — पुनर्नियोजनादिकं स्यात्पूर्वपक्षे, सिद्धान्ते तु नेति ॥ १६ ॥

(द्रव्यसंस्कारविरोधाधिकरणम्–१७)

## द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३६ ॥ (सि)

यूपकाले सकलसंस्कारयोग्ये कदरकाष्ठे सन्निहिते, कतिपयसंस्कारयोग्ये खदिरे च वर्तमाने, किं कदरस्य ग्रहणं सकलसंस्कारानुग्रहार्थं? उत कतिपयसंस्कारसमर्थस्य खदिरस्यैव? इति संदेहे —

द्रव्यसंस्कारविरोधे — द्रव्यस्य, खदिरादिद्रव्यस्य, कदरगतानां संस्काराणाञ्च योग्यानां विरोधे-सन्निपाते सति, द्रव्यं — खदिरं कतिपयसंस्कारयोग्यमपि गृह्यते। कुतः? तदर्थत्वात् — संस्काराणां तदर्थत्वात् द्रव्यार्थत्वात् द्रव्यं प्रति गुणभूतत्वादित्यर्थः ॥ ३६ ॥

प्रयोजनन्त्वनुष्ठानरूपं — कृत्स्नकतिपयसंस्कारप्रभेदेन द्योतितम् ॥ १७ ॥

(कार्यासमर्थे मुख्यद्रव्ये प्रतिनिधेरेवोपादानाधिकरणम्—१८)

## अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे [1]तदुत्पत्तिर्द्रव्याणामर्थशेषत्वात् ॥ ३७ ॥ (सि)

यूपकाले अतिलघुतरे खदिरे सन्निहिते पश्वनपक्रमणसमर्थे [2]च कदरकाष्ठे च सन्निहिते सति, किं खदिरस्यैव ग्रहणं? उत पश्वनपक्रमणसमर्थस्य कदरस्यैव ग्रहणं? इति संदेहे —

अर्थद्रव्यविरोधे — नियोजनरूपस्यार्थस्य खदिरलतारूपद्रव्यस्य च विरोधे सति, अर्थो गृह्यते-प्रयोजनमेव गृह्यते-नियोजनाद्यर्थं कदरादिर्गृह्यते। एवञ्च सति द्रव्याभावे — द्रव्यस्य खदिरलतारूपस्य अभावे अपरिग्रहे सति, तदुत्पत्तिः — नियोजनरूपप्रयोजनोत्पत्तिः । कुतस्तस्याग्रहणम्? तदाह — द्रव्याणां — खदिरादिश्रुतद्रव्याणां अर्थशेषत्वात् नियोजनादिप्रयोजनगुणभूतत्वात् — प्रयोजनानुवर्तित्वादित्यर्थः ॥ ३७ ॥

प्रयोजनन्त्वनुष्ठानरूपं — पूर्वपक्षे खदिरे [3]नियोजनाभावः, सिद्धान्ते तु कदर इति ॥ १८ ॥

---

१ ... ... ... तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् क. ख. २. इदमधिकम्।
३ नियोजनम्-इति स्यात्।

( विध्येकदेशाधिकरणम्—१९ )

[1]विधेरप्येकदेशः स्यात् ॥ ३८ ॥ (पू)

प्रधान द्व्यवदानमात्रपर्याप्तेषु व्रीहिषु, प्रधानशेषकार्यपर्याप्तेषु च नीवारेषु स्थितेषु, किं व्रीहीणामेवोपादानम् ? उत नीवाराणाम् ? इति संदेहे —

प्रधान संबद्धद्व्यवदानमात्रपर्याप्ते व्रीहिद्रव्ये स्थिते शेषाद्यंशे अपचरति सति, विधेः — प्रतिपत्तिरूपस्विष्टकृदादिविधेः अनुग्रहार्थं, मुख्याभावे नीवारैः एकदेशः — स्विष्टकृदाद्यंशः स्यात् — स्विष्टकृदादिसिद्ध्यर्थं द्रव्यान्तरेण शेषकार्यं कर्तव्यमित्यर्थः ॥ ३८ ॥

अपि वार्थस्य शक्यत्वादेकदेशेन निर्वर्त्येतार्थानामविभक्तत्वात् [2]गुणमात्रमितरत् ॥ ३९ ॥ (सि)

अपिवेति पक्षव्यावृत्तिः क्रियते। व्रीहीणां एकदेशेन प्रधानमात्रं द्व्यवदानरूपं निर्वर्त्येत क्रियेत। कुतः ? द्व्यवदानमात्रसाध्यस्य प्रधानयागरूपस्य अर्थस्य तावतापि शक्यत्वात्, अर्थानां — स्विष्टकृदाद्यर्थानां प्रयोजनानां, अविभक्तत्वात् — अपृथग्भूतत्वात्, इतरत् — स्विष्टकृदादि गुणमात्रं — प्रधानगतव्रीहिरूपगुणबाधेन स्वोत्पत्त्यर्थं नीवारादिद्रव्यान्तरं न प्रयोजयति। शेषापचारेणापि प्रतिपत्तेर्जातत्वादित्यर्थः ॥ ३९ ॥

[3]तथा चान्यार्थदर्शनम् ॥ ४० ॥

उक्तेऽर्थे हेत्वन्तरञ्च प्रदर्शयति — "तदेव यादृक् कीदृक् च होतव्यं" इति लिङ्गदर्शनञ्च "एव"कारेण प्रधानमात्रस्यैवानुष्ठेयतां तथा — दर्शयति। न स्विष्टकृदादीनां, यतो द्रव्यान्तरपरिग्रहः स्यात् ॥ ४० ॥

---

१ विधिरप्येकदेशे स्यात् क. ख.

२ ... ... ... मितरत्तदर्थत्वात् क. ख.

३ इदं सूत्रं व्याख्या च क. ख. नास्ति।

प्रयोजनन्त्वनुष्ठानरूपं — शेषकार्यनिर्वाहार्थं द्रव्यान्तरोपादानं पूर्वपक्षे, सिद्धान्ते तु शेषकार्याणां लोपः इति ॥ १९ ॥

इति जैमिनिसूत्रवृत्तौ फलवल्यां षष्ठस्याध्यायस्य तृतीयः पादः ।

ओम् हयग्रीवाय नमः । स्वप्नवाराह्यै नमः ।
अद्वैताश्रमेभ्यो नमः ।

---

## षष्ठाध्याये चतुर्थः पादः

---

(द्व्यवदानाधिकरणम्—१)

### शेषाद्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥ पू)

दर्शपूर्णमासयोराग्नेयं हविराम्नातम् । तत्र यदि द्व्यवदानमात्रमुद्धृतं व्यापद्येत, किं शेषात् पुनरवदेयम्? उत न? इति संशये—

द्व्यवदानमात्रस्य नाशे सति शेषात्—अवत्तशेषात् पुरोडाशात् पुनः प्रधानायावदानं स्यात् । कुतः? तदर्थत्वात्—कृत्स्नस्य पुरोडाशस्य तदर्थत्वात्—आग्नेयार्थत्वात् । देवतासंबन्धस्य अवत्त ... ... प ... ... विशेषात् तत एव पुनरवदेयमित्यर्थः ॥ १ ॥

### निर्देशाद्वान्यदागमयेत् ॥ २ ॥ (सि)

वाकारः पक्षव्यावर्तकः । 'मध्यात्पूर्वार्धादवद्यति' इति अवदानस्थलविशेषनिर्देशात्, अन्यत्—द्रव्यान्तरं आज्यादि आगमयेत् । न तु शेषादेवावदेयम् । कृत्स्नपुरोडाशविषयक्रमस्य पूर्वार्धीयोच्छेपेऽभावात् इत्यर्थः । २॥

प्रयोजनन्त्वनुष्ठानरूपं — शेषादिति च द्रव्यान्तरादिति च स्पष्टम् ॥ १ ॥

( सौविष्टकृतव्यापत्त्यधिकरणम्—२ )

## अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ ३ ॥ (सि)

स्विष्टकृते अवत्तं यदि नश्यति तत्र किं शेषादवदेयम्? उत न? इति संशये—

अपि वेति पक्षव्यावर्तकश्शब्दः । शेषभाजां—अवत्तपुरोडाशशेषभाजां स्विष्टकृदादीनां अवदाने शेषापादानके नष्टे सति लोप एव स्यात् नतु पुनर्ग्रहणम् । कुतः? विशिष्टकारणत्वात्—प्रतिपद्यमानस्य शेषस्य स्विष्टकृदुपसंविशिष्टप्रतिपत्तिकारणत्वात । अयमर्थः—विभागमात्रेण प्रतिपत्तिप्राप्तौ, स्विष्टकृदादिनैव प्रतिपत्तिः कर्तव्येति नियममात्रार्थत्वात, तद्व्यापत्तावपि प्रतिपत्तिर्जातैवेति न पुनः शेषात् स्विष्टकृदर्थावदानमित्यर्थः ॥ ३ ॥

प्रयोजनन्त्वनुष्ठानरूपं—शेषावदानानवदानाभ्यां प्रद्योतितम् ॥ २ ॥

( शेषभक्षाधिकरणम्—३ )

## निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥ (पू)

दर्शपूर्णमासयोः इडा प्राशित्र चतुर्धाकरणशंयुवाककालीनेषु भक्षेषु संदेहः—किं ऋत्विग्भ्योऽन्ये भक्षयितारः? उत प्रकृता एव ऋत्विजः? इति ।

तत्र इडा प्राशित्र चतुर्धाकरणशंयुवाककालीनश्शेषभक्षः अन्यैः—अप्रकरणस्थैः ऋत्विग्भिः कर्तव्यः स्यात् । कुतः? "यजमानपञ्चमा इडां भक्षयन्ति" इति यजमानपञ्चमा इडामेव भक्षयन्तीति तदितरपरिसंख्यानात्, इडाव्यतिरिक्तेषु अन्य एव प्राप्नुयुः । तत्र दृष्टान्तः—प्रधानवत्—यथा प्रधानदैवत्ये कृत्स्ने पुराडाशे देवतासंबंधित्वेन प्राप्ते द्व्यवदानमात्रमेव कार्त्स्न्यात् परिसंख्यायेत, एवमिहापि भक्ष्यत्वेन सर्वेषु प्राप्तेषु इडायामेवेति परिसंख्यायते ॥ ४ ॥

[1]सर्वं वा समवायात्स्यात् ॥ ५ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। सर्वं — इडाप्राशित्रादि सकलशेषद्रव्यं, प्रकृतैरेवाध्वर्य्वादिभिर्भक्ष्यं स्यात्। कुतः? अध्वर्य्वादीनां अस्मिन् कर्मणि समवायात् – कर्मसंबद्धाध्वर्य्वादिबलकरत्वात् तैरेव भक्ष्यं नान्यैः ॥ ५ ॥

[2]निर्देशस्य गुणत्वात् ॥ ६ ॥

"यजमानपञ्चमा इडामेव भक्षयेयुः" इति निर्देशस्य ऋत्विग्भक्ष्येषु शेषेषु सर्वेषु प्राप्तेषु यजमानस्य प्राप्त्यभावे जाते, तत्प्राप्तिरूप गुणत्वात् — तदर्थत्वादित्यर्थः ॥ ६ ॥

प्रधाने श्रुतिलक्षणम् ॥ ७ ॥

कृत्स्नस्यापि पुरोडाशस्य आग्नेयत्वेऽपि प्रधाने – अग्न्यादौ, प्रधानानुष्ठाने वा द्व्यवदानमात्रं यद्वर्णितं, तत् श्रुतिलक्षणं – श्रुतिप्रमाणकम्। तत्र च परिसंख्या च न्याय्येत्यर्थः ॥ ७ ॥

[3]पूर्ववदिति चेत् ॥ ८ ॥

पूर्ववत् – पूर्वोक्ताश्वमेधशेष भक्षणे इतरेषां प्राप्तिवत् अत्रापि तथा स्यात् इति पश्यसि चेत् इत्यत्रोक्तानुवादः ॥ ८ ॥

न चोदनाविरोधात् ॥ ९ ॥

अश्वमेधीयशेषभक्षणे प्रकृतैरेव कर्तव्ये सति अतिभक्षणात् पञ्चत्वमापन्नेषु ऋत्विक्षु, अश्वमेध चोदनाविरोधात्– अश्वमेधानुष्ठानासिद्धेः तत्र तथा स्यात्। अत्र न तथेत्यर्थः ॥ ९ ॥

---

१ सर्वैर्वा समवायात्स्यात् क. ख.

२ निर्देशस्य गुणार्थत्वं–क. ख.

३ अर्थवदिति चेत्–क. ख.

प्रयोजनन्त्वनुष्ठानरूपम् – प्रकृताप्रकृतकर्तृकत्वेन द्योत्यम् ॥ ३ ॥

( भेदनहोमाधिकरणम्–४ )

अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥ १० ॥ (सि)

दर्शपूर्णमासयोराम्नातम् – "भिन्ने जुहोति, स्कन्ने जुहोति" इति।

तत्र संदेहः – किं कृत्स्नभिन्ने कृत्स्नस्कन्ने च प्रायश्चित्तम्? उत एकदेशेऽपि विभिन्ने स्कन्ने च? इति।

दर्शपूर्णमासयोराम्नातं भेदनादिप्रायश्चित्तं, एकदेशे च भिन्ने कृत्स्ने च भिन्ने भवितुमर्हति। कुतः? अर्थसमवायात् – भेदनरूपार्थस्य, कृत्स्न-भेदने (एकदेश) भेदनेऽपि समवायात् – संबन्धात्, उभयोः कृत्स्नैकदेशयोः प्रायश्चित्तम् ॥ १० ॥

[1] न त्वशेषवैगुण्यात्तदर्थं हि ॥ ११ ॥

तुना प्रागुक्तपक्षो व्यावर्त्यते। अशेषवैगुण्यात् – अशेषे भिन्ने क्रियमाणस्य प्रायश्चित्तस्य, नष्टद्रव्यसंस्कारार्थत्वात्, संस्कार्यस्य च तदानीमभावात्, कृत्स्नभिन्नेऽपि प्रायश्चित्तमिति यदुक्तं, तन्न। कुतः? हिर्हेतौ। यस्मात्कारणात् भेदनप्रायश्चित्तं तदर्थं – भिन्नद्रव्यसंस्कारार्थं, अतः, एकदेश-भेदन एव प्रायश्चित्तम् ॥ ११ ॥

[2] स्याद्वा प्राप्तिनिमित्तत्वान्न तद्धर्मो नित्यसंयोगान्न हि तत्र गुणार्थेनानित्यत्वात् ॥ १२ ॥

वाकारः पक्षव्यावर्तकः। प्राप्तिनिमित्तत्वात् – भेदनमात्रप्राप्तेः

१ न त्वशेषे वैगुण्यात्तदर्थं हि, क. ख.

२ स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्नहि तस्य गुणार्थेनानित्यत्वात् क. ख.

निमित्तत्वात् कृत्स्नैकदेशभेदने प्रायश्चित्तं स्यात्। कुतो हेतोः? अयं भेदनहोमो न तद्धर्मः—तस्य भिन्नस्य संस्काररूपधर्मो न भवति। तत्र हेतुः—नित्यसंयोगात्—नित्यानित्यसंयोगविरोधादित्यर्थः। तदेव विवृणोति—भेदनस्य अनित्यत्वात्—कादाचित्कत्वात्, तस्य—भेदनस्य गुणार्थेन—दर्शपूर्णमासाङ्गरूपगुणार्थेन न संबन्धः। अतः न संस्कारार्थत्वेन हेतुना एकदेशभेदन एव प्रायश्चित्तमित्यर्थः ॥ १२ ॥

## गुणानाञ्च परार्थत्वाद्वचनाद्व्यपाश्रयः स्यात् ॥ १३ ॥

चकारः पक्षव्यावर्तकः। गुणानां इतरेतरमङ्गाङ्गिभावबोधकवचनादृते न गुणगुणिभावः। अत्र च—गुणानां—भेदनरूप भेदनहोमरूप गुणानां उपसर्जनानां, परार्थत्वात्—इतरेतरान्वयाभावात्—न भेदनगुणकद्रव्यसंस्कारार्थत्वमित्यर्थः। अत्र व्यपाश्रयस्य ... ... भेदनस्य विधेयगुणभूतस्यैवोद्देश्यत्वे च वर्ण्यमाने, द्वयोर्वर्णितयोरर्थयोः अपाश्रयः स्यात्—असंबन्धः स्यात्। अयमर्थः ... ... ... ... ... ... व वाक्ये उ(द्देश्यत्वविधे) यत्वयोरितरेतरसंबन्धविरोधान्नैमित्तिकं कर्मेत्यर्थः ॥ १३ ॥

## [1]न शेषभूतत्वात् ॥ १४ ॥

भेदनहोमस्य भेदनशेषभूतत्वाद्धेतोरुपकारकत्वेन भिन्नसंधानरूपोपकारस्ततो जन्येत, न जन्यते च। तस्मात् त्वदुक्तं न संभवति भेदनार्थत्वं होमस्येत्यर्थः ॥ १४ ॥

## अनर्थकश्च सर्वनाशे स्यात् ॥ १५ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। "भिन्नं कपालमप्सु प्रहरति" इति सर्वनाशे कपालानां जलप्रक्षेपः प्राप्तः, स तावकीने होमस्य संस्कारार्थत्वपक्षे

---

१ भेदार्थमिति चेत्, नाशेषभूतत्वात्, इति सूत्रद्वयं अत्र क. पुस्तके दृश्यते, तद्व्याख्यानञ्च। अस्यां मातृकायान्तु, तदुभयस्थाने, "न शेषभूतत्वात्" इतीदमेकमेव सूत्रं वर्तते।

अनर्थकः स्यात् । अयमर्थः — भिन्नसंस्कारार्थत्वे होमस्य, अप्सु प्रक्षिप्तमपि कपालं पुनरुद्ध्रियेत संधीयेत । "अन्यदुपदधाति" इत्याम्नानाच्च तथात्वं न संगच्छते ॥ १५ ॥

प्रयोजनन्त्वनुष्ठानरूपं — कोटिभ्यामेव व्याख्यातम् ॥ ४ ॥

(क्षामाधिकरणम्—५)

## क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १६ ॥ (सि)

दर्शपूर्णमासयोराम्नातम् — "अथ यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति । यदा तद्धविस्सन्तिष्ठते, अथ तदेव हविर्निर्वपेत् । यज्ञो यज्ञस्य प्रायश्चित्तिः" इति ॥

तत्र किमिदं सर्वक्षामे प्रायश्चित्तम्? उत एकदेशक्षामे? इति संदेहे —

यस्य पुरोडाशौ इत्यारभ्याम्नातं दार्शपूर्णमासिकं प्रायश्चित्तं सर्वदाहे सर्वावयवदाहरूपे क्षामे — अतिदाहे स्यात् । तुः एवकारार्थे । तत्रैव सर्वदाहे स्यात् । कुतः? एकदेशस्य — पुरोडाशैकदेश क्षामस्य, अवर्जनीयत्वात् — नित्यं प्रयोगे संबन्धात् न नित्यं प्रायश्चित्तमस्तीत्यर्थः । कपालेष्वेव स्थितस्य पुरोडाशस्य च उपर्यधस्ताच्चाङ्गारसंबन्धे सति, अवयवास्सन्ततं क्षायन्त एव । अतस्तन्न निमित्तमित्यर्थः ॥ १६ ॥

## [1]दर्शनाद्वैकदेशस्स्यात् ॥ १७ ॥

वाकारः पक्षव्यावर्तकः । एकदेशः — पुरोडाशैकदेशस्य क्षाम एव निमित्तं, न तु कृत्स्नक्षामम् । कुतः? दर्शनात् — यदा तद्धविस्सन्तिष्ठते अथ तदेव हविर्निर्वपेदिति अनवक्षाण पुरोडाशांशेन कर्मसंस्थानविधानदर्शनात्, अत्र च एकदेश क्षामस्य निमित्तत्वात् न तु कृत्स्नपुरोडाशक्षामं निमित्तमित्यर्थः ॥१७॥

---

१ दर्शनाद्वैकदेशे स्यात् क. ख.

[1]न चैतच्छास्त्राच्च कारणप्राप्तिः ॥ १८ ॥

एकदेशक्षाम एव निमित्तमिति यदुक्तं, तन्न। कुतः? "यदा तद्धवि-स्सन्तिष्ठते, अथ तदेव हविर्निर्वपेत्" इति शास्त्राच्च अन्येनापि हविषा समाप्तौ, कारणप्राप्तिः — निमित्तप्राप्तिः। अयमर्थः — अन्येन हविषा समापने-ऽपि प्रायश्चित्तं स्यादित्येतत्परं तद्वाक्यमिति ॥ १८ ॥

तद्धविश्शब्दान्नेति चेत् ॥ १९ ॥

"यदा तद्धविस्सन्तिष्ठते" इति तद्धविश्शब्दात् अन्येन केनचि-द्धविषा समाप्तिर्न निमित्तं प्रायश्चित्ते इति पश्यसि चेत् इत्यनुवादः ॥ १९ ॥

स्यादन्याय्यत्वादिज्यागामी हविश्शब्दस्तल्लिङ्गसंयोगात् ॥२०॥

"यदा तद्धविस्संतिष्ठते" इति हविश्शब्दः इज्यागामी स्यात् — [2]तद्धविष्कर्मपरः स्यात्, न तु हविरर्थ इत्यर्थः। कुतः? यदा संतिष्ठते कर्म, तेन च हविषा इति वाक्यभेदरूपगौरवस्य अन्याय्यत्वात् — अवाच्यत्वात्। हेत्वन्तरश्च, तल्लिङ्गसंयोगात् — कर्मणि हविस्संबन्धरूपं यल्लिङ्गं, तल्लिङ्ग-संयोगात्, तद्वति गौणी वृत्तिरुपपन्नेत्यर्थः। अतस्सर्वक्षामे प्रायश्चित्तम् ॥ २० ॥

प्रयोजनन्त्वनुष्ठानरूपं — एकदेशसर्वक्षामभेदेन स्पष्टम् ॥ ५ ॥

(हविरार्त्यधिकरणम् — ६)

यथाश्रुतीति चेत् ॥ २१ ॥ (पू)

दर्शपूर्णमासयोः श्रूयते — "यस्योभयं हविरार्तिमार्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्" इति।

---

१ अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः — क. ख.

२ तद्धविष्ककर्मपर इत्यर्थः क. ख.

तत्र किं उभयहविरार्तौ पञ्चशरावो निर्वप्तव्यः? उत अन्यतरार्तौ? इति संदेहे—

हविरार्तौ विहितः पञ्चशरावः यथाश्रुति उभयं हविरार्तिमार्च्छेतीति उभयपदं हविर्विशेषणत्वेन प्रतिपादयन्तीं श्रुतिं ... ... ... ... ... उभयहविरार्तौ स्यात् इति पश्यसि चेत्, इत्यनुवादः। अत उभयार्तावेव स्यात्, नान्यतरार्ताविति ॥ २१ ॥

[1]न लक्षणत्वादुपपातो हि कारणम् ॥ २२ ॥ (सि)

नेति पक्षव्यावृत्तिः क्रियते। हविर्मात्रस्यार्त्या उपपातः—संबन्धः, आर्तिसंबद्धमेव द्रव्यं, कारणं—पञ्चशराव ... ... ... कारणम्। हि रेवकारार्थे। कुतो हेतोः? लक्षणत्वात् आर्तिसंबद्धहविर्मात्रस्य निमित्तत्वात्। उभयविशेष्यत्वे हविषो वाक्यभेदः स्यात्। अतोऽन्यतरार्तिरेव निमित्तम् ॥ २२ ॥

प्रयोजनन्त्वनुष्ठानरूपं—स्पष्टम् ॥ ६ ॥

(होमाभिषवाधिकरणम्—७)

होमाभिषवभक्षणञ्च तद्वत् ॥ २३ ॥ (पू)

ज्योतिष्टोमे "ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति" इति श्रुते, होमाभिषवयोर्वाक्यान्तरप्राप्तयोरविधानात्, होमाभिषवाभ्यां निमित्ताभ्यां तत्कर्तृकं भक्षणं विधीयते ॥

तत्र संदेहः — किं होमाभिषवौ भक्षणनिमित्तं? उत अन्यतरदपि भक्षणनिमित्तं? इति ॥

**होमाभिषवनिमित्तकं भक्षणं तद्वत्—हविरार्तिरिव स्यात्।** अयमर्थः—यथा पञ्चशरावे अन्यतरहविरार्तिर्निमित्तं, तद्वदेव होमाभिषवौ भक्षणे निमित्तम्। न तु समुदितौ भक्षणकारणमिति ॥ २३ ॥

---

१ न तल्लक्षणत्वादुपपातो हि कारणम् क. ख.

## उभाभ्यां वा नहि तयोर्धर्मशास्त्रम् ॥ २४ ॥ (सि)

वाकारः पक्षव्यावर्तकः। उभाभ्यां—होमाभिषवाभ्यां समुदिताभ्यां निमित्ताभ्यां निरूप्यम्। कुतः? हि यस्मात्कारणात्, तयोः होमाभिषवयोः असमुदितयोः, "हुत्वा भक्षयन्ति" "अभिषुत्य भक्षयन्ति" इति पृथङ्निमित्तत्वप्रतिपादकं धर्मशास्त्रं, विधायकं नास्ति; तस्मादेव हेतोः समुदितौ होमाभिषवौ निमित्तं भक्षणे ॥ २४ ॥

[1] प्रयोजनन्त्वनुष्ठानरूपं—उभयकर्तृणामेव भक्षणं पूर्वपक्षे, सिद्धान्ते तु अन्यतर एव निमित्तमिति ॥ ७ ॥

(पुनराधेयाधिकरणम्—८)

## पुनराधेयमोदनवत् ॥ २५ ॥ (पू)

अग्निहोत्रे श्रूयते—"यस्योभावग्नी अनुगतौ अभिनिम्रोचेत् (उ) दियाद्वा पुनराधेयं प्रायश्चित्तिरिति ॥

तत्र किं अन्यतरानुगमने पुनराधेयम्? उत उभयानुगमे? इति सन्देहे—

प्रायश्चित्तत्वेन विहितं पुनराधेयं ओदनवत् स्यात्—पञ्चशराववत् स्यात्। यथा पञ्चशरावे अन्यतरार्ति ... ... ... अत्र पुनराधेयेऽपि (अन्यतराग्न्य)नुगतिरेव निमित्तं, न तु समुदितनिमित्तत्वम् ॥ २५ ॥

## द्रव्योत्पत्तेर्वोभयोः स्यात् ॥ २६ ॥ (सि)

वाकारः पक्षव्यावर्तकः। उभयोः—गार्हपत्याहवनीययोर्युगपदार्तौ पुनराधेयं स्यात्। कुतः? यथा प्रथमाधाने गार्हपत्याहवनीययोस्सहोत्पत्तिः, तथा पुनः क्रियमाणे आधानेऽपि तथैव द्रव्योत्पत्तेः अवश्यं वाच्यत्वात्, नान्यतरार्तौ पुनराधेयम्; वैगुण्यात्। तस्मादुभयानुगतिनिमित्तकं पुनराधेयम् ॥२६॥

---

१ इदं विपरीतं वर्णितम्

प्रयोजनन्त्वनुष्ठानरूपं – कोटिभ्यां स्पष्टम् ॥ ८ ॥

(पञ्चशरावाधिकरणम्–९)

## पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ २७ ॥ (पू)

ओदनवाक्यमेव विषयः । किं हविष्यार्तें पञ्चशरावः प्रतिनिधिः? उत निमित्ते कर्मान्तरं? इति संदेहे —

पञ्चशरावस्य निर्वापान्वये सति सान्नाय्य प्रतिनिधिदेवतया संबन्धे तु निमित्ते यागविधानमिति हविरार्तिनिमित्तः पञ्चशरावः दर्शसंबद्धसान्नाय्य प्रतिनिधिः स्यात्, न निमित्ते कर्मान्तरम् । कुतः? द्रव्यश्रुतेः – द्रव्यस्य पञ्चशराव परिमितस्य निर्वापश्रुतेः । अयमर्थः – पञ्चशरावस्य निर्वापसंबन्धे सति, "निर्वपेत्" इति श्रुतिसंबन्धः स्यात् । द्रव्यदेवता संबन्धे तु वाक्येन संबन्धः स्यात् । श्रुतिश्च वाक्यात् बलीयसीति ॥ २७ ॥

## चोदना वा द्रव्यदेवताविधेरवाच्ये हि ॥ २८ ॥ (सि)

वाकारः पक्षव्यावर्तकः । चोदना – कर्मान्तरविधिरेव । कुतो हेतोः? द्रव्यदेवताविधेः – द्रव्यस्य पञ्चशराव परिमितस्य, दे ... ... ... ... ... ... ... ... ... ... विधेः । अयमर्थः – कर्मनिरूपकद्रव्यदेवतयोरत्र श्रवणात् द्रव्यदेवताक्रियत्वाद्यजतिरूपस्य ... ... ... ... ... ... ... ... को ह्रिः । यत इन्द्रशब्देन इन्द्रो महेन्द्रश्च देवते अ ... ... ... अतो न प्रकृतदेवतानुवादेन द्रव्यनिर्वापविधिः । किन्तु निमित्ते कर्म ... ... ... ... ॥ २८ ॥

प्रयोजनन्त्वनुष्ठानरूपं पक्षयोरन्वेषणीयम् ॥ ९ ॥

(नैमित्तिकपञ्चशरावयागस्य दर्शाङ्गताधिकरणम्–१०)

## स प्रत्यामनेत्स्थानात् ॥ २९ ॥ (पू)

नैमित्तिकः पञ्चशरावयागः किममावास्यायाः प्रत्याम्नायः? उत न? इति संदेहे —

स एष पञ्चशरावः आमावास्यस्य कर्मणः प्रत्याम्नेत्–प्रत्याम्नायो भवेत्, नाङ्गम् । कुतः? स्थानात्–स्थानापत्तिप्रमाणात् । अयमर्थः–अमावास्यास्थानापन्नत्वात् पञ्चशरावस्य, स्थानापत्ति प्रमाणेन अमावास्याप्रतिनिधिरिति ॥ २९ ॥

## अङ्गविधिर्वा निमित्तसंयोगात् ॥ ३० ॥ (सि)

वाकार एवकारार्थे। पञ्चशरावे अङ्गविधिरेव स्यात् अमावास्याङ्गत्वेन विधिः स्यात्; नामावास्याप्रतिनिधित्वेन। कुतः? निमित्तसंयोगात्–हविरार्तौ निमित्ते प्रकृतकर्मणि पञ्चशरावस्याङ्गत्वेन संयोगात्, न स्वप्रधानं नापि प्रतिनिधिः किन्तु निमित्ते कर्माङ्गमिति ॥ ३० ॥

प्रयोजनन्त्वनुष्ठानरूपं–विकृतिविशेषेपून्नेयम् ॥ १० ॥

(विश्वजिदधिकरणम्–११)

## विश्वजित्त्वप्रवृत्तेऽभावः कर्मणि स्यात ॥ ३१ ॥ (सि)

इदमाम्नायते— "सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानमागुरते यस्सत्रायागुरते; स विश्वजितातिरात्रेण सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेत, सर्वाभ्यः एव देवताभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानं निष्क्रीणीते" इति।

किमयं विश्वजित् सत्राय सङ्कल्प्य सत्रकर्म [1] अकुर्वतः प्रायश्चित्तम्? उत यो न प्रयुङ्क्ते तस्य? इति संदेहे—

स एष विश्वजित् आगूर्य सङ्कल्प्य अप्रवृत्ते–अननुष्ठिते सत्रे स्यात्। सत्राख्ये कर्मणि आगूर्य प्रवृत्तौ तु विश्वजितोऽभावोऽननुष्ठानं स्यात्। न तु प्रवृत्ते अप्रवृत्ते च विश्वजिदनुष्ठानं स्यात् ॥ ३१ ॥

## निष्क्रयवादाच्च ॥ ३२ ॥

---

१ कुर्वतः–इति साधु

चकारो हेत्वन्तरसमुच्चयार्थः । "आत्मानं निष्क्रीणीते" इति वाक्यशेषगत निष्क्रयवादान्न अप्रवृत्ते सत्ते विश्वजित् स्यात् न तु प्रवृत्तेऽपि । निष्क्रयवादानुपपत्तेरित्यर्थः ॥ ३२ ॥

प्रयोजनन्त्वनुष्ठानरूपं – कोटिभ्यां व्याख्यातमिति न विलिख्यते ॥ ११ ॥

( वत्साधिकरणम्–१२ )

वत्ससंयोगे व्रतचोदना स्यात् ॥ ३३ ॥ (पू)

दर्शपूर्णमासयोः श्रूयते–"बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायाम्" इति ॥

तत्र संदेहः – किं वत्ससाधनकं व्रतं विधीयते ? उत व्रतस्य कालः ? उत वत्सो व्रताङ्गम् ? इति ॥

बर्हिर्वाक्ये श्रुता व्रतचोदना–व्रतविधिः वत्ससंयोगे सति – वत्सस्य तृतीयानिर्दिष्टस्य साधनत्वे सत्येव अपूर्वार्था स्यात् न कालार्थेत्यर्थः ॥ ३३ ॥

[1]कालो वोत्पन्नसंयोगात् ॥ ३४ ॥ (सि)

वाकारः पक्षव्यावर्तकः "वत्सैरमावास्याया" मित्यत्र काल एव विधीयते, कालार्थं श्रवणमित्यर्थः । कुतः ? उत्पन्नसंयोगात्–उत्पन्नयोः व्रत-[2]वत्सापाकरणयोः संयोगात्–संयोगमात्रार्थत्वात्, न वत्ससाधनकव्रतविधिरित्यर्थः ॥ ३४ ॥

अर्थापरिमाणाच्च ॥ ३५ ॥

चकारो हेत्वन्तरार्थः ॥ [3]वत्सैरमावास्यायामित्यधिगतसाधनभावस्य

---

१ कालो वोत्पन्नसंयोगाद्यथोक्तस्य क. ख.

२ वत्सोपाकरणयोः इति मातृकापाठः

३ वत्सैरमावास्यामित्यधिगत ... इति मातृकापाठः

व्रतयितव्यत्ववत्सस्थानीयत्वाधारत्वादीनां अर्थानां अपरिमाणात् अपरिच्छेदात् अनिर्णयाद्धेतोः प्राप्तयोः कालविधिरित्यर्थः ॥ ३५ ॥

## वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् ॥ ३६ ॥

तुना पक्षो व्यावर्त्यते । वत्सः तदङ्गं स्यात्—तस्मिन् व्रते अङ्गं स्यात् । कुतः? श्रुतिसंयोगात्—वत्सैरिति तृतीयाश्रौतसंबन्धात् । वत्स-साधनकव्रतविधौ श्रुतवत्सापरित्यागे सति श्रुतिसंयोगात् श्रुतिसंबन्धात् । अन्यथा वत्सपदे काललक्षणा स्यात्, सा चान्याय्येत्यर्थः ॥ ३६ ॥

## कालस्तु स्यादचोदना ॥ ३७ ॥

तुः एवकारार्थे । [1]वत्सापाकरणलक्षित काल एव स्यात् । ... ... ... ... ... ... ... ... (वत्सैरभावा) स्यायां व्रतमुपैतीतीदं अचोदना—अविधायकम् । न तद्वाक्यं वत्ससाधनकं व्रतं विदधाति । "पुरा वत्सानपाकर्तोः (दंपती अश्नी) याता" मिति वाक्येनैकवाकयत्वात् कालार्थ एवेत्यर्थः ॥ ३७ ॥

## [2]अवचनाच्च स्वशब्दस्य ॥ ३८ ॥

चकारो हेत्वन्तरार्थः । विशस्य ... ... ... ... ... स्वशब्दस्य—वत्सशब्दस्य, अवचनात् विशसने सति वत्सरूपस्य गतत्वेन तद्वाचकत्वा-भावात्, न वत्सो व्रतयितव्यः किन्तु काललक्षणार्थ इत्यर्थः ॥ ३८ ॥

प्रयोजनन्त्वनुष्ठानरूपं — पक्षयोर्नानाऽऽकारेण स्पष्टम् ॥ १२ ॥

---

१ वत्सोपाकरण इति मातृकायाम्

२ अस्मात्सूत्रात्पूर्वं "अनर्थकश्च कर्मसंयोगे" इत्यधिकं सूत्रमेकं तद्व्याख्या च. क. ख.

( सान्नाय्येऽप्रवृत्तस्यापि व्रतनियमाधिकरणम्–१३ )

[1]कालस्सन्नयत्पक्षे तल्लिङ्गसंयोगात् ॥ ३९ ॥ (पू)

कालसंयोगार्थत्वे समधिगते सत्यपरं संदिह्यते – किं सन्नयत एष कालः ? उत असन्नयतोऽपि ? इति ।

पुरा वत्सानपाकर्तोर्दम्पती भुञ्जीयातामिति वत्सापाकरणपूर्वकालीनं व्रतं, सन्नयत्पक्ष एव स्यात्–सान्नाय्यिन एव स्यात् । कुतो हेतोः ? तल्लिङ्ग-संयोगात्–तस्य सन्नयतो यल्लिङ्गं वत्सापाकरणादि, तेन संयोगात् संबन्धात् । असोमयाजिनोऽसन्नयतो न तादृशः कालः स्यादित्यर्थः । ३९ ॥

[2]कालार्थित्वाद्वोभयोः प्रतीयेत ॥ ४० ॥ (सि)

वाकारः पक्षं व्यावर्तयति । उभयोः सन्नयदसन्नयतोर्यजमानयोः [3]वत्सापाकरणलक्षिते काले व्रतं प्रतीयते । कुतः कालार्थित्वात्–वत्सापाकरणस्य व्रतकालार्थत्वात् । वत्सापाकरणस्य व्रतकालोपलक्षणकत्वं सन्नयदसन्नयतोरविशिष्टम् । अतस्सन्नयत इव असन्नयतोऽपि वत्सापाकरणात्पूर्वकाले व्रतं स्यादित्यर्थः ॥ ४० ॥

प्रयोजनन्त्वनुष्ठानरूपम्–पक्षयोर्नातीव गहनम् ॥ १३ ॥

( प्रस्तरशाखाधिकरणम्–१४ )

प्रस्तरे शाखा श्रयणवत् ॥ ४१ ॥ (पू)

दर्शपूर्णमासयोः श्रूयते–“सहशाखया प्रस्तरं प्रहरति” इति ॥

---

१ “कालश्चेत्सन्नयत्पक्षे ... क ख. ग

२ “कालार्थत्वाद्वोभयोः ... क. ख.

३ वत्सोपाकरण–इत्येव मातृकायाम् ।

तत्र संदिह्यते—किं प्रस्तरस्य शाखा गुणभूता ? —ततोऽङ्गाङ्गिसंबन्धः ? उत प्रस्तरप्रहरणकाले शाखाप्र(हर्तव्येतिकाला,र्थस्संबन्धः ? इति ॥

प्रहरणे श्रुता शाखा, प्रस्तरे गुणा ... अङ्ग ... ... दार्ष्टान्तिके शाखागुणत्वसिद्ध्यर्थं दृष्टान्तमाह— अयणवत् इति । "पयसा मैत्रावरुणं श्रीणाति" इत्यत्र यथा पयसो मैत्रावरुणं प्रति गुणभावः, तृती (या द्विती)याभ्यां पयोमैत्रावरुणयोः गुणप्रधानभावः, तद्वदत्रापि शाखाप्रस्तरयोस्तृतीया द्वितीया-निर्दिष्टयोः गुणप्रधानभावात् शाखा प्रस्तरस्याङ्गमित्यर्थः ॥ ४१ ॥

## कालविधिर्वोभयोर्विद्यमानत्वात् ॥ ४२ ॥ (सि)

वाकार एवकारार्थे। "सह शाखया प्रस्तरं प्रहरति" इत्यत्र शाखा-प्रस्तरयोः कालविधिः स्यात् कालविधायीदं वाक्यं स्यात् । कुतः ? शाखाप्रस्तरयोः विध्यन्तरसिद्धयोः विद्यमानत्वात् । अयमर्थः — ज्ञात-प्रयोजनयोर्वस्तुनोर्भवने सति तत्रोभयोर्न किञ्चिद्विधेयमिति काल एव विधीयत इत्य[1]र्थः ॥ ४२ ॥

## [2]अतत्संस्कारत्वाच्च ॥ ४३ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। ... ... ... ... अतत्संस्कारत्वात्—तत्प्रस्तरस्य संस्कारकत्वाभावात् शाखाया इति । अयं भावः — प्रह्रियमाणे प्रस्तरे तृणभूते, न शाखया काष्ठभूतया किञ्चित्प्रयोजनं प्र-ज्वलनादिरूपं क्रियते, अपि तु, तृणैरेव प्रज्वलनं काष्ठे अधिकं क्रियत इति अनुपकारकत्वाच्च न शाखा प्रस्तरस्योपकारकमङ्गमित्यर्थः ॥ ४३ ॥

## तस्माच्च विप्रयोगे स्यात ॥ ४४ ॥

प्रयोजनसूत्रमिदम् । तस्मात्— अनङ्गत्वेन अनुपकारकत्वाद्धेतोश्च,

---

१ इदं पुनरुक्तम्

२ अतत्संस्कारार्थत्वाच्च—क. ख.

विप्रयोगे – प्रस्तरविप्रयोगे–प्रस्तरविरहिते कर्मणि, शाखा प्रहरणीया स्यात्– इति । अनङ्गत्वे प्रयोजनं किञ्चित् ॥ ४४ ॥

उपवेषश्च पक्षे स्यात् ॥ ४५ ॥

इदमपि प्रयोजनान्तरपरं सूत्रम् । पक्षे – अङ्गत्वपक्षे, पौर्णमा … … … … … वेषः स्यात्, नत्वमावास्यायामेवेति ॥ ४५ ॥

उक्तत्वान्न पृथग्वर्ण्यते ॥ १४ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां षष्ठस्याध्यायस्य चतुर्थः पादः ॥

---

षष्ठाध्याये पञ्चमः पादः

---

( अभ्युदयेष्ट्यधिकरणम्—१ )

अभ्युदये कालापराधादिज्याचोदना स्याद्यथा पञ्चशरावे ॥ १ ॥ (पू)

इदमाम्नायते – "विश्वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधँश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्" इति ॥

तत्र संदिह्यते – किं कालापराधे यागान्तरमिदं चोद्यते? उत तेष्वेव प्रकृतेषु कर्मसु निमित्ते देवतापनयः? इति ॥

दार्शे कर्मणि चतुर्दश्याममावास्याभ्रान्त्या समारब्धे सति निर्वापसमनन्तरं यदि चन्द्रोऽभ्युदियात्, तस्मिन् अभ्युदये सति कालापराधात् निमित्तात् "ये मध्यमाः" इत्यादिषु इज्याचोदना – यागान्तरविधिः – कर्मान्तरविधानं स्यात् । दार्ष्टान्तिके उक्तार्थसिद्ध्यर्थं यथा इति दृष्टान्तोपादानम् ।

यथा पशुकामेष्ट्यां, "यः पशुकामः स्यात्, सोऽमावास्यामिष्ट्वा वत्सानपाकुर्याद्ये स्थविष्ठाः" इत्यारभ्य, "इन्द्राय प्रदाते दधि चरु" इत्यन्ते वाक्ये पञ्चशरावविधौ [1]यथा कर्मान्तरं, तद्वदत्रापि कर्मान्तरं, नतु प्रकृतकर्मसंबद्धे द्रव्ये देवतापनय इत्यर्थः ॥ १ ॥

## अपनयो वा विद्यमानत्वात् ॥ २ ॥ (सि)

वाकारः पक्षव्यावर्तकः । अपनय एव प्राकृतीनां देवतानाम् । प्राकृतीर्देवताः प्रकृतद्रव्येभ्योऽपनीय देवतान्तरसंबन्धविधिरित्यर्थः । कुतः? विद्यमानत्वात् — विध्यन्तरसिद्धानां प्रकृतानां कर्मणां विद्यमानत्वात् । सिद्धेषु कर्मसु देवतान्तरं विधीयत इत्यर्थः ॥ २ ॥

## तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । "ये क्षोदिष्ठास्तानग्नये दाते ..." इत्येवमादीनां शब्दानां तद्रूपत्वात् (देवतापनयरूप) त्वात् — देवतापनयपरत्वाच्च हेतोः न कर्मान्तरं, किन्तु इतरेषामनुवादेन देवतासंबन्धमात्र[2]परत्वादित्यर्थः ॥ ३ ॥

## [3]अभ्यासस्य च दर्शनात् ॥ ४ ॥

"यदि बिभीयादभिमोदेष्यतीति महाराते हवींषि निर्वपेत्, फलीकृतैस्तण्डुलैरुपासीत, अर्धं दधि हविरातञ्चनार्थं निदध्यात् अर्धं न, यद्यभ्युदियात् तेनातञ्च्य प्रचरेत्, यदि न ब्राह्मणान् भोजयेत" इति द्विरुक्तिरूपातञ्चनाभ्यासस्य च दर्शनात् प्रकृतमेव कर्म, न कर्मान्तरम् ॥ ४ ॥

## अपूर्वत्वाद्विधानं स्यात् ॥ ५ ॥

यदुक्तं पञ्चशराववद्विधानमिति, तत्र पञ्चशरावस्य देवतासंबन्धस्य

---

१ इदमधिकम् ।

२ परवमित्यर्थः इति स्यात्

३ आतञ्चनाभ्यासस्य दर्शनाद्—क ख. अत्रापि व्याख्या तथैव.

अपूर्वत्वात्–अप्राप्तत्वात् विधानं–विधिः स्यात्। अमावास्यापरिसमाप्त्यनन्तरं क्रियमाणत्वाच्च कर्मान्तरत्वं युक्तं, नात्र तादृशमित्यर्थः ॥ ५ ॥

[1] पयोदोषात्पञ्चशरावे दृष्टं हीतरत् ॥ ६ ॥

यदुक्तं पञ्चशरावत् कर्मान्तरमिति, न तद्युक्तम्, तत्र हि पञ्चशरावे अदूषितोपादेयद्रव्यदेवतात्मकं यजिरूपं इतरत् दृष्टं कारणं, नात्र तादृश कर्मान्तरत्वद्योतकं कारणम्। कुतः? पयोदोषात्–कालापराधेन पयसो दोषात्–दुष्टत्वात् दूषितत्वेन प्राप्तत्वेन चानुपादेयत्वात् नात्र कर्मान्तरं प्रतीयते ॥ ६ ॥

सान्नाय्येऽपि तथेति चेत् ॥ ७ ॥

कालापराधेन दुष्टत्वात् सान्नाय्येऽपि द्रव्यान्तरविधिः स्यात्, इति पश्यसि चेत् इत्यनुवादसूत्रेण ॥ ७ ॥

न तस्यादुष्टत्वादविशिष्टं हि कारणम् ॥ ८ ॥

नेति पक्षव्यावृत्तिः। यदुक्तं सान्नाय्येऽपि दोषात्तदितरप्राप्तिरिति, तन्न, तस्य–सान्नाय्यस्य पञ्चशरावगतलेधाविभागवद्धिकारित्वेन अदुष्टत्वात्। कालापराधात् दुष्टत्वेऽपि सान्नाय्यस्य प्रायश्चित्तरूपं कारणं दुष्टे–अदुष्टेऽपि साधारणम्। हि रेवकारार्थे। ८ ॥

लक्षणार्था शृतश्रुतिः ॥ ९ ॥

यदुक्तमभ्युदयकाले शृताभावेन श्रपणाभावात्, "शृते चरुं" इति नोपपद्यत इति; तन्न। शृतश्रुतिस्तु लक्षणार्था ... ... रं प्रवृत्तिमात्रोपलक्षणार्था। नतु स्वार्थे तात्पर्यम्, यतः "शृते चरुं" इत्यनुपपन्नं स्यादित्यर्थः। अतो न कर्मान्तरम् ॥ ९ ॥

... ... ... ... ... ... नातीव गहनम् ॥ १ ॥

---

१ पयो दोषात्पञ्चशरावेऽदुष्टं हीतरत्–क. ख.

(उपांशुयाजाधिकरणम्–२)

उपांशुयाजेऽवचनाद्यथाप्रकृति ॥ १० ॥ (पू)

अभ्युदयेष्टिरेवोदाहरणम् ।

किमुपांशुयाजेऽपि प्रकृतदेवतापनयः? उत न? इति सन्देहे—

उपांशुयाजे देवतापनयो न स्यात् । किन्तु यथाप्रकृति–प्रकृतिमनतिक्रम्य–प्रकृतदेवतामनुल्लङ्घ्येत्यर्थः । कुतः? "अग्नये दात्रे" इत्यादिवत् अवचनात्–वचनाभावात् । यावद्वचनं कर्तव्यं, नावाचनिकमिति ॥ १० ॥

अपनयो वा प्रवृत्त्या यथेतरेषाम् ॥ ११ ॥ (सि)

वाकारः पक्षव्यावर्तकः । इतरेषां–प्रकृताग्न्यादीनां प्रवृत्त्या–अकाले तन्त्रप्रवृत्त्या यथा प्रकृतद्रव्यादपनयः, एवमुपांशुयाजे वचनाभावेऽपि, अकाले तन्त्रप्रवृत्त्या अपनयः स्यात् । प्रकृतदेवतापनयनद्वारा देवतान्तरसंबन्धो नास्तीति विशेषः ॥ ११ ॥

प्रयोजनन्त्वनुष्ठानरूपं – पक्षयोस्स्पष्टम् ॥ २ ॥

(निरुप्ताधिकरणम्–३)

निरुप्ते स्यात्तत्संयोगात् ॥ १२ ॥ (पू)

अभ्युदयेष्टिरेवोदाहरणम् ॥

किं निर्वापानन्तरमभ्युदये सति अभ्युदयेष्टिः? आहोस्वित् प्रवृत्तेऽपि? इति सन्देहे—

सैषा अभ्युदयेष्टिः हविषि निरुप्ते स्यात्, नतु प्रवृत्तमात्रे । कुतः? तत्संयोगात् । 'यस्य हविर्निरुप्तं' इति निर्वापसंयोगात् । कर्मप्रवृत्तिमात्रपरत्वे लक्षणा निरुप्तपदस्य स्यात् ॥ १२ ॥

प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ १३ ॥ (सि)

वाकारः पक्षं व्यावर्तयति । अकाले चतुर्दश्यां तन्त्रे प्रवृत्ते सेयमिष्टिः

स्यात् । कुतः? कालापराधरूपस्य निमित्तस्य प्रापणात्—प्राप्तत्वात्। कालापराध एव निमित्तं, नतु अकाले निरुप्तं हविर्निमित्तमित्यर्थः ॥ १३ ॥

लक्षणमात्रमितरत् ॥ १४ ॥

यदुक्तं निरुप्तपदं श्रूयत इति, तत्रोत्तरं—इतरत्—निरुप्तपदं लक्षणमात्रं—धर्मप्रवृत्तिमात्रोपलक्षणार्थं, न तु स्वार्थे तात्पर्यं निरुप्तपदस्य । १४ ॥

तथा चान्यार्थदर्शनम् ॥ १५ ॥

"यद्यगृहीतं हविरभ्युदियात् प्रज्ञातमेव, तदैषा व्रतचर्या—यत्पूर्वेद्युर्दुग्धं दधि, हविरातश्चनं तत्कुर्वन्ति, प्रतिमुञ्चन्ति वत्सान् पुनरपाकुर्वन्ति, ता (नपराह्णे) पर्णशाखयापाकरोति । तद्यथैवादः [१]पौर्णमासं हविः एवमेतत् । [२]अन्येद्युर्वा व्रतचर्यां नोदाशंसेत्, गृहीतं वा हविरभ्युदियात् इतरथा तर्हि कुर्यात् एतानेव तण्डुलान् सुफलीकृतान्" इति वाक्यद्योतितं अन्यार्थदर्शनञ्च—अन्यलिङ्गदर्शनञ्च तथा—धर्मप्रवृत्तिमात्रपरत्वे सत्येवोपपद्यते, नान्यथा । तस्मात् निरुप्ते अनिरुप्ते च प्रायश्चित्तमिति । १५ ॥

प्रयोजनन्त्वनुष्ठानरूपं—नातीव विशदम् ॥ ३ ॥

(अनिरुप्ताधिकरणम्—४)

अनिरुप्तेऽ[३]भ्युदये प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ १६ ॥ (पू)

अकृते निर्वापे यदाभ्युदयो गम्येत, तत्र संदेहः—किं प्राकृतीभ्यो देवताभ्यो निर्वप्तव्यः? उत वैकृतीभ्यः? इति ॥

अनिरुप्ते हविषि चन्द्राभ्युदये सति अतण्डुलभूतान् व्रीहीन्

१ आमावास्यं हविः इति क-पाठस्साधीयान् ।

२ यद्यु व्रतचर्यां ... क.

३ अनिरुप्तेऽभ्युदिते क. ख.

प्राकृतीभ्यः – अग्न्यादिदेवताभ्य एव निर्वपेत्, नान्याभ्यः इत्याश्मरथ्यः आचार्यो मेने। कुतो हेतोः? तण्डुलभूतेषु द्रव्येषु प्राकृतदेवतानां अपनयात्। अयमर्थः–तण्डुलेषु विभागश्रवणात् व्रीहिषु न विभागः स्यादिति ॥ १६ ॥

[1]वृद्धभागभ्यस्त्वालेखनस्तत्कारितत्वात् ॥ १७ ॥ (सि)

तुः एवकारार्थे। वृद्धभागभ्यः – क्षोदिष्ठादिद्रव्यकं कर्म वृद्धं, तद्भागभ्य एव देवताभ्योऽतण्डुलभूता अपि निर्वप्तव्याः, न प्राकृतीभ्यः, इति आलेखन आचार्यो मेने। कुतः? तत्कारितत्वात् – प्रकृतदेवतापनयस्य, तया अकाले तन्त्रप्रवृत्त्या कारितत्वात्। अयमर्थः – अकाले तन्त्रप्रवृत्तेर्निमित्तत्वात्, तस्याश्चातण्डुलेष्वप्यविशेषादागन्तुभ्यो देवताभ्यो निर्वाप इति ॥ १७ ॥

प्रयोजनन्त्वनुष्ठानरूपं – कोटिभ्यां प्रद्योतितम् ॥ ४ ॥

(विनिरुप्ताधिकरणम्–५)

विनिरुप्ते न [2]चतुर्मुष्टीनामपनयस्तद्गुणत्वात् ॥ १८ ॥ (पू)

निर्वापे प्रारब्धे असमाप्ते च सति संशयः – किं निरुप्तशेषं प्राकृतीभ्यो निर्वप्तव्यं? उत वैकृतीभ्यः? उत तूष्णीं? इति ॥

तत्र अभ्युदयेष्टयां विनिरुप्ते – चतुर्मुष्टिषु द्विमुष्टिनिर्वापे सति अभ्युदये न प्रकृतदेवतापनयः। कुतः? तद्गुणत्वात् – तद्द्रव्यदेवतानां निर्वापगुणत्वात्। निर्वापस्य प्राधान्यादनुष्ठेयन्तदित्यर्थः। एकपदार्थत्वाच्चतुर्मुष्टीनां नावयवेषु देवतान्तरसंबन्ध इत्यर्थः ॥ १८ ॥

[3]अप्रकृतेन हि संयोगस्तत्स्थानीयत्वात् ॥ १९ ॥

---

१ व्यूर्ध्वभागभ्यस्त्वालेखनस्तत्कारित्वाद्देवतापनयस्य, क. ख.

२ विनिरुप्ते न मुष्टी ... क. ख.

३ अप्राकृतेन हि ... क. ख.

निरुप्तशेषस्य द्रव्यस्य द्विमुष्टिरूपस्य अप्रकृतेन–अनधिकृतेन देवतान्तरेण संयोगः स्यात् । हिरेवकारार्थे । कुतः? अप्राकृतीनां देवतानां तत्स्थानीयत्वात्– निरुप्तशेषस्थानीयत्वात् । स्थानापत्त्या प्रमाणेनाधिकृतानामेव शेषो भागधेयमिति द्विविधदेवतासंबन्धश्चतुर्मुष्टिष्वित्यर्थः ॥ १९ ॥

अभावाच्चेतरस्य स्यात् ॥ २० ॥ (सि)

इतरस्यार्थस्य द्विमुष्टिरूपस्य अभावात्–प्रकृतागन्तुकद्विदेवतासंबन्धाभावात्, तूष्णीमेव निर्वापस्स्यात् । न तत्र प्रकृतदेवतासंबन्धः, अकालप्रवृत्तत्वात् । नान्याभिश्च संबन्धः, मुष्टीनामेकपदार्थत्वात् नावयवेन देवतान्तरसंबन्ध इत्यर्थः ॥ २० ॥

प्रयोजनन्त्वनुष्ठानरूपं – स्पष्टम् ॥ ५ ॥

( सान्नाय्यसंयोगाधिकरणम्–६ )

सान्नाय्यसंयोगान्नासन्नयतः स्यात् ॥ २१ ॥ (पू)

अभ्युदयेष्टौ श्रुतम्–"दधनि चरुं, शृते चरुं" इति ॥

तत्र संदिह्यते–किं सन्नयतोऽभ्युदये प्रायश्चित्तं? उत असन्नयतोऽपि? इति ।

इयमभ्युदयेष्टिः असन्नयतः–असोमयाजिनः न स्यात् । कुतः। शृते चरुं–दधनि चरुं–इति सान्नाय्यसंयोगात्–सान्नाय्यसंबन्धात् ॥ २१ ॥

औषधसंयोगाद्वोभयोः ॥ २२ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः । उभयोः–असन्नयत्सन्नयतोः स्यात्, न सन्नयत एव । कुतः? औषधसंयोगात्–"ये मध्यमाः" इत्यादिना तण्डुलरूपौषधसंयोगात् । औषधसंयोगश्च सन्नयदसन्नयतोरविशिष्टः । तस्मादुभयोरपीयमिष्टिः स्यात् ॥ २२ ॥

वैगुण्यान्नेति चेत् ॥ २३ ॥

असन्नयतः (पयः) संयोगाभावात् "शृते चरुं" इति श्रुतवैगुण्यात् तस्यानधिकारः इति पश्यसि चेत् इति वाद्युक्तानुवादः ॥ २३ ॥

नातत्संस्कारत्वात् ॥ २४ ॥

त्वदुक्तं न स्यात्। कुतः? दध्नः शृतस्य वा अतत्संस्कारत्वात्—चरुसंस्कारार्थत्वाभावात्। देवतयैव शृतादि संबध्यते स्थविष्ठादिवत्, न चरुणा, यतस्तत्संस्कारत्वेन चरुणा नियतसंबन्धादसन्नयतो न स्यादिति ॥ २४ ॥

प्रयोजनन्त्वनुष्ठानरूपं—पक्षयोः स्पष्टम् ॥ ६ ॥

(साम्युत्थानाधिकरणम्—७)

साम्युत्थाने विश्वजित्क्रीते विभागसंयोगात् ॥ २५ ॥ (पू)

"यदि सत्राय दीक्षितानां अथ साम्युत्तिष्ठेरन्, सोममवभज्य विश्वजितातिरात्रेण यजेरन्" इति [1]श्रूयते ॥

तत्र संदिह्यते—किं क्रीतराजस्योत्थाने विश्वजित्? उत प्रवृत्तमात्रस्य? इति।

क्रीते—क्रीतसोमके सत्रे समारब्धे, यस्यकस्यचिद्यजमानस्य साम्युत्थाने—सत्रे अर्धं कृत्वा उत्थाने प्राप्ते, तत्प्रायश्चित्तार्थं विश्वजित् स्यात् नाक्रीतसोमके सत्रे उत्थाने सति विश्वजित्। कुतः? विभागसंयोगात्—"सोममवभज्य" इति सोमविभागसंयोगात्—सोमविभागसंबन्धात्। सोमे सत्येव विभाग उपपद्यते नान्यथेति तत्रैव प्रायश्चित्तम्। २५ ॥

[2]प्रवृत्ते प्रापणान्निमित्तस्य ॥ २६ ॥ (सि)

वाकारः पक्षव्यावर्तकः। प्रवृत्ते—प्रवृत्तमात्रे सत्रे साम्युत्थाने प्रायश्चित्तम्। कुतः? साम्युत्थानरूपस्य निमित्तस्य अक्रीतसोमकेऽपि सत्रे प्रापणात्—प्राप्तत्वात् ॥ २६ ॥

---

१ इदं पदं मातृकायां नास्ति।

२ प्रवृत्ते वा प्रापणान्निमित्तस्य, क. ख. अत्रापि व्याख्यानं तथैव।

## आदेशार्थेतरा श्रुतिः ॥ २७ ॥

"सोममवभज्य" इत्येवंरूपा इतरा श्रुतिः आदेशार्था — उपलक्षणार्था – इतरसकलद्रव्य विभागार्था। तस्मान्न स्वार्थे तस्यास्तात्पर्यम्। अतः क्रीते च अक्रीते च सोमे विश्वजिदिति ॥ २७ ॥

प्रयोजनन्त्वनुष्ठानरूपं — विशदम् ॥ ७ ॥

(दीक्षापरिमाणाधिकरणम्–८)

## [1]दीक्षापरिमाणे याथाकाम्यमविशेषात् ॥ २८ ॥ (पू)

ज्योतिःष्टोमे दीक्षापरिमाणं श्रुतम् – "एका दीक्षा, तिस्रो दीक्षाः, द्वादश दीक्षाः" इति।

तत्र संदेहः — किं द्वादशाहादिषु दीक्षापरिमाणं ज्योतिष्टोमादनियतं प्राप्नोति? उत द्वादश दीक्षा एव द्वादशाहे? इति ॥

दीक्षापरिमाणे – ज्योतिष्टोमिके प्राकरणिके, याथाकाम्यं–यथाकाममनुष्ठानं स्यात्। कुतः? अविशेषात् – एकादिदीक्षाणां प्रकरणसंबन्धाविशेषात्, प्रकरणसंबद्धानि तुल्यबलानि च (पठ्य)न्त इत्यर्थः ॥ २८ ॥

## [2]द्वादशाहश्च लिङ्गात्स्यात् ॥ २९ ॥ (सि)

चस्त्वर्थे। द्वादशाह एव दीक्षाविशेष इह स्यात्। कुतः? लिङ्गात् द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत" इति द्वादशत्वलिङ्गदर्शनात् द्वादशाहदीक्षापरिमाणमेव। अन्यानि तु विकृतिषु निविशन्ते ॥ २९ ॥

प्रयोजनन्त्वनुष्ठानरूपं–स्पष्टम् ॥ ८ ॥

---

१ दीक्षापरिमाणे यथाकाम्यविशेषात् क. ख.

२ द्वादशाहस्तु लिङ्गात्स्यात क. ख.

(माध्याः पौर्णमास्याः पुरस्तात् चतुरहे गावामयनिकदीक्षाविधानाधिकरणम्–९)

## पौर्णमास्यामनियमोऽविशेषात् ॥ ३० ॥ (पू)

गवामयने श्रूयते – ' पौर्णमास्याः पुरस्ताच्चतुरहे दीक्षेरन् " इति।

तत्र संदिह्यते – किं यस्याः कस्याश्चित्पौर्णमास्याः पुरस्ताच्चतुरहे दीक्षा? उत अस्ति नियता पौर्णमासी? इति।

चतुरहवाक्ये श्रुतायां पौर्णमास्यां अनियमः स्यात् – चैत्राद्यनियमः स्यात्। कुतः? अविशेषात् – पौर्णमासीशब्दस्याविशेषितस्वरूपस्य सकल पौर्णमासीसाधारण्यादित्यर्थः ॥ ३० ॥

## आनन्तर्यात्तु चैत्री स्यात् ॥ ३१ ॥

तुना पक्षो व्यावर्तते। चैत्री पौर्णमासी स्यात्, नतु या काचिदनियता। कुतः? आनन्तर्यात् – पौर्णमासीमुपक्रम्य अनन्तरं वाक्यशेषे चैत्र्या [1]अनन्तरं सङ्कीर्तनात् संदिग्धन्यायेन च सैव ग्राह्या ॥ ३१ ॥

## माघी वैकाष्टकाश्रुतेः ॥ ३२ ॥ (सि)

वाकार एवकारार्थे। माघ्येव पौर्णमासी स्यात्। कुतः? एकाष्टका-श्रुतेः – "तेषामेकाष्टकायां क्रयस्संपद्यते" इति क्रये एकाष्टकाश्रुतेः–एकाष्टका-श्रवणात्, माघकृष्णाष्टम्येवैकाष्टका। तस्मान्माघी पौर्णमासीति। ३२॥

## [2]अन्यापीति चेत् ॥ ३३ ॥

"द्वादशैकाष्टकाः" इति प्रसिद्धेर्माघकृष्णाष्टमीव्यतिरेकेण अन्याऽप्यष्टमी चैत्रकृष्णाद्या एकाष्टका भवति, न माघ्येव इति पश्यसि चेत् इति वाद्यनुवादः ॥ ३३ ॥

## न भक्तित्वादेषा हि लोके ॥ ३४ ॥

---

१ इदं पुनरुक्तम् २ अन्या अपीति चेत्-क. ख.

त्वदुक्तं न। कुतः? अन्यासु माघकृष्णाष्टमीव्यतिरिक्तास्वष्टमीषु कृष्णगामिनीषु एकाष्टकाशब्दस्य भक्तित्वात्—भक्त्युपनीतत्वात्—अमुख्यत्वादित्यर्थः। हिर्हेतौ। यस्मात्कारणात् एषैव—माघकृष्णाष्टमी लोके एकाष्टकेति प्रसिद्धा, याज्ञिकसमाख्यायाश्च तादृशत्वादिह नान्येत्यर्थः ॥ ३४ ॥

## दीक्षापराधे चानुग्रहात् ॥ ३५ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। दीक्षापराधे—"आर्तं वा एते संवत्सरस्याभिदीक्षन्ते [1]य एकाष्टकायां दीक्षन्ते" इति दीक्षापराधे—दीक्षानिषेधे—दीक्षानिषेधपरे वाक्ये, "आर्त"मित्यनेन माघकृष्णाष्टम्याः क्रये अनुग्रहाच्च सैवैकाष्टका, नान्येत्यर्थः ॥ ३५ ॥

## उत्थाने चानुप्ररोहात् ॥ ३६ ॥

चकारस्समुच्चयार्थः। उत्थाने—सत्रे दीक्षार्थं यजमानानामुत्थाने सति प्रवृत्तौ सत्यां, "तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति" इति ओषधिवनस्पतीनां अनुप्ररोहात्—अनुप्ररोहदर्शनात्, ओषधिवनस्पतीनां गलितपल्लवानामपि पुनः प्ररोहः प्रागुक्तकाल एव, न तु चैत्र्यादिषु। अतश्च हेतोः सैवैकाष्टका-नान्या ॥ ३६ ॥

## [2]तस्याञ्च सर्वलिङ्गानि ॥ ३७ ॥

"आर्तं वा एते संवत्सरस्याभिदीक्षन्ते [3]यएकाष्टकायां दीक्षन्ते" इति, "व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते य एकाष्टकायां दीक्षन्ते" इति च, "[4]अपो नाभिनन्दन्तोऽवभृथमभ्युपेयुः" इति च वाक्येषु, शैत्यार्त्ययनपरिवृत्ति-(जलान)भिनन्दनादीनि सर्वलिङ्गानि च तस्यां—माघ्यामेव नान्यस्याम्।

---

१ यदेकाष्टकायां ... इति मातृकागतः पाठोऽनुपपन्नत्वादुपेक्षितः।

२ अस्याञ्च सर्वलिङ्गानि क. ख. ३ ... यदेकाष्टकायां दीक्षन्ते" इति,

४ "तस्यापोऽभिनन्दन्तोऽवभृथमुपेयुः" इति च मातृकापाठोऽनुपपन्नः।

यानि तु चैत्रीपराणि वाक्यानि, तानि माघीस्तुतिपरत्वेन व्याख्येयानि-चैत्र्याश्च ईदृशं माहात्म्यं माघ्यां किमु वक्तव्यम्? इत्येवंरूपमुन्नेयम् ॥ ३७ ॥

प्रयोजनन्त्वनुष्ठानरूपमनतिगहनवर्णनम् ॥ ९ ॥

( कालोत्कर्षाधिकरणम्—१० )

दीक्षाकालस्य शिष्टत्वादतिक्रमे [1]नियतकालानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३८ ॥ (पू)

ज्योतिष्टोमे श्रुतम्—"दीक्षितो न ददाति न जुहोति न पचति" इति। तथा "तिस्रो दीक्षाः" इत्येवमादि च ॥

तत्र संदिह्यते—किं दैवात् मानुषाद्वा प्रतिबन्धात् दीक्षाकालोत्कर्षे दानहोमपाकानामप्युत्कर्षस्स्यात्? उत न? इति ॥

"तिस्रो दीक्षाः"—इत्येवमादिरूपस्य दीक्षाकालस्य शिष्टत्वात्—विहितत्वात्, तादृशस्य विहितदीक्षाकालस्य दैवमानुषादिप्रतिबन्धात् अतिक्रमे—उल्लङ्घने—उत्कर्षे सति, "यावज्जीवमग्निहोत्रं जुहोति" "सायं जुहोति" 'प्रातर्जुहोति' इत्येवमादिभिर्वाक्यैः नियतकालानामग्निहोत्रादीनामतिक्रान्ता...नुष्ठाननिषिद्धकालानां अनुत्कर्षः। कुतः? प्राप्तकालत्वात्—दीक्षाकालोत्तरं यावज्जीवादिवाक्यैः प्राप्तकालत्वात् ॥

दीक्षाकालनिषिद्धानां तदूर्ध्वं स्यादनुष्ठितिः।
दीक्षितो न जुहोतीति निषेधो न प्रवर्तते। ३८ ॥

उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम् ॥ ३९ ॥ (सि)

वाकार एवकारार्थे। होमदानपाकादीनां दीक्षाया उत्कर्षे उत्कर्षः, दीक्षितत्वात्—दीक्षोत्कर्षकालेऽपि दीक्षितत्वात्। कुतो हेतोः? हि-

---

१ ... नियताना ... क. ख.

रवधारणार्थे । "प्रागवभृथाद्दीक्षितः" इति दीक्षितत्वकारणं, उत्कर्षे-अनुत्कर्षेऽप्यविशिष्टम्। तस्माद्धोमादीनामुत्कर्षः ॥ ३९ ॥

प्रयोजनन्त्वनुष्ठानरूपं-पक्षयोः स्पष्टम् ॥ १० ॥

(प्रतिहोमाधिकरणम्-११)

## तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ४० ॥ (सि)

तत्र उत्कृष्यमाणे ज्योतिष्टोमे, अकृतेषु होमेषु, किं परिसंख्यातीतहोमाः कर्तव्याः? उत न? इति संदेहे—

अवभृथानन्तरं पूर्वमतिक्रान्तानां प्रतिहोमः—प्रतिसंख्याय होमः न विद्यते। न कर्तव्या अतीतहोमा अवभृथानन्तरम् । तत्र दृष्टान्तग्रहणं—यथा इति। यथा पूर्वेषां—दीक्षाकालमध्यवर्तिनामनुनुष्ठेयत्वं, एवमेतेषामपि दीक्षोत्कर्षेऽप्यननुष्ठेयत्वान्न पुनःकरणम्। कर्तव्याकरणे च पुनः प्रतिसंख्यायानुष्ठानं, नैते प्रागवभृथादनुष्ठेयाः, [1]यतः पुनरनुष्ठानं स्यादित्यर्थः ॥ ४० ॥

## कालप्राधान्याच्च ॥ ४१ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। अतिपन्ना न प्रतिहोतव्याः। कुतः? कालप्राधान्यात्—"सायं जुहोति, प्रातर्जुहोति" इति विहितकालस्य निमित्तत्वेन प्राधान्यात् । अयमर्थः—अतिपन्नानां प्रधानभूतसायमादिकालप्रहाणात्, तत्प्रहाणेनानुष्ठाने विगुणत्वात्, न प्रतिहोमा अकाले कर्तव्याः। अनारब्धानामननुष्ठेयत्वादित्यर्थः ॥ ४१ ॥

प्रयोजनन्त्वनुष्ठानरूपं—पक्षयोः स्पष्टम् ॥ ११ ॥

(प्रतिषेधाधिकरणम्-१२)

## [2]प्रतिषेधाच्चोर्ध्वमवभृथादेष्टेः ॥ ४२ ॥ (सि)

---

१ अत्र मातृकायां पुनरुक्तिः—यतः पुनरनुष्ठानं—इति वाक्यस्य।

२ प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः क.

अवभृथेष्ट्यनन्तरं उदवसानीयेष्टेः प्राक्तनानां होमानां दैवादतिपाते सति किं प्रतिहोमाः कर्तव्याः? उत न कर्तव्याः? इति संदेहे —

यदि बलवत्प्रतिबन्धादुदवसानीयोत्कृष्येत, तदा अवभृथादूर्ध्वं एष्टेः—उदवसानीयेष्टेः प्राक् अतिपन्ना अपि ... ... ... ... न होतव्याः। कुतः? प्रतिषेधात्—"एतया पुनराधेयसंमितयोदवसानीययेष्ट्येष्ट्वा अग्निहोत्रं होतव्यम्" इत्युदवसानीयायाः पूर्वं होमप्रतिषेधोपलम्भाच्च हेतोरवभृथादूर्ध्वमप्यतिपन्नानां न प्रतिहोमाः कर्तव्या इति ॥ ४२ ॥

प्रयोजनन्त्वनुष्ठानरूपं—स्पष्टमेव ॥ १२ ॥

( प्रतिहोमक्रमाधिकरणम्—१३ )

[1]प्रतिहोमाश्चेत्सायमग्निहोत्रप्रभृति हूयेरन् ॥ ४३ ॥ ( सि )

प्रतिहोमेष्वेव संदेहः—यदा कर्तव्याः प्रतिहोमाः, तदा—किं प्रातरग्निहोत्रप्रभृति ... ... ...? उत सायमग्निहोत्रप्रभृति? इति ॥

यद्यनुबन्धात्कृत्वाचिन्ता

यदि हूयेरन् सायमग्निहोत्रप्रभृति—सायमग्निहोत्रमारभ्य हूयेरन्, न त्वनियमेन—सायमादि वा—प्रातरादि वा—इति। अतोऽतिपन्नानुपूर्व्येणैव होतव्यमित्यर्थः ॥ ४३ ॥

प्रयोजनन्त्वनुष्ठानं अनियमनियमाभ्यां प्रद्योतितम् ॥ १३ ॥

( षोडशिनि प्रातर्होमाधिकरणम्—१४ )

प्रातस्तु षोडशिनि ॥ ४४ ॥ ( सि )

---

१ प्रतिहोमश्चेत्सायमग्निहोत्रप्रभृतीनि हूयेरन्. क. ख.

षोडशिनि सोमे, अतिपन्नेषु होमेषु, किं सायमग्निहोत्रप्रभृति होतव्यम्? उत प्रातरग्निहोत्रप्रभृति? इति संदेहे —

तुरपत्रादर्थः। षोडशिनि — संस्थामध्यपातिनि सोमविशेषे, प्रातः — प्रातरतिपन्नत्वात् प्रातरादिरेव प्रतिहोमः, न सायमादिरिति। तुरेवार्थे ॥ ४४ ॥

प्रयोजनन्त्वनुष्ठानरूपं स्पष्टमिति न विलिख्यते ॥ १४ ॥

( प्रायश्चित्ताधिकरणम् — १५ )

## प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४५ ॥ (पू)

दर्शपूर्णमासयोः श्रुतम् — "भिन्ने जुहोति, स्कन्ने जुहोति" इति ॥

किमयं भेदनादिनिमित्तको होमः दार्शपूर्णमासिकभेदनादावेव भवति? उत यत्र भेदनादि क्रत्वन्तरेषु, तत्रापि? इति संदेहे —

अधिकारे — दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत — इत्यधिकारिवाक्ये — दर्शपूर्णमासप्रकरण इत्यर्थः। तत्र "भिन्ने जुहोति — स्कन्ने जुहोति" इति यत् प्रायश्चित्तं समाम्नातं, तत्प्रायश्चित्तं, वाक्याद्दुर्बलं प्रकरणमनपेक्ष्यैव, सर्वत्र — सर्वयज्ञेषु स्यात्। कुतो हेतोः? दोषसामान्यात् — (निमित्त)भूत भेदनादि-दोषस्य सर्वयज्ञसमानत्वात्। न तु दर्शपूर्णमासयोरेव स्यादित्यर्थः ॥ ४५ ॥

## प्रकरणे वा शब्दहेतुत्वात् ॥ ४६ ॥ (सि)

वाकारः पक्षव्यावर्तकः। प्रकरणे - दर्शपूर्णमासप्रकरण एव भेदनादि-होमानामन्वयः। कुतः? शब्दहेतुत्वात् — "दर्शपूर्णमासाभ्यां यजेत" इति प्रकरणियागशब्दस्य; भेदनादिहोमस्य नियतात्मसंबन्धे हेतुत्वात्। अयमर्थः — प्रकरणसंबन्धे भेदनादिहोमानामकल्प्यफलत्वात्, कल्प्यफलाद्वाक्यात्प्रकरणं दुर्बलं तत्फलफलकत्वबोधकं [1]प्रबलमित्यर्थः ॥ ४६ ॥

---

१ अत्र पुनरुक्तिः

## [1]अतद्विकारत्वाच्च ॥ ४७ ॥

चकारो हेत्वन्तरार्थः । भेदनादिहोमानां न[2] प्रकरणिदर्शपूर्णमासयोरेव संबन्धः । कुतः? अग्निहोत्रज्योतिष्टोमादीनां अतद्विकारत्वात् – अदर्शपूर्णमासविकारत्वात् । यतस्तद्विकारत्वेन दर्शपूर्णमास प्रकृतिगतभेदनादिहोमानां प्राप्तिस्स्यात् । अतश्च न[3] प्रकृतदर्शपूर्णमाससंबन्धो भेदनादिहोमानामिति ॥ ४७ ॥

प्रयोजनन्त्वनुष्ठानरूपं— [4]तद्विकृतिष्वेव पूर्वपक्षे, सिद्धान्ते त्वतद्विकारेष्वपीति साधारण्यम् ॥ १५ ॥

(व्यापन्नाधिकरणम्—१६)

## व्यापन्नस्याप्सुगतौ यदभोज्यमार्याणां [5]तत्प्रतीयते ॥४८॥ (सि)

"व्यापन्नमप्सु प्रहरती"ति श्रुतम् । तत्र सन्देहः— किं व्यापन्नपदमनिर्णीतार्थम्? उत निर्णीतार्थम्? इति ॥

व्यापन्नस्य द्रव्यस्य अप्सु गतौ अभिहितायां, किं व्यापन्नम्? इति विचारे, आर्याणां–शिष्टानां यदभोज्यं–केशकीटावपन्नं, तदेव व्यापन्नशब्देन प्रतीयते, न त्वनिर्णीतं यत्किञ्चित् ॥ ४८ ॥

प्रयोजनन्त्वनुष्ठानरूपं - पूर्वपक्षे, विना आपन्नं–व्यापन्नं, इत्यादिरूपेणावयवार्थेन सकलद्रव्याणामप्सु प्रक्षेपस्स्यात, सिद्धान्ते तु शिष्टसमाख्यया [6]कीटाद्यवपन्नमेव इति ॥ १६ ॥

---

१ अतद्विकारश्च क. ख.

२ इदं त्यक्तव्यम्

३ इदमपि—

४ विपरीतमिदं प्रयोजनवर्णनम्

५ ... तत्प्रतीयेत क. ख.

६ कीटाद्यवपन्नस्यैव इति साधु ।

(विभागाधिकरणम्-१७)

## विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ ४९ ॥ (पू)

ज्योतिष्टोमे प्रस्तोत्रुद्गात्रोर्व्यपच्छेदे, उद्गातृप्रतिहर्त्रोर्व्यपच्छेदे वा प्रायश्चित्तं नास्ति ? अस्ति वा ? इति संदेहे—

बहिष्पवमानार्थं प्राचीं दिशं प्रति कच्छं संगृह्यानुपूर्व्योपसर्पतां प्रस्तोत्रुद्गातृप्रतिहर्तॄणां मध्ये, प्रस्तोत्रुद्गात्रोः उद्गातृप्रतिहर्त्रोर्वा यौगपद्ये – युगपदपच्छेदे – अपच्छेदयौगपद्ये – उभयोर्युगपदपच्छेदे सति, अदक्षिणत्वादिव्यवस्थितमन्यतरविषयकं प्रायश्चित्तं न विद्यते – न स्यात् । कुतः? विभागश्रुतेः – विभागे प्रायश्चित्तश्रुतेः – प्रायश्चित्तश्रवणात् । अयमर्थः—विभागस्योभयनिरूप्यत्वेनान्यतरनिरूप्यत्वाभावात्, अन्यतरापच्छेदनिमित्तं प्रायश्चित्तं युगपदपच्छेदे न स्यादिति ॥

## स्याद्वा प्राप्तिनिमित्तत्वात्कालमात्रमेकम् ॥ ५० ॥ (सि)

वाकारः पक्षव्यावर्तकः । युगपदपच्छेदेऽपि प्रायश्चित्तं स्यात् । कुतः? प्राप्तिनिमित्तत्वात् – विभागप्राप्तेर्निमित्तत्वात् । अथवा – प्राप्तिनिमित्तत्वात् – अदाक्षिण्यादिप्रायश्चित्तस्य प्राप्तविभागरूपनिमित्तत्वात् । तदेवोपपादयति-कालमात्रम् – काल एवैको नत्वपच्छेदैक्यमिति विभागनिमित्त प्रायश्चित्तस्य अपच्छेदकालैक्येऽपि, अपच्छेदकर्त्रैक्याभावात् विभागमात्रनिमित्तकं प्रायश्चित्तमुभयापच्छेदे अन्यतरापच्छेदे च स्यादित्यर्थः ॥ ५० ॥

प्रयोजनन्त्वनुष्ठानरूपं—अन्यतरापच्छेद प्रायश्चित्ताकरण—प्रायश्चित्तकरणाभ्यां व्याख्यातम् ॥ १७ ॥

(प्रयोगान्तराधिकरणम्–१८)

## [1]तत्र प्रतिषेधाद्विकल्पस्स्यात् ॥ ५१ ॥ (सि)

यद्युद्गातृप्रतिहर्त्रोर्युगपदपच्छेदः तत्र संदिह्यते – किमदाक्षिण्यं सर्वस्वं वा विकल्प्येत ? उत अदाक्षिण्यसर्वस्वयोस्समुच्चयः ? इति ।

---

१ तत्र विप्रतिषेधात् ... क. ख.

तत्र – उद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे, अदक्षिणत्व सर्वस्वदक्षिणयोः कर्तृविशेषापच्छेदनिमित्तकयोः प्रायश्चित्तयोः विकल्पस्स्यात् — विकल्पेनानुष्ठानं स्यात्, नतु समुच्चय उभयोः। कुतः? प्रतिषेधात् – अदक्षिणत्व सर्वस्वदक्षिणत्वयोरेकस्मिन् प्रयोगे सहानुप्रवेशविरोधात न समुच्चय इति ॥ ५१ ॥

[1] प्रयोगान्तरेण वोभयोरनुग्रहः स्यात् ॥ ५२ ॥

वाकारः पक्षव्यावर्तकः। उभयोः – अदक्षिणत्वसर्वस्वदक्षिणयोः, एकस्मिन्नेव कर्मणि अनुग्रहः स्यात्। केन हेतुना? इत्यत्र तदुत्तरम् – प्रयोगान्तरेण 'तेन पुनर्यजेत' इति प्रयोगान्तरविधानेनेत्यर्थः। अतो न विकल्पः, किन्तु समुच्चय एव ॥ ५२ ॥

[2] नैवैकसंयोगात् ॥ ५३ ॥

नव इति पूर्वपक्षव्य वृत्तिः। समुच्चयो नैव स्यात्प्रायश्चित्तयोः। कुतः? एकसंयोगात् – एकेन अदाक्षिण्येन सर्वस्वेन वा संयोगात। अयमर्थः – अन्यतरेण प्रायश्चित्तेन समन्वितो यागः, कृतार्थस्सन् अवैगुण्यादेव न समुच्चयमपेक्षत इति। तस्माद्विकल्पः ॥ ५३ ॥

प्रयोजनन्त्वनुष्ठानरूपं – पक्षयोः स्पष्टमेवेति न विलिख्यते ॥ १८ ॥

(पौर्वापर्याधिकरणम्–१९)

पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५४ ॥ (सि)

यत्रानुपूर्व्या भवत्यपच्छेदः, तत्र किं पूर्वापच्छेदनिमित्तं प्रायश्चित्तम्? उतोत्तरापच्छेदनिमित्तम्? इति संदेहे सति —

प्रतिहर्त्रुद्गात्रपच्छेदयोः पौर्वापर्ये – अयुगपदुत्पत्तौ सत्यां, पूर्वदौर्बल्यं –

---

१ प्रयोगान्तरे वोभयोरनुग्रहस्स्यात् क. ख.

२ न चैकसंयोगात् क. ख.

पूर्वापच्छेदस्य दौर्बल्यं, अप्रयोजकं पूर्वं नानुष्ठेयमित्यर्थः। तत्र दृष्टान्तः—प्रकृतिवत् इति। यथा प्रकृतिगताः प्रागुत्पन्ना आस्तरणादिसाधनदर्भादयो विकृतिगतेन पाश्चात्येन शरमयादिना पश्चादुत्पन्नेनापि बाध्यन्ते, तद्वदत्रापि पश्चात्तननिमित्तानुसारेण नैमित्तिकमनुष्ठेयम्, न पूर्वनिमित्तानुसारेणेत्यर्थः ॥५४॥

प्रयोजनन्त्वनुष्ठानरूपं—विशदप्रायम् ॥ १९ ॥

(उद्गात्रपच्छेदाधिकरणम्—२०)

## यद्युद्गाता जघन्यस्स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥ ५५ ॥ (सि)

यदा प्रतिहर्तुः पूर्वमपच्छेदः तत उद्गातुः, तत्र अदक्षिणेनेष्ट्वा पुनर्यष्टव्यम्।

तत्र सन्दिह्यते—किं द्वादशशतं दातव्यम्? उत सर्वस्वम्? इति।

बहिष्पवमानापसर्पणे उद्गाता यदि जघन्यस्स्यात्—प्रतिहर्तुरनन्तरमपच्छिन्नस्स्यात, तदपच्छेदनिमित्तकपुनर्यज्ञे प्रायश्चित्तरूपे सर्ववेदसं दद्यात्, न तु द्वादशशतदक्षिणाम्। तत्र दृष्टान्तः—यथेति। इतरस्मिन्—प्रतिहर्त्रपच्छेदे सति यथा सर्वस्वं दीयते, तथैवात्रापि सर्ववेदसमेव दीयते, पुनः प्रयोगे सर्वस्वे दत्ते उभयोरप्यनुग्रहः प्रयोगभेदेन स्यात्। अतो नात्र विरोध उभयोरिति ॥ ५५ ॥

प्रयोजनन्त्वनुष्ठानरूपं स्पष्टम् ॥ २० ॥

( अहर्गणाधिकरणम्—२१ )

## अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात ॥५६॥ (सि)

अहर्गणे द्वादशाहादौ यदि कस्मिंश्चिदहन्युद्गातुरपच्छेदः तत्र संदिह्यते—किं कृत्स्नावृत्तिः? उत तदहर्मात्रावृत्तिः? इति।

अहर्गणे यस्मिन्नहनि उद्गातुरपच्छेदः, तदेवाहरावर्त्येत, न त्वनेक-

कर्मात्मकमखण्डं कर्मावर्त्यते । कुतः? कर्मपृथक्त्वात् — अहर्गणमध्यपातिनामङ्गभूतानां ज्योतिष्टोमादिरूपाणां कर्मणां पृथक्त्वात्। कर्मैक्ये ह्यखण्डकर्मावृत्तिः? कर्मपृथक्त्वे तु न सत्रावृत्तिरित्यर्थः ॥ ५६ ॥

प्रयोजनन्त्वनुष्ठानरूपं — कृत्स्नैकदेशावृत्तिभ्यां प्रद्योतितम् । २१ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां षष्ठस्याध्यायस्य पञ्चमः पादः ॥

---

## षष्ठस्याध्यायस्य षष्ठः पादः

---

(सन्निपाताधिकरणम् — १)

### सन्निपाते वैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥ (सि)

"सप्तदशावरास्सत्रमुपासीरन्"

"विद्वांसस्सत्रमुपासीरन्" इति ।

तत्र संदेहः — किं समानकल्पानां भिन्नकल्पानाञ्च सहाधिकारः? उत समानकल्पानामेव? इति ।

सप्तदशावरा इत्यत्र राजन्यात्रिवध्र्यश्ववसिष्ठवैश्यशुनकानां तदितरेषाञ्च सन्निपाते — सत्रे सह निवेशे सति, तुल्यकल्पा एव यजेरन् । कुतः? "राजन्यादीनां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषां ... ... ... ... ... ... ... ... ... ... ... ... ... यो॑र्नाराशंसतानूनपातयोरन्यतरपक्षानुपसंग्रहे क्रतुवैगुण्यात् फलं न सिद्ध्येत् । तत्र दृष्टान्तः प्रकृतिवत् इति । यथा प्रकृतौ दर्शादौ नाराशंसस्य वा [1]तानूनपातस्य वा अननुष्ठाने फलाभावः, एवमिहापि, उपसंग्रहणे तत्तत्कल्पभेदानुपसंग्रहणे च वैगुण्यात्फलं न सिद्ध्येत्, तद्वदिहापि फलोत्पत्त्यनुपपत्तेः समानकल्पा एव यजेरन्निति ॥ १ ॥

---

१ तानूनपातो वा-इति मातृकागतः पाठः ।

## वचनाद्वा शिरोवत्स्यात् ॥ २ ॥

वाकारः पक्षव्यावर्तकः । "ऋद्धिकामास्सत्रमासीरन्" इति सामान्य-वचनात् भिन्नकल्पा अप्यधिक्रियेरन्, ऋद्धिकामवाक्ये विशेषाश्रवणादित्यर्थः । तत्र दृष्टान्तः—शिरोवत् इति । यथा शवशिरस्स्पर्शनं शास्त्रे सामान्येन प्रतिषिद्धमपि, "पुरुषशीर्षमुपदधाति" इति वचनेनाग्नावुपधीयते, तद्वत् भिन्नकल्पानां प्रतिषेधेऽपि—विरोधेऽपि ऋद्धिकामसामान्यवचनेन, प्राकृतघृत-दुहि गवि निवृत्तायां अन्यैवाशिरे गौर्दुह्यते तद्वदत्रापि वचनेनाविशेपितस्वार्थेन प्राप्तिः स्यादित्यर्थः ॥ २ ॥

## न वाऽनारभ्यवादत्वात् ॥ ३ ॥

भिन्नकल्पानामधिकार इति यदुक्तं तन्न, कुतः? अनारभ्यवादत्वात्—भिन्नप्रयाजादिकल्पाननारभ्यैव पठितत्वात्, न तद्विपयकमिदमृद्धिकामवचनम् । यत उपक्रमविरोधाद्भिन्नकल्पाधिकार ... ... ... ... परमिदं वाक्यं स्यात् । तादृश उपक्रमो नास्तीत्यर्थः ॥ ३ ॥

## स्याद्वा यज्ञार्थत्वादौदुंबरीवत् ॥ ४ ॥

भिन्नकल्पानामपि यजमानानां सत्रेऽधिकारस्स्यादेव । कुतः? नारा-शंसादि प्रयाजकल्पस्य यज्ञार्थत्वात्—क्रत्वर्थत्वात् । क्रत्वर्थानामङ्गानां विकल्पितानामन्यतरानुष्ठानेनापि चरितार्थत्वान्न सर्वपक्षोपसंहारः । तत्र दृष्टान्तः—औदुम्बरीवदिति । यथा क्रत्वर्थौदुम्बरी येनकेनचिद्यजमानेन सत्रे संमितापि क्रत्ववैगुण्यं साधयति, तद्वदिहाप्यन्यतरयजमानकल्पानुष्ठानेनापि क्रतुसाद्गुण्यं स्यादित्यर्थः ॥ ४ ॥

## न तत्प्रधानत्वात् ॥ ५ ॥

नैतदुपपद्यते — भिन्नकल्पानामपि सत्रेऽधिकारस्स्यात्, प्रयाजकल्पस्य क्रत्वर्थत्वेनान्यतरानुष्ठानेनापि साद्गुण्यमिति । कुतः? तत्प्रधानत्वात्—

वसिष्ठादिपुरुषकल्पप्रधानत्वान्नाराशंसादिकल्पस्य, नान्यतरानुष्ठानेन क्रतुसाद्गुण्यम्; किन्तु तत्तत्कल्पोपसंग्रहणेनैव साद्गुण्यमिति ॥ ५ ॥

औदुम्बर्याः [1]फलार्थत्वात्कपालवत् ॥ ६ ॥

यदुक्तमौदुम्बरीसंमानवदन्यतरानुष्ठानेनापि क्रतुवैगुण्यन्नास्तीति; तन्नोपपद्यते। सत्रे औदुम्बर्याः फलार्थत्वात्—प्रधानक्रतुफलार्थत्वात्। पुरुषार्थत्वे तु फलकल्पनाप्रसङ्गात्तत्रान्यतमसंमानमौदुम्बर्या युक्तम्। तत्र दृष्टान्तः—कपालवदिति। यथा "पुरोडाशकपालेन तुषानुपवपति" इत्यत्र परप्रयुक्तकपालेषु तुषाणामुपवापस्तद्वदत्रापि क्रतुप्रयुक्तायामौदुम्बर्यां येनकेनचिद्यजमानेन संमानेऽपि चरितार्थता। न तादृशमत्रेत्यर्थः ॥ ६ ॥

अन्येनापीति चेत् ॥ ७ ॥

इति चेत्पश्यसि, यजमानेन संमानमौदुम्बर्या क्रियेत चेत्, स्वेन वा—अन्येन वा यजमानेनौदुम्बर्या उपसंमानं स्यात्। क्रत्वर्थत्वे ह्यौदुम्बर्याः प्राकरणिकेनाप्राकरणिकेन येनकेनचिद्यजमानेन संमानं स्यादिति पश्यसि चेत्—इति सूत्रेणा ... पक्षोक्तानुवादः ॥ ७ ॥

नैकत्वात्तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् ॥ ८ ॥

नेति पक्षव्यावृत्तिः। "यजमानेन संमितौदुम्बरी भवती"त्यत्र यजमानशब्दस्य एकत्वात्—विवक्षितैकवचनत्वादित्यर्थः। चकारोऽन्यव्युदासार्थः। तस्य—प्रयोगान्तरस्थस्येत्यर्थः। अकामित्वेन अनधिकारात्। द्वितीयश्चकारो हेत्वन्तरसमुच्चयार्थः। शब्दस्य—यजमानशब्दस्य, अविभक्तत्वात्—अविशेषित वासिष्ठादियजमानपरत्वात्। अयमर्थः—यजमानेन संमितौदुम्बरी"त्यत्र यजमानशब्देनाविशेषितस्वार्थेन यजमानविशेषानुपादनात्, क्रत्वर्थ-

---

1 ... परार्थत्वात् ... क. ख.

त्वाचौदुम्बर्याः, तत्र येनकेनचिद्यजमानेन संमितौदुम्बरी क्रतुसाद्गुण्याय पर्याप्नोति। इह तु न तादृशमित्यर्थः ॥ ८ ॥

[1]सन्निपातात्तु निमित्तविघातस्स्याद्बृहद्रथन्तरवद्विभक्ति-शिष्टत्वात् ॥ ९ ॥

तुना पक्षो व्यावर्त्यते। सत्रे वासिष्ठानां वैश्वामित्राणाञ्च सन्निपातात् युगपदुपनिपाताद्धेतोः निमित्तविघातस्स्यात् वासिष्ठादौ वैश्वामित्रादौ निमित्ते, नाराशंसता[2]नूनपातयोर्विकल्पेन यदनुष्ठानं, तयोर्विघातः — व्याहतिस्स्यात्। कुतो हेतोः? विभक्तिशिष्टत्वात् — विभक्तानां वासिष्ठवैश्वामित्रादीनां सत्रानुप्रवेशे सति निमित्तविघातस्यैव शिष्टत्वात् – अनुशिष्टत्वात् – युक्तत्वादित्यर्थः। तत्र बृहद्रथन्तरवदिति दृष्टान्तः। यथा बृहद्रथन्तरं पृष्ठं इत्यत्र न बृहन्मात्रनिमित्तमनुष्ठानं, नापि रथन्तरमात्रनिमित्तमनुष्ठानं, किन्तु उभयनिमित्तमनुष्ठानम्; तद्वदिहाप्युभयेषां वासिष्ठवैश्वामित्रादीनां सत्रानुप्रवेशे सति नान्यतरनिमित्तं नराशंसाद्यनुष्ठानमिति ॥ ९ ॥

अपि वा कृत्स्नसंयोगादविघातः [3]प्रतीयेत स्वामित्वेनाभि-संबन्धात् ॥ १० ॥

अपि वेति पक्षव्यावृत्तिः क्रियते। सत्रे कर्मणि नैमित्तिकयोर्नाराशंस-तनूनपातोः अविघातः स्यात् – अव्याहतिः स्यात्। कुतो हेतोः? कृत्स्न-संयोगात् – कृत्स्नस्य सत्राख्यस्य कर्मण एकैकेन कर्त्रा संयोगात्। एकैकस्य कर्तृत्वेन समुदायकर्तृत्वाभावात्। अतो हेतोः स्वामित्वेनाभिसंबन्धात् – एकैकस्यैव कर्तुः स्वामित्वेन – फलभोक्तृत्वाकारेण, अभिसंबन्धात् – अन्वयात्। तदयमर्थः–समुदायकर्तृत्वे हि भिन्नकल्पानामप्यधिकारः स्यात्। पृथक्कर्तृत्वे तु

१ सन्निपातात्तु निमित्तविघातस्स्याद्बृहद्रथन्तरवद्विभक्तशिष्टत्वाद्वसिष्ठनिर्वर्त्ये. क.ख.

२ तानूनपातोः – इति मातृकापाठ.

३ ... ... प्रतीयते ... ... क.

तत्तन्निमित्त ... ... ... क्रत्वर्थयोर्नराशंसतनूनपातोरनुष्ठानं, न तत्र समुदायान्तरम् । अतस्समानकल्पा एवाधिक्रियेरन् ॥ १० ॥

साम्नोः [1]कर्मवृद्धिरेकदेशेन संयोगे गुणत्वेनाभिसंबधस्तस्मात्तत्र विघातस्स्यात् ॥ ११ ॥

यदुक्तं बृहद्रथन्तरवदिति – तत्परिहर्तव्यम् । बृहद्रथन्तरयोस्साम्नोः एकदेशेन – प्रधानभूतस्तोत्रैकदेशेन, संयोगे – समन्वये सति, कर्मवृद्धिः – नैमित्तिककर्मवृद्धिः, कर्मणि वृद्धिः – कर्मवृद्धिः नैमित्तिकी च सा कर्मवृद्धिश्च नैमित्तिककर्मवृद्धिः – सामद्वयनिमित्तकवृद्धिस्स्यादित्यर्थः । उक्तस्यैवोपपादनं – गुणत्वेनाभिसंबन्ध इति । साम्नोर्गुणत्वेन स्तोत्रेऽन्वय इत्यर्थः । उपसंहरति – तस्मात्तत्र विघातस्स्यादिति । गुणत्वेनाभिसंबन्धाद्धेतोः तत्र – सामविषये विघातस्स्यात् – अन्यतरनिमित्तविघातस्स्यात् । इह तु कर्तॄणां गुणत्वेनाभिसंबन्धाभावात्, वासिष्ठादिनिमित्तकप्रयाजकल्पविघातो न स्यादिति ॥ ११ ॥

प्रयोजनन्त्वनुष्ठानरूपं – पक्षयोस्स्पष्टं, अतो न विलिख्यते ॥ १ ॥

( राजपुरोहिताधिकरणम्–२ )

[2]वचनात्तु लिङ्गसंयोगस्तस्मादेकस्य पाणित्वम् ॥ १२ ॥ (पू)

इदं श्रूयते – "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाता" मिति ।

तत्र संदिह्यते – किं राज्ञः पुरोहितौ द्वौ यजेयाताम्? उत राजा च पुरोहितश्च? इति ।

तत्र राज्ञः पुरोहितौ, एकराजसंबन्धिनौ द्वौ पुरोहितौ यजेयाताम् । कुतः? वचनात् – पुरोहितशब्दोपरिद्विवचनदर्शनात् । तत्र दृष्टान्तः [3]यथेति ।

---

१ कर्मवृद्ध्यैकदेशेन ... विघातस्स्यात् क. ख.

२ वचनात्तुद्विसंयोग ... पाणित्वम क. ... पाणिवत् ख.

३ इदं न सौत्रम; अपितु भाष्यस्थम् ।

"तस्मादञ्जलिना जुहोती"ति वचनादेकस्यैव पुरुषस्य पाणिद्वयं भवति नान्ययोः; तद्वदिहापि लिङ्गयोगः—पुरोहितद्वित्वोक्तावेव सामर्थ्यं, तद्योगः, पुरोहितशब्दोपरि (श्रूयमाणस्य) द्विवचनस्य पुरोहितद्वित्वप्रतिपादन एव सामर्थ्यं नान्यथेति ॥ १२ ॥

## अर्थाभावात्तु नैवं स्यात् ॥ १३ ॥ (सि)

तुना पुरोहितद्वयपक्षो व्यावर्त्यते। राजसंबन्धिनौ द्वौ पुरोहिताविर्त्येवं न स्यात्। कुतः? "पुरोहितं वृणीते" इति विधेश्च पुरोहितगतैकत्वस्य विवक्षितत्वेन, एकराजसंबन्धिनौ द्वौ पुरोहितौ-इतीदृशार्थस्याभावात्, नैकराजकौ द्वौ पुरोहितावधिक्रियेते इति ॥ १३ ॥

## [१]अर्थानाञ्च विभक्तत्वात्ततश्च तेन संबन्धः ॥ १४ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। इह कुलाययज्ञे वाक्यशेषे, अर्थानां—तेजोरूपवीर्यरूपयोरर्थयोरित्यर्थः। तेजोरूपत्वं ब्राह्मणस्य, वीर्यरूपत्वं राजन्यस्य इति विभक्तत्वात्—विभज्य श्रूयमाणत्वात्। ततो हेतोः, तेन फलेन राज्ञः पुरोहितस्य च संबन्धः, न त्वेकराजसंबन्धिनोः पुरोहितयोरिति ॥ १४ ॥

## पाणेः प्रत्यङ्गभावादसंबन्धः प्रतीयेत ॥ १५ ॥

यदुक्तं पाणिवदिति, तत्रोत्तरम्—पाणेः—दक्षिणस्य पाणेरञ्जलौ कर्तव्ये सव्यस्य पाणेः, प्रत्यङ्गभावात्—प्रत्यङ्गत्वात्, अञ्जलित्वस्य सव्येन विनानुपपत्तेः, एकस्य पाणेः अञ्जलित्वाभावात् सव्यस्य पाणेरञ्जलित्वप्रतिपादनाय दक्षिणोपकारकत्वात्। सव्यस्य पाणेरप्रत्यङ्गत्वे हि वर्ण्यमाने, अञ्जलिशब्दस्य असंबन्धः प्रतीयेत। तस्मात्तत्र युक्तमेकस्यैव द्वौ पाणी भवतोऽञ्जलिसिद्धय इति। इह न तादृशमित्यर्थः ॥ १५ ॥

प्रयोजनन्त्वनुष्ठानरूपं—विशदं, राज्ञः पुरोहिताभ्यामनुष्ठाने राज्ञा पुरोहितेन चानुष्ठाने। अतो नात्र लेख्यम् ॥ २ ॥

---

१ अर्थानांच विभक्तत्वान्न तच्छूतेन संबन्धः क. ख.

( सर्ववर्णाधिकरणम्—३ )

## सत्राणि सर्ववर्णानामविशेषात् ॥ १६ ॥ (पू)

"य एवं विद्वांसस्सत्रमुपयन्ति" इति श्रूयते ॥

तत्र संदेहः—किं सत्राणि सर्ववर्णानाम्? उत ब्राह्मणानामेव? इति ॥

**सत्राणि सर्ववर्णानाम्**—ब्राह्मण क्षत्रिय विशां [1]स्युः। कुतो हेतोः? **अविशेषात्**—अस्मिन्वाक्ये अधिकारिविशेषासङ्कीर्तनादित्यर्थः। अतस्त्रयोऽपि वर्णा अधिक्रियेरन् ॥ १६ ॥

## लिङ्गदर्शनाच्च ॥ १७ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। "बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य" इति द्वादशाहगतलिङ्गदर्शनाच्च हेतोः त्रैवर्णिका अधिक्रियेरन् ॥ १७ ॥

## ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥ १८ ॥ (सि)

वाकारः पक्षव्यावर्तकः। ब्राह्मणानां वा—ब्राह्मणानामेव सत्रम्। कुतो हेतोः? इतरयोः—क्षत्रियवैश्ययोः आर्त्विज्याभावात्—ऋत्विक्पदार्थानुष्ठातृत्वाभावात्, न तयोरधिकार इति ॥ १८ ॥

## वचनादिति चेत् ॥ १९ ॥

राजन्यवैश्ययोस्सत्रेऽधिकारे प्रतिपाद्यमाने क्रतौ वैगुण्यं स्यात्, अतस्तयोरनधिकार इति पश्यसि चेत् तन्न। वचनात्—सामान्यवचनादेव यजमानानामेव सतां त्रैवर्णिकानामार्त्विज्येषु पदार्थेष्वनुप्रवेशस्स्यात् ॥ १९ ॥

## [2]न स्वामित्वं विधीयते ॥ २० ॥

---

१ स्यात् इति मातृकापाठः।

२ न स्वामित्वं हि विधीयते क. ख.

नार्त्विज्यविधिः, किन्तु आर्त्विज्यमुद्दिश्य स्वामित्वं विधीयते, आर्त्विज्यश्च ब्राह्मणानामेवेति। आर्त्विज्योद्देशेन ऋत्विजां याजमानपदार्थाऽनुष्ठातृत्वं विधीयत इत्यर्थः। २०॥

[1]प्रत्याम्नायादन्यो निवर्तते ॥ २१ ॥

आर्त्विजेषु यजमानानामेव प्रत्याम्नायात्—प्रतिनिधित्वात्, अन्यो निवर्तते—अन्यकर्तृकता निवर्तत इत्यर्थः॥ २१॥

गार्हपते वा स्यातामविप्रतिषेधात् ॥ २२ ॥

वाकारः सिद्धान्तिपक्षव्यावर्तकः। गार्हपते—गृहपतिना यजमानेनानुष्ठेये पदार्थे राजन्यवैश्यावधिकारिणौ स्यातां सत्रे। कुतः? अविप्रतिषेधात्—याजमानपदार्थेष्वार्त्विज्यस्याकिञ्चित्करत्वात्, गृहपतिपदार्थेऽधिकारात्। नार्त्विजे पदार्थे, तत्र निषेधात्॥ २२॥

न वा कल्पविरोधात् ॥ २३ ॥

नैव क्षत्रियवैश्ययोर्गार्हपते पदार्थेऽनुप्रवेशस्स्यात्। कुतः? कल्पविरोधात्—फलचा ... ... ... ष्टादेर्यजमानत्वविरोधात्। गार्हपतपदार्थस्याप्यनेकाकारत्वेन तत्रापि क्षत्रियवैश्ययोरनुप्रवेशेन विरोध इत्यर्थः॥ २३॥

स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥ २४ ॥

"बार्हद्गिरं ब्राह्मणस्य" इत्यादिना अहीने यल्लिङ्गदर्शनमुपन्यस्तम्; तत्परिहारः—इतरेषां ऋत्विजां स्वामित्वात्—ऋत्विज उद्दिश्य स्वामित्वविधानात् लिङ्गदर्शनमहीने, न सत्र उपपद्यते॥ २४॥

प्रयोजनन्त्वनुष्ठानरूपं—नातीव गहनम्॥ ३॥

---

१ शाबरभाष्यस्थं वाक्यमिदं सूत्रीकृतमत्र।

(वासिष्ठाधिकरणम्–४)

## वासिष्ठानां वा ब्रह्मत्वनियमात् ॥ २५ ॥ (पू)

सत्राधिकारो ब्राह्मणानामित्येतावत्समधिगतम् ॥

अथापरं संदिह्यते— किं सर्वेषां ब्राह्मणानां सत्रम्? उत वासिष्ठानाम्? उत भृगुशुनकवसिष्ठान्वर्जयित्वाऽन्येषाम्? इति ।

तत्र वासिष्ठानां वा— वासिष्ठानामेव– वसिष्ठसमानकल्पानामेव सत्रेऽधिकारस्स्यात् । कुतः? "वासिष्ठो ब्रह्मा" इति ब्रह्मत्वस्य वासिष्ठत्वनियमात् । तदयमर्थः –ब्रह्मत्वे वासिष्ठविधानादब्रह्मर्त्विजामन्यकल्पत्वे वैगुण्याद्ब्रह्मसमानकल्पा एव सत्रेऽधिकारिण इति ॥ २५ ॥

## सर्वेषां वा प्रतिप्रसवात् ॥ २६ ॥ (सि)

वाकारः पक्षव्यावर्तकः । सर्वेषाम् –वासिष्ठानामवासिष्ठानाञ्च सत्रेऽधिकारस्स्यात् । कुतः? प्रतिप्रसवात् –अवासिष्ठत्वेन प्रतिषिद्धानां वैश्वामित्रादीनां स्तोमभागाध्येतृत्वमात्रेण वासिष्ठत्वात् वैश्वामित्रादीनामप्यधिकारस्स्यात् ॥ २६ ॥

## [1]वैश्वामित्रस्य हौत्रनियमाद्भृगुशुनक वसिष्ठानामनधिकारः ॥ २७ ॥

"वैश्वामित्रो होता स्या"दिति वैश्वामित्रस्य हौत्रनियमात् भृगुशुनकवसिष्ठानाम् –भृगुशुनकवसिष्ठादीनामित्यर्थः । तेषां अनधिकारः स्यात् ॥ २७ ॥

प्रयोजनन्त्वनुष्ठानरूपं –इ(रप)ष्टकल्पनम् ॥ ४ ॥

---

१ विश्वामित्रस्य ... क. ख.

(विहाराधिकरणम्—५)

## विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २८ ॥ (पू)

सत्राण्येवोदाहरणम् ॥

तत्रापरं संदिह्यते—किं साग्नीनामनग्नीनाञ्च सत्रम्? उत साग्नीनामेव? इति ॥

सत्रे साग्न्यनग्नित्वाविशेषात् अनग्नीनाम्—अनाहिताग्नीनामपि आहिताग्निभिस्सहाधिकारस्स्यात्। कुतः? विहारस्य ... ... ... इति विहारोऽग्निः। तस्य प्रभुत्वात्—साग्न्यनग्निसाधारण्येनोपकर्तुं समर्थत्वाद्यस्यकस्यचिद्विहारेऽनुष्ठितं सत्रकर्म सर्वेषां फलदमित्यर्थः ॥ २८ ॥

## सारस्वते च दर्शनात् ॥ २९ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। सारस्वते सत्रे, "पररथैर्वा एते स्वर्गं लोकं यन्ति, येऽनाहिताग्नयस्सत्रमासते" इति पराग्नित्वसूचकपररथ शब्देनानाहिताग्नीनामप्यधिकारसूचकलिङ्गदर्शनाच्च, सत्रत्वसामान्याच्चानाहिताग्नीनामप्यधिकार इति ॥ २९ ॥

## प्रायश्चित्तविधानाच्च ॥ ३० ॥

चकारो हेत्वन्तरसमुच्चयं दर्शयति। "अग्नये विविचये पुरोडाशमष्टापालन्निर्वपेत्। [1]यस्याहिताग्नेरन्यैरग्निभिरग्नयस्संसृज्यन्ते" इति आहिताग्न्यनाहिताग्न्यधिकारित्वसूचक लौकिकवैदिकाग्निसंसर्गनिमित्तक प्रायश्चित्तविधानाच्च हेतोरनग्नीनामपि ... ... ... ... प्राप्तिपूर्वकत्वात्प्रायश्चित्तविधेरित्यर्थः ॥ ३० ॥

## साग्नीनां वेष्टिपूर्वत्वात् ॥ ३१ ॥ (सि)

वाकार एवकारार्थे। साग्नीनामेव सत्रेऽधिकारस्स्यात्, नान्येषाम्।

---

१ 'यस्याहिताग्नेरग्निभिरन्यैरग्नयस्संसृज्येरन् इति मातृकागतः पाठः.

कुतो हेतोः? इष्टिपूर्वत्वात्—"दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"ति सोमस्येष्टिपूर्वत्वात्। तदयमर्थः—प्रकृतिभूतज्योतिष्टोमगतदर्शपूर्णमासोत्तरकालानुष्ठानस्य चोदकपरंपरया सत्रेऽपि प्राप्तेस्संस्कृताग्निना दर्शपूर्णमासयष्टुरेवोत्तरक्रतुष्वधिकारात् नानग्नीनां सत्रेऽधिकारो भवतीति॥ ३१॥

स्वार्थेन च प्रयुक्तत्वात्॥ ३२॥

चकारो हेत्वन्तरप्रदर्शनार्थः। अग्नीनां अग्निमादधीत इति स्वार्थेन—आधातृगतफलसूचनपरेण "आदधीत" इत्यात्मनेपदेन प्रयुक्तत्वात् अनाहिताग्नयः परे ... ... ... ... नानुपकुर्वन्तीति॥ ३२॥

[1]सन्निपातञ्च दर्शयति॥ ३३॥

चकारस्समुच्चयार्थः। सावित्राणि होष्यन्तस्सन्निवपेयु ... निवपे ... ... ... ... ... ... ... सावित्रहोमकर्तॄणां बहुवचननिर्देशात् स्वाग्नीनां सन्निवाप ... ... ... ... आहिताग्नीनामेव सत्रे सन्निपातं—युगपदनुप्रवेशं दर्शयति। तस्मादाहिताग्नीनामेवाधिकारः॥ ३३॥

अपर्यवसितेऽधिकरणे चिन्तान्तरं प्रयत्नलाघवार्थम्—

[2]जुहूनां प्रयुक्तत्वाद्यथाकामी प्रतीयेत॥ ३४॥ (पू)

सत्रे किं यस्यकस्यचिद्यजमानस्य जुह्वादिपात्राणि भवन्ति? उत सर्वसाधारणानि जुह्वादिपात्राणि संपादनीयानि? इति संदेहे—

सत्रे जुहूनाम्—जुह्वादिपात्राणां, प्रयोगविधि प्रयुक्तत्वात्, स्वेन प्राकृतेन पात्रेण प्रयोगः कर्तव्य इत्यश्रवणात् यथाकामी—याथाकाम्यं यथेच्छं प्रतीयेत—पात्रविशेषानिर्देशाद्यस्यकस्यचिद्यजमानस्य जुह्वादिपात्रैस्सत्रे प्रचारस्स्यात्॥ ३४॥

---

१ सन्निवापञ्च दर्शयति क. ख.

२ जुह्वादीनामप्रयुक्तत्वात्संदेहे यथाकामी प्रतीयेत क. ख. ग. अत्रापि व्याख्या तथैव.

[1]अपि वान्यानि पात्राणि साधारणानि कुर्वीरन्विप्रतिषेधात् ॥ ३५ ॥ (सि)

अपि चेति पूर्वपक्षव्यावृत्तिः क्रियते । सत्रिणस्सर्वे अन्यानि—सर्वसाधारणान्येव पात्राणि कुर्वीरन्—कल्पयेयुः, नतु यस्य कस्यचिद्यजमानस्य पात्रैः प्रचारयेयुः । कुतः ? विप्रतिषेधात्—सत्रानुप्रविष्टस्य यस्य कस्यचिद्दारान्निर्याणे सति "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इति परिधानीय कर्माङ्गत्वेन जुह्वादीनामनुप्रवेशादुपात्तजुह्वादिषु च दह्यमानेषु प्रयोगानुपपत्तेरन्यान्येव पात्राणि नूतनानि कार्याणि । परिधानीये कर्मणि पात्राणां प्रतिपत्तेस्तल्लोपोऽस्त्वित्याशङ्कायामाह – [2]शास्त्रकृतत्वादिति । आहिताग्नेरौर्ध्वदैहिकविधायिना शास्त्रेण जुह्वादीनां तस्मिन्कर्मणि साधनत्वेन कृतत्वादित्यर्थः ॥ ३५ ॥

स्थितादुत्तरम्—

प्रायश्चित्तमापदि स्यात ॥ ३६ ॥

यदुक्तं, प्रायश्चित्तविधानादनग्नीनामप्यधिकारस्स्यादिति – तत्रोत्तरमिदं सूत्रम्–प्रायश्चित्तम्–लौकिकवैदिकाग्निसंसर्गप्रायश्चित्तम्, आपदि–अरण्यादिगमने दावाग्निप्रभृतिभिस्संसर्गे निमित्ते स्यात्, न सते ॥ ३६ ॥

प्रयोजनन्त्वनुष्ठानरूपं – पक्षयोर्विशदम् ॥ ५ ॥

---

१ अपि वान्यानि पात्राणि साधारणानि कुर्वीरन्विप्रतिषेधाच्छास्त्रकृतत्वात् क. ख. अत्रापि व्याख्या तथैव ।

२ सौत्रमिदं पदं प्रतीकग्रहणपूर्वकं व्याख्यायते, सूत्रे तु न लिखितम् ।

( पुरुषकल्पाधिकरणम् —६ )

## [1]पुरुषकल्पेन विकृतौ कर्तृनियमात्, यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येतस्मिन्विधित्वात्स्याल्लिङ्गाच्चेज्याविशेषवत् ॥३७॥ (पू)

आग्रयणेष्टिपशुप्रभृतीन्युदाहरणम्। येषु कर्मविशेषेषु सप्तदश सामिधेन्यस्सन्ति, तान्येवोदाहारणम् ॥

किं सामिधेनीसाप्तदश्ययुक्तेषु त्रयाणामप्यधिकारः? उत वैश्यस्यैव? इति संदेहे —

प्रकृतिगतेन "पञ्चदश ब्राह्मणस्यानुब्रूयात्, षोडश राजन्यस्य, सप्तदश वैश्यस्य" इति तत्तत्पुरुषनियतसामिधेनीकल्पेन कृत्वा विकृतौ — आग्रयणादावपि कर्तृनियमः। प्रकृतौ साप्तदश्यस्य वैश्यसंबन्धादत्रापि वैश्यस्य कर्तृनियमस्स्यात्, न ब्रह्मक्षत्रयोः प्राप्तिः। कुतः? यज्ञस्य — अध्वरकल्पादिरूपस्य, तद्गुणत्वात् — साप्तदश्यगुणकत्वात्, इतरान् — ब्राह्मणादीन्प्रति साप्तदश्यविधेरभावात्, एतस्मिन् — वैश्ये, साप्तदश्यस्य विधित्वात् — विहितत्वात्। चकारेण हेत्वन्तरं समुच्चीयते। "सप्तदशो वै वैश्यः" इति साप्तदश्यस्य वैश्यसंबन्धं प्रदर्शयता लिङ्गेन च तस्यैवाधिकारः। तत्र दृष्टान्तः — इज्याविशेषवत् इति। यथा "वैश्यो वैश्यस्तोमेन यजेत" इतीज्याविशेषे वैश्यस्तोमस्य वैश्येनैव संबन्धः, तद्वदिहापि वैश्यैकान्तिकेन साप्तदश्येन वैश्यस्यैवाध्वरकल्पादावधिकारः ॥ ३७ ॥

## न वा संयोगपृथक्त्वाद्गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३८ ॥ (सि)

---

१ पुरुषकल्पेन वा विकृतौ कर्तृनियमस्स्याद्यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येकस्मिन्नधिकारस्स्यात्।

लिङ्गाच्चेज्याविशेषवत्।

इति किञ्चिद्रूप्येण सूत्रद्वयात्मना च इदं सूत्रं 'क.' ख. पुस्तके दृश्यते।

वाकारः पूर्वपक्षव्यावर्तकः। नैव वैश्यमात्रान्वयोऽध्वरकल्पादिः। कुतः? गुणस्य—साप्तदश्यरूपस्य, संयोगपृथक्त्वात्—"सप्तदश वैश्यस्यानुब्रूयात्" "सप्तदशानुब्रूयात्" इति च प्रकृतिविकृतिगतयोर्वि(ध्योः) पृथक्त्वात्। अपूर्वश ... ... ... ... रोधेनाध्वरकल्पादिषु यद्य ... ... ... ... ज्याप्रधानत्वात्—(यागप्रधानत्वात्) ह्लिर्हेतौ। यतः कारणादध्वरकल्पादिविकृतिगता चोदना असंयुक्ता—वैश्यपदासंयुक्ता, तस्मात्त्रैवर्णिका इत्यर्थः॥ ३८॥

[1]इज्यायान्तत्प्रधानत्वाद्विशेषेण नियम्येत॥ ३९॥

यदुक्तं वैश्यस्तोमे वैश्याधिकारवदिति, तदुत्तरार्थमिदं सूत्रम्। "वैश्यो वैश्यस्तोमेने"ति इज्यायां वैश्यस्य प्रधानत्वात्, तत्र वाचनिकेन वैश्यपदरूपेण विशेषेण वैश्य एव कर्तेति नियम्येत। इह तु न तादृशमित्यर्थः॥ ३९॥

प्रयोजनन्त्वनुष्ठानरूपं—पक्षयोस्स्पष्टम्। ६॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां षष्ठस्याध्यायस्य षष्ठः पादः।

ओम्। ओम्। ओम्।

—:❀:—

१ इज्यायान्तद्गुणत्वाद्विशेषेण नियम्येत। क. ख.

## षष्ठाध्याये सप्तमः पादः

—×—

(सर्वस्वदानाधिकरणम्—१)

### स्वदाने सर्वमविशेषात् ॥ १ ॥ (पू)

विश्वजिति श्रूयते "सर्वस्वं ददाती"ति ॥

तत्र संदेहः—किं स्वशब्दवाच्या मातापित्रादयोऽपि देयाः ? उत यदातुं प्रभुस्स्यात्तत्सर्वं देयम् ? इति ॥

विश्वजिति स्वदाने—सर्वस्वदाने चोद्यमाने, सर्वं—आत्मीयज्ञातिधनपित्रादिकुटुम्बादिकं दीयेत। कुतः ? अविशेषात्—स्वशब्दस्यात्मात्मीयज्ञात्यादिवाचकत्वेन, "इदं देयम्—इदं न देय"मित्यविशेषात् असंकीर्तनात्, पित्रादिकमपि देयमित्यर्थः ॥ १ ॥

### यस्य वा प्रभुस्स्यादितरस्याशक्यत्वात् ॥ २ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। यस्य—आत्मीयधनरूपस्य, प्रभुस्स्यात्—ईशिता स्यात्तदेव दीयेत नान्यत् । कुतः ? इतरस्य—पित्रादिरूपस्यार्थस्य, अशक्यत्वात्—पित्रादीनां स्वत्वपरित्यागपरस्वत्वापादनरूपेण दानात्मना कर्तुमशक्यत्वान्न पित्रादिकं देयम् ॥ २ ॥

प्रयोजनन्त्वनुष्ठानरूपं—विशदमेव पक्षयोरिति न प्रयत्यते। १ ॥

(भूम्यधिकरणम्—२)

### न भूमिस्स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ ३ ॥ (सि)

सर्वस्वदान एव सन्देहः—किं भूगोलं देयम् ? उत न देयम् ? इति ॥

न कृत्स्ना भूमिः मानसव्यापारेण देया स्यात्, सार्वभौमयोगस्य सर्वान् भूमिपालान्प्रति अविशिष्टत्वात्। तदयमर्थः—यदिदं भूगोलकं, तस्याहार्यत्वेनानादेयत्वेन च सर्वभूमिपतिसाधारणत्वाद्दानं न संभवति, क्षेत्रं तु दातुं शक्यत इत्यर्थः ॥ ३ ॥

प्रयोजनन्त्वनुष्ठानरूपं—मनसा दानं पूर्वपक्षे, सिद्धान्ते तु नेति ॥ २ ॥

(विश्वजिति, अश्वादीनामदेयत्वाधिकरणम्—३)

## [1]अकार्यत्वाच्च ततः पुनर्विशेषात् ॥ ४ ॥ (सि)

विश्वजिति किमश्वा देयाः? उत न देयाः? इति संदेहे सति—

चः पुनरर्थे। ततः—पूर्वप्रतिपादितद्रव्यसमुदायादित्यर्थः। अश्वे तु, "न केसरिणो ददाति" "नोभयतोदतः प्रतिगृह्णाति" इति वचनविशेषात् देयत्वे संभवत्यपि निषिद्धत्वेनाश्वदानस्य अकार्यत्वात् अश्वादयः केसरिणो न देया—इत्यर्थः ॥ ४ ॥

प्रयोजनन्त्वनुष्ठानरूपं—अश्वदानं पूर्वपक्षे, सिद्धान्ते तु नेति ॥ ३ ॥

(विद्यमानस्यैव सर्वस्य दानाधिकरणम्—४)

## नित्यत्वाच्चानित्यैर्नास्ति संबन्धः ॥ ५ ॥ (सि)

विश्वजित्येव संदेहः—किं यावन्ति द्रव्याणि मनुष्योपकारकाणि सिद्धानि, यावन्ति च शक्नोत्युपार्जितुम्, तत्सर्वं देयम्? उत यावदस्य विद्यते, तावदेव देयम्? इति ॥

विश्वजिति दानस्य चोदकप्राप्तेर्नित्यत्वात्—नियतानुष्ठेयत्वात् अनित्यैः—अनियतार्जनैः कृतभाण्डकशब्दवाच्ययानासन[2]शयनादिभिः विश्वजिति क्रियमाणस्य

---

१ अकार्यत्वाच्च ततः पुनर्विशेषस्यात् क. ख.

२ ... शयनादीनि ... इति मातृकापाठः।

दानस्य नास्ति संबन्धः। नित्यानित्यसंयोगविरोधादित्यर्थः। तस्मान्न कृतभाण्डकानां दानं, किन्त्वार्जितानामेवेति। चकारः प्रागुक्ताश्वप्रतिषेधार्थसमुच्चयार्थः ॥ ५ ॥

प्रयोजनन्त्वनुष्ठानरूपं—पक्षयोस्स्पष्टम् । ४ ॥

(धर्मशूद्राधिकरणम्—५)

## शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥ (सि)

विश्वजित्येव संदिह्यते—किं शुश्रूषुश्शूद्रो देयः? उत न देयः? इति।

शूद्रश्च—शूद्रोऽपि, अश्वकृतभाण्डकादिवन्न देयस्स्यात्। कुतः? त्रैवर्णिकशुश्रूषोश्शूद्रस्य धर्मशास्त्रत्वात्—धर्मार्थमुपनतत्वात्। न ह्यर्थदासवत्तस्य स्वत्वमस्ति, यस्माद्दीयेतेत्यर्थः। ६ ॥

प्रयोजनन्त्वनुष्ठानरूपं विशदमेवेति न व्याख्यायते ॥ ५ ॥

(दान) संयोगाधिकरणम्—६)

## दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥ ७ ॥ (सि)

विश्वजित्येव संदेहः—किं दक्षिणाकालात्पूर्वकालीनं, दक्षिणाकालादूर्ध्वं भविष्यदनागतञ्च स्वं देयम्? आहोस्विद्यदेव विद्यते, तदेव देयं स्वम्? इति।

दक्षिणाकाले—दक्षिणादानसमये, यत्स्वं—धनमस्ति, तदेव प्रतीयेत, नतु प्राक्कालीनं व्ययीकृतं, नोर्ध्वकालीनं भविष्यच्च। कुतः? (त)द्दानसंयोगात्—दानानुवादेन प्राप्तकालदक्षिणादान एव सर्वतः संबन्धात्, न भूतभाविनोरुभयोर्दानम्; किन्तु दक्षिणाकालीनस्यैवेति ॥ ७ ॥

प्रयोजनन्त्वनुष्ठानरूपं—विशदमेव, ततो न विलिख्यते ॥ ६ ॥

(अशेषाधिकरणम्—७)

अशेषत्वात्तदन्तस्स्यात्कर्मणो [1]द्रव्यसिद्धत्वात् ॥ ८ ॥ (पू.)

विश्वजित्येव संदेहः—किं दक्षिणाकालीनस्य सर्वस्य द्रव्यस्य दत्त्वा-द्विश्वजित्तदन्त उत्स्रष्टव्यः ? उत सर्वं न दातव्यम्, परिसमापनीयः क्रतुः ? इति ॥

दक्षिणाकालीनस्य कृत्स्नस्य द्रव्यस्य देयत्वेन अशेषत्वात्—अपरिशिष्ट-त्वात्, विश्वजिदनुष्ठानं तदन्तम्—दक्षिणान्तं स्यात्, नोर्ध्वमनुष्ठीयेत। कुतः ? कर्मणः—परिशिष्टस्य कर्तव्यस्य. द्रव्यसिद्धत्वात्—द्रव्यसाध्यत्वात्, नावशिष्टकर्मानुष्ठानम् ॥ ८ ॥

अपि वा शेषकर्म स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥ (सि)

अपिवेति पक्षव्यावृत्तिः। शेषकर्म—दक्षिणादानादूर्ध्वभावि परिशिष्टं कर्म, समापनीयं स्यात्। कुतः ? क्रतोः—विश्वजितः, प्रत्यक्षशिष्टत्वात्—"विश्वजितमुपक्रम्य समापयेत्, न मुख्यं परित्यजेत्" इत्येवं ब्रुवता प्रत्यक्षेण श्रूयमाणेन यजेतेत्याख्यातेन शिष्टत्वात्—विहितत्वात् न तदन्तः क्रतुरुत्स्रष्टव्य इति ॥ ९ ॥

तथा चान्यार्थदर्शनम् ॥ १० ॥

चकारो हेत्वन्तरसमुच्चयार्थः। विश्वजित्येव "अवभृथादुदेत्य वत्स-त्वचमाच्छादयति" इति वत्सत्वक्परिधानार्थं दर्शनं, तथा—तथात्व एव—परिशिष्ट कर्मसमापनपक्ष एवोपपद्यते नान्यथा ॥ १० ॥

[2]अशेषे तु समञ्जसमादानेन शेषकर्म स्यात् ॥ ११ ॥

---

१ ... ...द्रव्यसिद्धित्वात् क. ख.

२ अशेषन्तु समञ्जसाऽऽदानेन शेषकर्म स्यात् क. ख.

तुना सिद्धान्तपक्षो व्यावर्त्यते। विश्वजिति सर्वस्वदानं अशेषे—कृत्स्ने द्रव्ये दत्ते सति समञ्जसं—समुत्पन्नम्। न किञ्चिदपि तत्कालीनं क्रतुशेषार्थमवशेषयितव्यम्। शेषकर्म—परिशिष्टं कर्म, आदानेन—आर्जितद्रव्यान्तरेण कर्तव्यं स्यात्। अतस्सर्वं दक्षिणाकालीनं देयमित्यर्थः ॥ ११ ॥

## नादानस्यानित्यत्वात् ॥ १२ ॥

न चैतद्युक्तम्—आर्जित्वा परिशिष्टं समापनीयमिति। कुतः? आदानस्य द्रव्यान्तरादानस्य, अनित्यत्वात्—अनियतत्वात् नित्यस्य शेषकर्मणोऽनित्येनादानेन नास्ति संबन्धः, नित्यानित्यविरोधादेव ॥ १२ ॥

## [1]दीक्षासु विनिर्देशादक्रत्वर्थेन संयोगस्तस्मादविरोधस्स्यात् ॥ १३ ॥

तुना प्रागुक्तपक्षो व्यावर्त्यते। ज्योतिष्टोमे दीक्षासु मध्ये, "इदं मे क्रत्वर्थं, इदं मे [2]भक्तार्थं, इदं मे आनमनार्थं इति त्रेधा विनिर्देशात्, दक्षिणायाः अक्रत्वर्थेन अभक्तार्थेन केवलानमनार्थेन द्रव्येण संयोगः—संबन्धस्सिद्धः। तस्मात्—निर्देशाद्धेतोः शेषकर्मानुष्ठाने, अविरोध इत्यर्थः ॥ १३ ॥

प्रयोजनन्त्वनुष्ठानरूपं—पक्षयोर्विशदम् ॥ ७ ॥

(अहर्गणतद्धर्माधिकरणम्—८)

## [3]अहर्गणे च तद्धर्मा सर्वेषामविशेषात् ॥ १४ ॥ (सि)

अस्त्यहर्गणोऽष्टरात्रः—"अथैतस्याष्टरात्रस्य विश्वजिदभिजितावे[4]काहौ, उभयतो ज्योतिर्मध्ये षडहः, पशुकामो ह्येतेन यजेत" इति ॥

---

१ दीक्षासु तु विनिर्देशा ... ... स्यात् क.

२ भक्षार्थम् (शाबरभाष्यम्)

३ 'अहर्गणे च तद्धर्मः स्यात्सर्वेषामविशेषात्' ख.
'अहर्गणे च तद्धर्मा स्यात्सर्वेषामविशेषात्' क.

४ एकाहावभितः इति साधु।

किमत्र श्रुतेऽपि विश्वजिति सर्वस्वं दक्षिणा? उत द्वादशशतमेव? इति संदेहे —

अह्नरात्रे च यो विश्वजित् श्रुतः, सोऽपि तद्धर्मा – तस्य विश्वजितो ये धर्मास्तद्धर्मवान् – सर्वस्वदक्षिणाक इत्यर्थः। कुतः? सर्वेषाम् – अहर्गण-मध्यपातिनां केवलस्य च विश्वजितां, अविशेषात् – अतारतम्यात्, केवले विश्वजिति या दक्षिणा, सैव स्यात्, नान्या। नामातिदेशस्य बलीयस्त्वादिति ॥ १४ ॥

## द्वादशशतं वा प्रकृतिवत् ॥ १५ ॥

वाकारः पक्षव्यावर्तकः। प्रकृतिवत् – प्रकृतौ ज्योतिष्टोम इव द्वादश-शतमेव दक्षिणा स्यात् – न सर्वस्वम् ॥ १५ ॥

## अतद्गुणत्वात्तु नैवं स्यात् ॥ १६ ॥

तुना पक्षो व्यावर्त्यते। प्राकृतं द्वादशशतमेव प्राप्नोति, न सर्वस्वदानम् – इत्येतत् नैवं स्यात्। कुतः? द्वादशशतस्य अतद्गुणत्वात् – अविश्वजिद्गुणत्वात्। तदयमर्थः – धर्मातिदेशान्नामातिदेशस्य बलवत्तरत्वात्, तदनुरोधेन नामसामान्यात् [1]विश्वजित्सु सर्वस्वदानमेव प्राप्नोतीति ॥ १६ ॥

## लिङ्गदर्शनाच्च ॥ १७ ॥

"हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं न ददाति" इति सर्वस्व-दानपर लिङ्गदर्शनाच्च विश्वजित एव धर्मा नान्ये ॥ १७ ॥

प्रयोजनन्त्वनुष्ठानरूपं – पक्षयोस्स्पष्टम् ॥ ८ ॥

---

१ वैश्वजित्सु इति मातृकायां विद्यते।

(उभयतो विकाराधिकरणम्–९)

## विकारस्सन्नुभयतोऽविशेषात् ॥ १८ ॥ (पू)

विश्वजित्येव संदेहः–किं यस्य द्वादशशतं सिद्धमसंपूर्णं, तस्यापि विश्वजित्यधिकारः? उत यस्य सकलमधिकं वा तस्यैवाधिकारः? इति ॥

**विकारस्सन्**–विकारभूतो विश्वजित्, यस्य संपूर्णं द्वादशशतमसंपूर्णं द्वादशशतं वा, यस्याधिकं नास्ति धनं, तयोः **उभयतः**– उभयोरित्यर्थः । तयोः **अविशेषात्**–विश्वजिद्विधेयाधिकन्यूनधनौ द्वावपि पुरुषावधिकरोति । कुतः? **अविशेषात्**–विशेषाश्रवणात् ॥ १८ ॥

## अधिकं वा प्रतिप्रसवात् ॥ १९ ॥ (सि)

**वाकारः** पक्षव्यावर्तकः । यस्य द्वादशशतादधिकं धनमस्ति, तमेवाधिकरोति, न ततो न्यूनधनम् । कुतः? **प्रतिप्रसवात्**–अपि वा सर्वस्वे नेति द्वादशशते[1]नानतेषु सर्वस्वदानं [2]प्रसूयते । तस्मादधिकधनस्य विश्वजित्यधिकारः ॥

अथवा

**वाकारो** विकल्पार्थे । यस्य द्वादशतमधिकं नास्ति स एवाधिक्रियते नान्यः ॥ १९ ॥

## अनुग्रहाच्च पादवत् ॥ २० ॥

**चकारो** हेत्वन्तरसमुच्चयार्थः । **पादवत्**—यथा कार्षापणे दीयमाने, चतुष्पादत्वात्कार्षापणस्य पाददानमप्यनुगृहीतं भवति, तद्वदिहापि सर्वस्वदाने क्रियमाणे द्वादशशतस्याप्यनुग्रहात् अधिकधनस्यैवाधिकारः ॥ २० ॥

प्रयोजनन्त्वनुष्ठानरूपं नागाधम् ॥ ९ ॥

---

१ ... नानानतेषु इति साधु ।

२ प्रतिप्रसूयते इति स्यात् ।

(अपरिमाणाधिकरणम्—१०)

## [1]अपरिमाणे शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ २१ ॥

आधाने श्रूयते—"एका देया, षड्देयाः, द्वादश देयाः चतुर्विंशतिर्देयाः, शतं देयम् सहस्रं देयम् अपरिमितं देयम्" इति ॥

तत्र सन्दिह्यते — किमपरिमितदानमेकादिप्रतिषेधपरम्—परिमितं न भवतीत्य[2]परिमितमिति? उत अपरिमितन्नाम पूर्वोक्तादन्यत्, तस्य दानं विधीयते? इति ॥

अपरिमाणे—परिमाणाभावप्रतिपादके अपरिमितशब्दे श्रूयमाणे, पूर्वशिष्टस्य "एका देया" इत्यादिरूपस्य संख्येयस्य द्रव्यस्य प्रतिषेधः स्यात। कुतः? तच्छ्रुतित्वात्—एकेत्येवमादेस्तच्छ्रुतित्वात्—परिमितद्रव्यप्रतिपादकश्रुतित्वात्। तदयमर्थः—एकादिषु द्रव्यपरिच्छेदात्, अपरिमितशब्दे तद्व्यतिरिक्तार्थप्रतीतेस्तन्निषेधविधिरेवेत्य[3]र्थः ॥ २१ ॥

## कल्पान्तरं वा तुल्यवत्प्रसंख्यानात् ॥ २२ ॥ (सि)

वाकारः पक्षव्यावर्तकः। "अपरिमितं देय"मिति दानविधिः कल्पान्तरमेव स्यात, न निषेधः प्रागुक्तानाम्। कुतः? तुल्यवत्—तुल्यत्वेनैव प्रागुक्तैरेका देयेत्येवमादिभिरपरिमितस्यापि देयत्व प्रसङ्ख्यानात्—देय शब्दस्यैकादिष्विवापरिमितशब्दोपर्यपि श्रूयमाणत्वाद्दानविधौ श्रौतार्थानुग्रहाच्च दानविधिः कल्पान्तरं, न तु निषेध एकादीनामिति ॥ २२ ॥

प्रयोजनन्त्वनुष्ठानरूपं—केवलं दक्षिणानिषेधस्स्यात्पूर्वपक्षे, सिद्धान्ते तु न तथेति ॥ १० ॥

---

१ अपरिमिते ... क. ख.

२ ... त्यपरिमिति—इति मातृकायामस्ति।

३ इदं पुनरुक्तम्।

( अपरिमितनिर्णयाधिकरणम्—११ )

## अनियमोऽविशेषात् ॥ २३ ॥ (पू)

अपरिमितस्य दानविधिकल्पान्तरत्वे समधिगते सति; किमिदमपरिमितं सहस्रादूनम्? उत सहस्रादधिकम्? इति संदेहे सति—

अपरिमितशब्दे सहस्रादूनमधिकं वेति अविशेषात्—विशेषस्याश्रवणात्, दाने—अनियमः स्यात्, सहस्रादूनमधिकं वाऽपरिमितदानकल्पे देयमिति ॥ २३ ॥

## अधिकं वा स्याद्बह्वर्थत्वादि[1]तरैस्सन्निधानात् ॥ २४ ॥ (सि)

वाकारः प्रागुक्तानियमपक्षव्यावर्तकः । सहस्रादधिकमेव स्यात् अपरिमितदानकल्पे । कुतः? बह्वर्थत्वात्—देय द्रव्यबहुत्वप्रतिपादकशब्दत्वात् ... ... णत्व स्यात् पक्षिक ... ... ... ... माह, अस्यापरिमितत्वस्य इतरैः—एकादिभिस्सन्निधानात्—साहित्यात् । तदयमर्थः—अपरिमितशब्दस्य ... ... ... नि ... ... ये सति ... ... ... न सहस्रनम ... ... ... ... प्रसन्निषूदनात्तदपेक्षया बहुलं देयमिति ॥ २४ ॥

## [2]अर्थवादश्च तद्वत् ॥ २५ ॥

अधिकार्थत्वेऽपरिमित (शब्दस्य) ... ... णकौ ... ... ... कणान्तानां अक्षम ... ... यू ... ... तू अर्थ ... ... ... ... सहस्रान्तानां परिमितादूनत्वे । तस्मात्सहस्रादधिकमपरिमितमपरिमित दानकल्पे ॥ २५ ॥

प्रयोजनन्त्वनुष्ठानरूपं—नातीव गहनम् ॥ ११ ॥

---

१ ... ... दितरेषां सन्निधानात् क. ख.

२ अर्थवादश्च तदर्थत्वात् ख.

(परकृतिपुराकल्पाधिकरणम्–१२)

[1] परकृतिपुराकल्पौ मनुष्यधर्मस्स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥ (पू)

परकृतिपुराकल्पा उदाहरणम् । "इति ह स्माह वर्कुर्वार्ष्णिर्माषानेव मह्यं [2]पच, न वा एतेषां हविर्गृह्णन्ति" इति परकृतिः । "उल्मुकैर्ह स्म वै पूर्वे समाजग्मुः तान्यसुरा रक्षांसि जघ्नुः' इत्येवमादयः (पुराकल्पाः) ॥

तेषु सन्देहः — किमेते मनुष्यधर्मा विधयः ? उत तद्धोत्राणाम् ? उतार्थवादः ? इति ॥

तत्र परकृति पुराकल्पौ परकृति पुराकल्पप्रतीयमानौ माषपाकोल्मुकादानाख्यौ धर्मौ, मनुष्यधर्मस्स्यात् – मनुष्यमात्रेणानुष्ठेयौ स्यातामित्यर्थः । कुतः ? परकृतिपुराकल्पयोर्माषपाकोल्मुकग्रहणयोः पुरुषकीर्तनं अर्थाय स्यात्– अनुष्ठेयमाषपाकादिरूपस्य प्राशस्त्याय स्यात् । प्राशस्त्यबोधनमात्रार्थत्वात्पुरुषसङ्कीर्तनस्य, मनुष्यमात्रे धर्माविमौ विधिगतौ ॥ २६ ॥

[3]यद्युक्ते च प्रतिषेधात् ॥ २७ ॥

"तदु तथा न कुर्यात्" इति माषपाकवाक्यशेषे प्रतिषेधाच्च हेतोर्विधिरेव माषपाकोल्मुकादानयोः । उक्ते माषपाकादौ यदि विधित्वमङ्गीक्रियेत, तदा प्रतिषेधोऽर्थवान्, प्राप्तिपूर्वकत्वान्निषेधस्येत्यर्थः ॥ २७ ॥

निर्देशाद्वा तद्धर्मस्स्यात्पञ्चावत्तवत् ॥ २८ ॥

वाकारः प्रागुक्तपुरुषमात्राधिकारप्राप्तिपक्षव्यावर्तकः । माषपाकः तद्धर्मस्स्यात् – वृष्णितद्धोत्राणामेव धर्मस्स्यात्, न पुरुषसामान्यधर्मः । कुतः ?

---

१ परकृतिपुराकल्पश्च ...... कीर्तनम् क. ख.

२ पचत क. शतपथब्राह्मणञ्च एवमेवास्ति ।

३ तद्युक्ते च प्रतिषेधात् क. ख.

**निर्देशात्**—वट्कुर्वार्ष्णिरिति माषपाकवाक्ये कर्तृविशेषनिर्देशात् । तत्र दृष्टान्तः—पञ्चावत्तवत् इति । यथा "पञ्चावत्तं जमदग्नीनां" इति पुरुषविशेषसंबन्धाज्जमदग्निगोत्रोत्पन्नानामेव पञ्चावत्तं भवति नेतरेषां, तद्वदिहापीति ॥ २८ ॥

## विधौ तु वेदसंयोगादुपदेशस्स्यात् ॥ २९ ॥

तुना पक्षो व्यावर्त्यते विधौ तु—माषपाकविधावेव, वेदसंयोगात्—वेदाध्ययनात्, पुरुषविशेषक्रियासंबन्धस्य वाक्यीयत्वेन श्रौतापेक्षया दुर्बलत्वात् पुरुषमात्रपरत्वेन माषपाकोपदेशस्स्यात्, नतु वृष्णितद्गोत्रिकर्तृविशिष्टमाषपाकोपदेश इति ॥ २९ ॥

## [1]अर्थवादो वा विधिशेषत्वात् ॥ ३० ॥ (सि)

वाकारः प्रागुक्तसकलपक्षव्यावर्तकः । परकृति पुराकल्पवाक्यं अर्थवाद एव, न विधिपरम् । कुतः? विधिशेषत्वात्—"तस्मादारण्यमेवाश्नीयात्" इति दर्शपूर्णमासप्रकरणगतारण्याशनविधेः, "गृहपतेरेवाग्निषु निर्मथ्य निर्वपेर" न्निति गृहपतिनिर्मन्थ्यनिर्वापविधेश्च शेषत्वात्—शेषभूतत्वात् । अनयोरेव विधातृत्वे स्तावकत्वे च वचनवैरूप्यापातात्, इतरेतरश्चैकवाक्यताभावात् दार्शपूर्णमासिकप्रकरणगतविधिशेष एवेत्यर्थः ॥ ३० ॥

प्रयोजनन्त्वनुष्ठानरूपं—माषपाकोल्मुकग्रहणं नियमेन पूर्वपक्षे कर्तव्यम्, सिद्धान्ते तु न तथेति ॥ १२ ॥

(सहस्रसंवत्सराधिकरणम्—१३)

## सहस्रसंवत्सरन्तदायुषामसंभवान्मनुष्येषु ॥ ३१ ॥

(अस्ति) सहस्रसंवत्सरः क्रतुः "पञ्च पञ्चाशतस्त्रिवृतस्संवत्सराः, पञ्च पञ्चाशतः पञ्चदशाः, पञ्च पञ्चाशतस्सप्तदशाः, पञ्च पञ्चाशत एकविंशाः, विश्वसृजा " सहस्रसंवत्सरम्" इति ।

---

१ अर्थवादो वा विधिशेषत्वात्तस्मान्नित्यानुवादस्स्यात् क. ख.

तत्र संदेहः —

किं सहस्रायुषामेवाधिकारः? उत मनुष्याणाम्?

यदा तु मनुष्याणाम् – तदापि, किमनेकेषामधिकारः? इत्याद्याः पक्षाः? अथवा दिवसेषु संवत्सरशब्दः? इति।

सहस्रसंवत्सरं – सहस्रसंवत्सरानुष्ठेयं विश्वसृजामयनम्, तदायुषां – तत्समापनसमर्थसहस्रायुषां गन्धर्वादीनामेव स्यात्, न मनुष्याणाम्। कुतः? मनुष्येषु सहस्रायुष्यस्यासंभवादिति ॥ ३१ ॥

## अपि वा तदधिकारान्मनुष्यधर्मस्स्यात् ॥ ३२ ॥

अपिवेति – पक्षव्यावृत्तिः। मनुष्यस्यैव तदधिकारात् – तस्मिन्कर्मण्यधिकारात्, मनुष्याधिकारत्वाच्च शास्त्रस्य, स विश्वसृजामयनविधिः रसायनादिप्राप्तसहस्रायुर्मनुष्यधर्मः स्यात्, न गन्धर्वादीनाम् ॥ ३२ ॥

(मनुष्याधिकारत्वाक्षेपः)

## नासामर्थ्यात् ॥ ३३ ॥

यदुक्तं रसायनेन दीर्घमायुस्स्यादिति, तन्न। कुतः? असामर्थ्यात् – बलपुष्टिपलितनाशस्वरवर्णसाधकत्वेन दीर्घायुष्यसंपादने रसायनस्यासामर्थ्यात् – सामर्थ्यस्यादृष्टत्वादित्यर्थः ॥ ३३ ॥*

## सकुलकल्पस्स्यादिति कार्ष्णाजिनिरेकस्मिन्नसंभवात् ॥३४॥

सः – विश्वसृजामयनप्रयोगः, कुलकल्पस्स्यात् – यत्कुलसंभूतेनारब्धं विश्वसृजा(मयनं, तत्प्रयोगः त)त्कुलेनैव कल्पनीयस्स्यात् विश्वसृजामयनप्रयोग इति कार्ष्णाजिनिराचार्यो मेने। कुतः? विश्वसृजामयनस्य

*संबन्धादर्शनात् इत्येकमधिकं सूत्रं तद्व्याख्या चात्र क. ख. पुस्तकयोः उपलभ्येते, अत्र तु न।

सहस्रसंवत्सरस्य, एकस्मिन् पुरुषे कर्तरि समाप्त्यसंभवात्, पित्रादिभिरारब्धं विश्वसृजामयनं पुत्रपौत्रादिभिस्तद्वंशजैस्समापनीयमित्यर्थः ॥ ३४ ॥

[1]अपि वा कृत्स्नसंयोगस्स्यादेकस्यैव प्रयोगे मानम् ॥३५॥

अपि वेति पक्षव्यावर्तकमिदम्। कुलकल्पाधिकार इत्येतन्नोपपद्यत इत्यर्थः। कुतः? एकस्यैव पुंसः प्रयोगे—विश्वसृजामयनप्रयोगेऽधिकारः स्यात्। कुतः? यतः कारणात् कृत्स्नसंयोगः—कृत्स्नकर्मकर्तुरेव फलसंयोगस्स्यात्, तस्मादेव हेतोर्न कुलकल्पाधिकार इति ॥ ३५ ॥

[2]तन्न प्रमाणाभावात् ॥ ३६ ॥

यदुक्तं विश्वसृजामयनविधि प्रामाण्यात्तत्कर्म कुर्वतां मनुष्याणामेव तत्कर्मसमापनक्षमसहस्रायुष्ट्वं स्यादिति, तन्न प्रमाणाभावात्—विश्वसृजामयनं कुर्वतां सहस्रमायूंषि भवेयुरित्यत्र वाक्याद्यन्यतमप्रमाणाभावादिति ॥ ३६ ॥

[3]विप्रतिषेधाद्गुणादन्यतरस्स्यादिति लावुकायनः ॥ ३७ ॥

तुरेवकारार्थे। पञ्चपञ्चाशच्छब्दयोरन्यतर शब्दः गुणः स्यात्—गौण्या—अर्थ (बोधकस्स्यात्) कुतः? विप्रतिषेधात्—पञ्चपञ्चाशद्विशिष्टत्रिवृद्विधाने संवत्सरानन्वयात्, संवत्सरविशिष्टत्रिवृद्विधाने वा पञ्चपञ्चाशच्छब्दानन्वयात् इतरेतरविप्रतिषेधात्—विरोधात्, अन्यतरो वत्सरशब्दः पञ्चपञ्चाशच्छब्दो वा स्वार्थात्प्रच्युतस्सन् गुणार्थस्स्यात्। इतरथा अनुपपत्तिरेवेत्यर्थः ॥

संवत्सरो विचालित्वात् ॥ ३८ ॥

अन्यतरस्य गौणत्वे वर्ण्य(माने) संवत्सरः—संवत्सरशब्द एव गौणो

---

१ अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगस्स्यात् क. ख.

२ इदं शावरभाष्यवाक्यं सूत्रत्वेन परिकल्पितमत्र।

३ विप्रतिषेधाच्चु गुण्यन्यतरस्स्यादिति लावुकायनः क. ख. अत्रापि "तुरेवकारार्थे" इति व्याख्यायते, सूत्रेतु न "तुः"।

नेयः । कुतः? विचालित्वात् — सावन चान्द्रमस नाक्षत्रादिप्रभिन्नमास-प्रक्लृप्तत्वेन प्रभिन्नत्वात् – नानाकारत्वात् । अतस्संवत्सरशब्दे गौणी वृत्तिराश्रयणीया ॥ ३८ ॥

सा प्रकृतिस्स्यादधिकारात् ॥ ३९ ॥

यतो विश्वसृजामयनादीन् सत्रविशेषान्प्रति तत्र गवामयनं सा मुख्या प्रकृतिः, अतः कारणात्, तत्र "यो मासस्स संवत्सर" इति मासाधिकारात् – मासोपक्रमात्, तद्विकृतावस्मिन् विश्वसृजामयनेऽपि संवत्सरस्थाने मासा एव भवेयुः । संवत्सरपदन्तु नामधेयमित्येव व्याख्येयमिति ॥ ३९ ॥

अहानि वाऽभिसंख्यत्वात् ॥ ४० ॥ (सि)

प्रकृतिभूतगवामयनवत् मासस्यैव संवत्सरस्थानीयत्वात्, तावदायुषां (मनुष्याणां सं) भवात् तानधिकरोतीति यदभिहितं, तच्च सहस्रमासपक्षेऽपि तावतामायुषां, उपनयनवेदाध्ययनविवाहप्रजोत्पादाधानसोमाद्यनुष्ठानेनैव परिक्षिप्तप्रायत्वात् विश्वसृजामयनानुष्ठानौपयिकत्वाभावात् अवशिष्टकालस्य, [1]तदपि नोपपद्यत इति वाकारेण व्यावर्त्यते ॥

द्वादशाहस्य प्रकृतित्वमङ्गीकृत्य, "संवत्सरप्रतिमा वै द्वादश रात्रयः" इति लिङ्गस्य द्वादशाहगतस्यात्रापि प्राप्तत्वात् द्वादशरात्रा एव संवत्सरस्थानीया इत्येतदपि द्वादशरात्राणां साक्षात्संवत्सरत्वप्रतिपादकवाक्याभावा (द्रात्रिशब्दस्य) प्रतिमाशब्देन व्यवधानादपि नोपपद्यत इत्यर्थः ॥

संवत्सरशब्देन अहान्येवोच्यन्ते । कुतो हेतोः? अभिसंख्यानात् – "अहरेव संवत्सर" इति प्रत्यक्षवचनेन वैश्वसृजामयनिकेनाभिवर्णनात् । तस्मात्सहस्रमहान्येव सहस्रसंवत्सरशब्देनोक्त चतुर्विधमासप्रभिन्नास्संवत्सराः, मासाः, द्वादशरात्रा वा संवत्सरशब्देनोच्यन्त इत्यर्थः ॥ ४० ॥

---

1 इदं पुनरुक्तम्

प्रयोजनन्त्वनुष्ठानरूपं—अतिविशदमेव विदुषाम्। अतो ना ……… त्वात् न विलिख्यते ॥ १३ ॥

इति जैमिनिसूत्रवृत्तौ फलवल्यां षष्ठस्याध्यायस्य सप्तमः पादः ॥

---

## षष्ठस्याध्यायस्याष्टमः पादः

---

( चतुर्होतृहोमेष्वनाहिताग्नेरेवाधिकाराधिकरणम्—१ )

[1]इष्टिपूर्वत्वात्क्रतुशेषो होमस्संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥ (पू)

चतुर्होतृष्वाम्नायते—"प्रजाकामं याजयेच्चतुर्होत्रा, चतुर्गृहीतमाज्यं गृहीत्वा चतुर्होतारं व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयात्, उत्तरेणार्धम्" इति ॥

तत्र संदेहः—किं पवमानेष्टिसंस्कृतेष्वग्निष्वेवमादयो होमाः? उतासंस्कृतेष्वग्निषु? इति ॥

तत्र प्रकृतश्चतुर्होतृहोमः क्रतुशेषः स्यात्। कुतः? सर्वेषां होमानां इष्टिपूर्वत्वात्—इष्ट्युत्तरकालानुष्ठेयत्वात् संस्कृतेषु—आधान पवमान संस्कृतेषु आहवनीयादिष्वेव चतुर्होतृहोमस्स्यात्। यद्यप्ययं चतुर्होतृहोमः अपूर्वयाव ……… ति—कर्तव्यता …… आहवनीयादीन्नाक्षिपति, तथापि आधानस्य सर्वशेषत्वात्—सर्वार्थत्वात्, सर्वार्थत्वनिर्वाहार्थमाहवनीयादीनाकाङ्क्षतीत्यर्थः ॥ १ ॥

इष्टित्वेन तु [2]संस्तुतिश्चतुर्होतॄनसंस्कृतेषु दर्शयति ॥ २ ॥

तुना पक्षो व्यावर्त्यते। "एष वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारः" इत्यनाहिताग्निकर्तृकस्य चतुर्होतृहोमस्य, इष्टित्वेन—इष्टितुल्यत्वेन संस्तुतिः—

---

१ इष्टिपूर्वत्वादक्रतुशेषो …… सर्वशेषत्वात् क. ख.

२ इष्टित्वेन तु संस्तवः …… दर्शयति क. ख.

स्तोत्रम्, असंस्कृतेष्वग्निष्वेव चतुर्होतॄन् ... ... ... दर्शयति, न त्वाधान-पवमानसंस्कृतेष्वाहवनीयादिष्विति ॥ २ ॥

[1]उपदेशस्तत्पूर्वत्वात् ॥ ३ ॥

"एषा वा अनाहिताग्नेः क्रिया" इत्यनाहिताग्निना कर्तव्यत्वावगमा-च्चतुर्होतृहोमे उपदेशः – विधिरेव । कुतः? तत्पूर्वत्वात् – तद्वाक्यार्थवत्त्वस्य विधिपूर्वत्वात् । विधित्वे सत्यर्थवत्त्वम् । अर्थवादत्वे त्वानर्थक्यं स्यादित्यर्थः ॥३॥

[2]सर्वेषामविशेषात् ॥ ४ ॥

अक्रतुशेषाणामयं विधिरिति नोपपद्यते । किन्तु सर्वेषाम् – क्रतुशेषाणा-मक्रतुशेषाणाञ्च चतुर्होतृहोमानां विधिः । कुतः? अविशेषात् – अक्रतु-शेषाणामयं विधिः, न क्रतुशेषाणामिति विशेषादर्शनात्साधारणविधिरित्यर्थः ॥

अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥ ५ ॥

अपि वेति पक्षव्यावृत्तिः । अनाहिताग्नेः आधानाभावेन क्रत्व-भावात् – क्रत्वनुष्ठानाभावात्, अशेषभूतनिर्देशः – [3]क्रत्वशेषभूतस्य चतुर्होतृ-होमस्य निर्देशः – विधिरित्यर्थः । अनाहिताग्नेरेव स्यात्, न तु साधारण्ये-नाहिताग्न्यनाहिताग्निविषय इति ॥ ५ ॥

जपो वानग्निसंयोगात् ॥ ६ ॥

"चतुर्होतारं व्याचक्षीत" इति जप एव वा विधेयः, न तु चतुर्होतृ-होमः । कुतः? अनाहिताग्नेः अनग्निसंयोगात् – अनाहवनीयादिसंयोगात् । होममात्रस्याहवनीयसंबन्धादस्याप्याहवनीयान्वय एवेति नानाहिताग्नेर्होमविधिः । जपविधित्वन्तु तस्योपपद्यत इति ॥ ६ ॥

---

१ उपदेशस्त्वपूर्वत्वात् क. ख.　　२ स सर्वेषामविशेषात् क. ख.

३ क्रतुशेषभूतस्य इत्येव मातृकायां वर्तते । सौत्रपदानुरोधाय "क्रत्वशेष-भूतस्य" इत्यस्माभिर्लिखितम् ।

[1]इष्टित्वेन तु संस्तुते होमस्स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥

तुना पक्षो व्यावर्त्यते। होमानां अनारभ्याग्निसंयोगात्—"यदाहवनीये जुहोति" इत्यनारभ्याधीताहवनीयाग्निसंबन्धात्, संस्तुते—आधानपवमानसंस्कृते आहवनीयादिवह्नावेव होमस्स्यात्, इति यदुक्तम्; तन्नोपपद्यते। कुतः? इतरेषाम्—अक्रत्वर्थानां चतुर्होत्रादीनां होमे कर्तव्ये सति, अनाहिताग्निविषयत्वेनाहवनीयस्य अवाच्यत्वात्—अवक्तव्यत्वात्। इष्टित्वेन—इति तृतीयान्तः पदच्छेदः। पुनरपि चतुर्होतृहोमविधौ सत्येव इष्टित्वेन चतुर्होतृस्तुतिरुपपद्यते, न जपविधिः। अतो लौकिकाग्नावेव होम इति ॥ ७ ॥

उभयोः पितृयज्ञवत् ॥ ८ ॥

चतुर्होतृहोमे उभयोः—आहिताग्न्यनाहिताग्न्योः अधिकारस्स्यात्। कुतः? अनुवादविधिपक्षयोराहिताग्न्यनाहिताग्निप्राप्तेरित्यर्थः। तत्र दृष्टान्तः—पितृयज्ञवत्—इति। यथा पिण्डपितृयज्ञे आहिताग्न्यनाहिताग्न्योरुभयोरप्यधिकारः, तद्वदत्रापीति ॥ ८ ॥

निर्देशो वाऽनाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥

वाकारः पक्षव्यावर्तकः। अनारभ्याग्निसंयोगात् आहिताग्नेरेवाधिकार इत्येतन्नोपपद्यते। कुतः? "अनाहिताग्नेरिष्टिः" इति अनाहिताग्नेरेव चतुर्होतृहोमनिर्देशात् अनाहिताग्नेरेवेति ॥ ९ ॥

[2]पितृयज्ञे तु संयुक्तस्य तु पुनर्वचनम् ॥ १० ॥

तुना पितृयज्ञदृष्टान्तो व्यावर्त्यते। यदुक्तं पितृयज्ञे आहिताग्न्यनाहिताग्न्योरधिकारवदिति, तत्परिहारार्थं; पितृयज्ञे—पिण्डपितृयज्ञे विशेषात्

---

१ इष्टित्वेन संस्तुते ... ... मवाच्यत्वात् ख.

२ पितृयज्ञे संयुक्तस्य पुनर्वचनम् क. ख.

... ... ... ... द्वितीयः तुः हेत्वर्थे। तत्र अग्निसंयुक्तस्य पितृयज्ञस्य, अनाहिताग्निसंबन्धार्थमनाहिताग्निनापि कार्य इति पुनर्वचनम्, नात्र तादृशाप्यादियोग इति ॥ १० ॥

प्रयोजनन्त्वनुष्ठानरूपं – पक्षयोर्विशदम् ॥ १ ॥

( उपनयनाङ्गहोमानां लौकिकाग्नावनुष्ठानाधिकरणम्–२ )

[1]उपयन्नादधीत होमसंयोगात् ॥ ११ ॥ (पू)

इदं श्रूयते – "[2]उपयंस्तिसृभिर्जुहुया"दिति ॥

तत्र संदेहः — किमयं होमः आधानपवमानसंस्कृतेऽग्नौ स्यात्? उत लौकिकाग्नौ इति ॥

[3]"उपयंस्तिसृभिर्जुहुयात्" इत्यत्र उपनयनेऽधिकृतः आदधीत– अग्न्याधानं कुर्यात्। कुतः? होमसंयोगात् – "यदाहवनीये जुहोती"ति ... ... ... ... ... ... स्य कृत्स्नहोमसंबन्धात्। तस्मान्न पूर्ववल्लौकिके होम इति ॥ ११ ॥

[4]स्थपतिवल्लौकिके वा विद्याकर्मानुपूर्व्यत्वात् ॥ १२ ॥ (सि)

वाकार एवकारार्थे। लौकिके वा – लौकिक एव वह्नावुपयद्धोमाः। कुतः? आधानस्य विद्याकर्मानुपूर्व्यत्वात् – विद्याकर्म–वेदग्रहणम्। तदनन्तरमानुपूर्व्या अध्ययनं, स्नानं, विवाहः, प्रजोत्पादः, आधानम्, इत्यानुपूर्वीप्राप्तत्वादित्यर्थः। अतोऽध्ययनात्प्राक् दारसंग्रहाभावादीदृशा लौकिक एव कर्तव्याः। तत्र दृष्टान्तः – स्थपतिवत् – इति। यथा "एतया निषादस्थपतिं

---

१ उपनयन् ... ... क. ख.

२ उपनयन् ... ... क. ख.

३ उपनयन् ... क. ख.

४ स्थपतीष्टिवत ... पूर्व्यत्वात् क. ख.

याजयेत्" इत्यत्र लौकिक एव वह्नौ तत्कर्तृकक्रियाः, तद्वदिहाप्यध्ययनात्प्राग-विद्यत्वेन शूद्रतुल्यत्वान्नाधानसंभवः ॥ १२ ॥

*

[1]कर्म चोर्ध्वमाधानात्समवायो हि कर्मभिः ॥ १३ ॥

यदुक्तमकृतदारत्वेन ब्रह्मचारिण आधानेऽनधिकाराल्लौकिक एव होम इति, तन्नोपपद्यते । हिर्हेतौ । यस्मात् कर्मभिः—उपनयद्धोमादिक्रियाभिः, आधानस्याभिसमवायः—स्वार्थेन संबन्धस्स्यात्, अतः कारणात्, उपनय-नात्पूर्वमपि कर्मार्थं दारानुपसंगृह्याग्नीनाधायोपनयनादिकर्माणि कुर्यात् । एवञ्चेत्क्रमिकदारग्रहणन्न स्यादित्यतोत्तरम्—आधानात्—[2]उपयोगात्पूर्वं कृतात् ऊर्ध्वं—विद्यास्नानानन्तरं ये दारा आनुपूर्व्या प्राप्तास्तेषां दाराणां अकर्म—अकर्मार्थता स्यात् । आधानोत्तरभावि भार्यासंग्रहणं रत्यर्थमेव स्यात्, न कर्मार्थ-मित्यर्थः ॥ १३ ॥

श्राद्धवदिति चेत् ॥ १४ ॥

श्राद्धवत्—पिण्डपितृयज्ञवत् । पिण्डपितृयज्ञे, आहिताग्न्यनाहिताग्न्यधि-कारवदिहाप्युभयोः कालयोर्दारसंग्रहस्स्यात् इति पश्यसि चेत् इति पक्षानु-वादार्थमिदं सूत्रम् ॥ १४ ॥

न श्रुति विप्रतिषेधात् ॥ १५ ॥

नेति सूत्रा ... दि ... व्यावर्त्यते । नैव द्विर्दारसंग्रहस्स्यात् । कुतः? श्रुतिविप्रतिषेधात्—उपनयनात्प्रागुपयमे वर्णिते, (स्नानं) कृत्वा भार्या-मधिगच्छेदित्युपनयनविद्यास्नानोत्तरकालं विवाहं विदधत्याश्श्रुतेर्विप्रतिषेधो विरोधस्स्यात् । एवं सति ... ... त्युक्तं नोपपद्यते ॥ १५ ॥

---

* अत्र 'आधानञ्च भार्यासंयुक्तम्' इत्येकं सूत्रं, तद्व्याख्या च क. ख. अस्यान्तु मातृकायां नोपलभ्यते ।

१ अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः क. ख.

२ उपनयनात् इति स्यात् ।

[1] सर्वार्थत्वाच्च पुत्रार्थेऽनुप्रयोजयेत् ॥ १६ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । स्नानोत्तरकालीनाया एकस्या एव भार्यायाः सर्वार्थत्वात् – धर्मकामार्थत्वात्, तामेव पुत्रार्थे – प्रजा ... ... पत्यार्थे अनुप्रयोजयेत् ... ... ... ... तस्मान्न द्विर्दारसंग्रहः ॥ १६ ॥

सोमपानात्तु प्रापणं द्वितीयस्य [2] तदुपयच्छेत ॥ १७ ॥

यदुक्तं न द्विर्दारसंग्रह इति, तन्नोपपद्यते, अपि तु प्रागुपनयनादुपयमनम् । कुतः ? "सोमपीथेन द्वितीयां भार्यामभ्यश्नुते" इति सोमपानवाक्यात् द्वितीयस्य दारसंग्रहस्य प्रापणं प्रतीयते । तत् – तस्मात् उपयच्छेत द्वितीयाम् । "धर्मप्रजाऽन्यतरापायेऽन्यां भार्यां स्वीकुर्यात्" इत्यादिभिश्च द्वितीयोपयमसिद्धेः, न द्विर्दारसंग्रहानुपपत्तिरित्यर्थः ॥ १७ ॥

[3] पितृयज्ञे तु दर्शनात्प्रतीयेत ॥ १८ ॥

यदुक्तं पितृयज्ञवदुभयोः कालयोर्दारसंग्रह इति, तत्परिहारार्थमिदं सूत्रम् । तुः पक्षव्यावर्तकः । पितृयज्ञे – पिण्डपितृयज्ञे, "अप्यनाहिताग्निना कर्तव्यः" इति विशेषवचनदर्शनात् उभयाधिकारः प्रतीयेत, नत्वत्र तादृशं विशेषवचनं, यत उभयोः कालयोः कर्मार्थरत्यर्थोपयमनद्वयं स्यादिति ॥ १८ ॥

प्रयोजनन्त्वनुष्ठानरूपं — उपनयनात्प्राग्दारसंग्रहे आधाय जुहुयात्, सिद्धान्ते तु नेति ॥ २ ॥

---

१ ... पुत्रार्थो न प्रयोजयेत् क. ख.

२ ... तस्मादुपयच्छेत् क. ख.

३ पितृयज्ञे तु दर्शनात्प्रागाधानात्प्रतीयेत क. ख.

(स्थपतीष्ट्यधिकरणम्–३)

## स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजये[1]त्तादर्थ्यादपवृज्येत ॥ १९ ॥ (पू)

"एतया निषादस्थपतिं याजयेत्" इति विहिता स्थपतीष्टिः किमाधान-पवमानसंस्कृते वह्नौ स्यात्? उत लौकिक एव? इति संदेहे सति :—

तत्र स्थपतीष्टिः प्रयाजवत्—चोदकप्राप्तदार्शपूर्णमासिक प्रयाजवत्, आतिदेशिकहोमानां स्थपतीष्टिं प्राप्तानामाहवनीयेन विनानुपपत्तेस्तत्सिद्ध्यर्थं अग्न्याधेयं प्रयोजयेत् ... ... लौकिकाग्नौ होम इत्यर्थः । चकारो हेत्वन्तरार्थः । आधानस्य तादर्थ्यात्—स्थपतीष्ट्यर्थत्वाच्च, स्थपतीष्ट्यन्ते आधानपवमानसिद्धाहवनीयादि ... ... ... ... अपवृज्येत—कर्मान्ते लौकिक-स्स्यादित्यर्थः १९ ॥

## अपि वा लौकिकेऽग्नौ स्यादाधानस्य [2]सर्वशेषत्वात् ॥ २० ॥

अपि वेति पक्षव्यावृत्तिः क्रियते । लौकिकाग्नावेव स्थपतीष्टि-स्स्यात् । कुतः? आधानस्य सर्वशेषत्वात्—सर्वकर्मशेषाहवनीयाद्यङ्गत्वात् न कर्माङ्गत्वम्, यत आतिदेशिकप्रयाजवद्विकृतौ स्थपतीष्टावपि स्यात्, तादृशं नोपपद्यत इत्यर्थः ॥ २० ॥

प्रयोजनन्त्वनुष्ठानरूपम्–वैदिकलौकिकाग्न्यनुष्ठानभेदेन द्योतितम् ॥ ३ ॥

(अवकीर्णिपश्वधिकरणम्–४)

## अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ २१ ॥ (सि)

"ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत" इति श्रुतम् ॥

---

१ ... तादर्थ्याच्चापवृज्येत क. ख. अत्रापि व्याख्या तथैव।

२ .... आधानस्यासर्वशेषत्वात् क. ख.

तत्र संदेहः—किमवकीर्णिपश्वर्थमाधानं ... ... ... ...? ... ... लौकिके-ऽग्नावेवात्रावकीर्णिपशुः कर्तव्यः? इति ॥

अवकिरणनिमित्तकः अवकीर्णिपशुश्च तद्वत्—स्थपतीष्टिवल्लौकिके-ऽग्नावेव स्यात्, नाहवनीयादौ। कुतः? आधानस्याप्राप्तकालत्वात्—ब्रह्मचारिणो विद्यावत्त्वेनाधानसंभवेऽपि, स्नानदारसंग्रहोर्ध्वकालीनस्य स्नानात्प्राक् अप्राप्तकालत्वात्—अप्राप्तक्रमत्वादित्यर्थः ॥ २१ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—वैदिकलौकिकाग्न्यनुष्ठानभेदेन स्यात् ॥ ४ ॥

( उदगयनाधिकरणम्—५ )

## उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थ-दर्शनात् ॥ २२ ॥ (सि)

इह दैवानि कर्माण्युदाहरणमुपनयनादीनि ॥

तत्र संदिह्यते—किमनियतकाले दैवानि कर्माणीदृशानि कर्तव्यानि? उतोद-गयनादिषु नियमेन? इति ॥

अनियतकालेऽनुष्ठानप्राप्तौ सत्यां, एतानि दैवानि—चौलोपनयना-दीनि, उदगयनपूर्वपक्षाहःपुण्याहेषु भवन्ति, नत्वनियतकालेषु। कुतः? स्मृतिरूपान्यार्थदर्शनात्—"उदगयन आपूर्यमाणपक्षे" इति स्मृतितः, "एतद्वै देवानां रूपं यदुदगयनपूर्वपक्षाहः" इत्येवंरूपार्थवादस्य, पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणां—अपराह्णः पितृणाम्" इति अन्यार्थ वाक्यस्य च दर्शनात्—स्मृतिरूपार्थवादान्यार्थवादवाक्यदर्शनाचोदगयनादिष्वेव दैविककर्मा-नुष्ठानं, नान्यथा ॥ २२ ॥

## अहनि च कर्मसाकल्यम् ॥ २३ ॥

चकारो हेत्वन्तरार्थः। यस्मात् अहनि कर्मसाकल्यम्—कृत्स्न-कर्मानुष्ठानं सुकरं तस्माच्च हेतोरहन्येव दैवानि, न रात्रौ ॥ २३ ॥

[1]इतरेषु तु पित्र्याणि ॥ २४ ॥

पित्र्याणि—श्राद्धादीनि, इतरेषु—उदगयनादिभ्य(तिरिक्तेषु अ)पर-पक्षापराह्णादिषु स्युः। नियतकालतैतेषाञ्चेत्यर्थः ॥ २४ ॥

प्रयोजनन्त्वनुष्ठानरूपं ... ... ॥ ५ ॥

(याच्ञाक्रयणाधिकरणम्—६)

याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २५ ॥ (पू)

ज्योतिष्टोमे श्रूयते—"द्वादश रात्रीर्दीक्षितो (भृतिं वन्वीत)" इति। तथा "सोमं क्रीणाति" इति ॥

तत्र संदेहः—किं यस्य भृतिसोमौ न विद्येते, तेनैव भृतिवनन-सोमक्रयणे कर्तव्ये? उतोभयमपि सति चासति च कर्तव्यम्? इति ॥

तत्र याच्ञाक्रयणं—भृतिवनन सोमक्रयणमिदमुभयमपि, अविद्य-माने— ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... तत्र दृष्टान्तः—लोकवदिति। यथा लोके निर्धन एव द्रव्यं याचते नान्यः, तद्वदिति ॥ २५ ॥

नियतं वाऽर्थवत्त्वात्[2] ॥ २६ ॥ (सि)

वाकारः पक्षव्यावर्तकः। ज्योतिष्टोमे नियतं—नित्यमेवाङ्गं याच्ञाक्रयणं न तु नैमित्तिकम्। कुतः? अर्थवत्त्वात्—ज्योतिष्टोमे नियतसंबन्धे सत्येव नित्यवदाम्नानस्यार्थवत्ता भवति। नैमित्तिकत्वे नित्यवदाम्नानविरोधात्, अशाब्द-लौकिकद्रव्यार्जनातुल्यत्वाच्छाब्दयाच्ञाक्रयणयोरित्यर्थः ॥ २६ ॥

प्रयोजनन्त्वनुष्ठानरूपं—पक्षयोर्विशदम् ॥ ६ ॥

---

१ इतरेषु पित्र्याणि क. अस्य सूत्रस्य पृथगधिकरणत्वम् क. ख.

२ नियतं वार्थवत्त्वात्स्यात् क. ख.

(भक्षप्रैषाधिकरणम्—७)

## तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ २७ ॥ (सि)

ज्योतिष्टोमे श्रूयते—"पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य" इति ॥

तथा—दर्शपूर्णमासयोः प्रैषः—"प्रोक्षणीरासादय, इध्माबर्हिरुपसादय स्रुवञ्च स्रुचश्च संमृड्ढि, पत्नीं सन्नह्य, आज्येनोदेहि" इति ॥

तथा वाजपेये श्रुतम्—दर्भमयं वासो भवति" इति ॥

पशौ श्रुतम्—संज्ञप्तहोमं जुहोति यत्पशुर्मायुमकृते"ति[1] ॥

तथा—"योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः" इति द्वेषः ॥

इमान्युदाहरणम् ।

तेषु संदेहः—

किं यस्य वस्त्वन्तरं नास्ति स पयोव्रतादि कुर्यात्? उत विद्यमानेऽपि? ।

तथा—योऽप्यप्रेषितस्सन्न प्रतिपद्यते तं प्रति प्रैषः? उत प्रतिद्यमानेऽपि?

तथा—यस्य तान्तवं वसनं नास्ति, स दर्भमयं परिदधीत? उत विद्यमानेऽपि?

तथा—यस्य पशुर्मायवादि कुर्यात, तत्रैव संज्ञप्तहोमः? उत अकरणेऽपि?

तथा यस्य द्वेष्योऽस्ति स इमं मन्त्रं ब्रूयात्? उत अविद्यमानेऽपि? इति

भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम्—पयोव्रतादिभक्षः, प्रोक्षणीरासादये त्यादिप्रैषः, दर्भमयं वास आच्छादनम्, यत्पशुर्मायुमकृतेति संज्ञप्तहोमः, योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म इति द्वेषमा ... ... ... ... ... ... भावः, तदेतत् तथा—याच्ञाक्रयणवदेव नित्यं भवति । तदयमर्थः—भक्षान्तरे सत्यपि

---

१ अत्र इतिकरणमावश्यकम् । विद्यमानः "इति" शब्दः वेदवाक्यावयवभूतः ।

पयोव्रतम्, ज्ञातप्रेषणीयानुष्ठानेऽपि प्रेषः, सत्यपि वा ... ... ... ... ... दर्भाच्छादनम्, माघ्यादिनिमित्तेऽसत्यपि संज्ञप्तहोमः, असत्यपि भ्रातृव्ये द्वेषमन्त्रश्च, नित्यं क्रतुना संबध्यते, नित्यवदाम्नानोपपत्तेरित्यर्थः[1] ॥ २७ ॥

प्रयोजनन्त्वनुष्ठानरूपं – कादाचित्कमि ... ... ... ... ... ष्टम् ॥ ७ ॥

(अनर्थकव्रतानित्यताधिकरणम् –८)

## [2]अनर्थकश्च नित्यं स्यात ॥ २८ ॥ (सि)

ज्योतिष्टोमे श्रूयते – "मध्यंदिनेऽपररात्रे व्रतं व्रतयति" इति ॥

तत्र संदेहः – किमेतदपररात्रे व्रतमर्थ ... ... ... ... ... नियतमिति ॥

चकार एवकारार्थः। ज्यौतिष्टोमिकं नित्यं – पयोव्रतादि, अजरयत् – अजीर्णयत्सत् अनर्थकश्चेत् यजमानस्य, तदपि नानुष्ठेयम्; कर्मविघ्नापत्तेरिति। कालान्तरानुष्ठाने च वचनाभावः ॥ २८ ॥

प्रयोजनन्त्वनुष्ठानरूपं – अवश्यमनर्थकश्चेदप्यनुष्ठेयं पूर्वपक्षे, सिद्धान्ते तु लोप एवेति ॥ २८ ॥

(पशुचोदनाधिकरणम् –९)

## पशुचोदनायामनियमोऽविशेषात् ॥ २९ ॥ (पू)

ज्योतिष्टोमे श्रूयते – "यो दीक्षितो यदग्नीषोमीयं [3]पशुमालभते" इति ॥

तत्र संदिह्यते – किं यः कश्चित्पशुरालब्धव्यः? उत छाग एव? इति ॥

यद्यपि शाखान्तरे "अजोऽग्नीषोमीय" इति विशदमाम्नातं, तथापि शाखाभेदेन कर्मभेद इति कृत्वा चिन्त्यते ॥

---

१ इदं पुनरुक्तम्।

२ अनर्थकन्त्वनित्यं स्यात् क. ख. पाठ एव साधीयान्।

३ पशुमालभेत इति मातृकापाठः

अग्नीषोमीय पशुचोदनायाम् – पश्वालम्भे, अनियमस्स्यात् – यस्य कस्यचित्पशोरालम्भस्स्यादनियमेन। कुतः? अविशेषात् – पशुत्वस्य पशुना सह संबन्धे विशेषादर्शनादित्यर्थः ॥ २९ ॥

## [1]छागो वा मन्त्रलिङ्गात् ॥ ३० ॥ (सि)

वाकारः पक्षव्यावर्तकः। छाग एव [2]आलब्धव्यस्स्यात्, न पशुमात्रम्। कुतः? 'छागस्य वपाया मेदस' इति मन्त्रवर्णात्। मन्त्रवर्णेन छागस्यैवालब्धव्यत्वप्रतीतेरित्यर्थः ॥ ३० ॥

## न चोदनाविरोधात् ॥ ३१ ॥

यदुक्तं मन्त्रवर्णाच्छाग एव नियम्यत इति, तन्न। कुतः? चोदनाविरोधात् – 'अग्नीषोमीयं पशुमालभेत' इति चोदनया सह मन्त्रवर्णविरोधात्। तदयमर्थः – चोदनालिङ्गविरोधे चोदनाया बलवत्तरत्वान्न मन्त्रलिङ्गस्य विध्युन्नायकत्वम् ॥ ३१ ॥

## आर्षेयवदिति चेत् ॥ ३२ ॥

'आर्षेयं वृणीते' इति सामान्यविहिते वरणे यथा 'त्रीन् वृणीते' इति नियमः, तद्वदत्रापि सामान्यविहितपशुचोदनायां मन्त्रवचनेन छाग एव नियम्यत इति पश्यसि चेत् – असूत्रारूढपक्षानुवादः ॥ ३२ ॥

## न तत्र ह्यचोदितत्वात् ॥ ३३ ॥

यदुक्तमार्षेयवदिति – तन्न। हिर्हेतौ। तत्र चोदितत्वादार्षेयवरणस्य त्रीन् वृणीत इति (विशेषवच)नस्य च श्रुत्या विहित ... ... ... ... उभयोः। अत्र तु प ... ... ... ... ... नवच्छागचोदनाभावात्, मन्त्रस्य चाविधायकत्वान्नातो विधानमित्यर्थः ॥ ३३ ॥

---

१ छागो वा मन्त्रवर्णात् क. ख. अत्रापि व्याख्या तथैव।

२ आलब्धस्स्यात् – इति मातृकापाठः।

नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभिधानात् ॥ ३४ ॥

वाकारः पक्षं व्यावर्तयति। यतः पशुच्छागशब्दयोरैकार्थ्यं — आ ... ... सामानाधिकरण्यं वर्तते, अतो हेतोः ... ... ... ... ... ... ... ... ... ... ... ... ... अश्वादीनामपि पशुशब्दवाच्यत्वाविशेषाद्यस्यकस्यचिदालम्भप्राप्तौ, छागशब्देन व्यवस्थाप्यते, नियम एव नार्थान्तरम्। इतरस्मि ... ... ... क्षपशुच्छागशब्दयोः पृथक्त्वेनाभिधानात् — पार्थक्येनाभिधानाद्धेतोः अर्थभेदो हि भवेत्। अर्थभेदे च सति पशुच्छागयोस्सामानाधिकरण्याभावादश्वादीनाश्वालम्भोऽनियमेन स्यादिति ॥ ३४ ॥

अनियमो वार्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥ ३५ ॥

वाकारः प्रागुक्तपक्षव्यावर्तकः। यः कश्चित्पशुरालब्धव्य इत्यनियम एव स्यात्, न तु छागवचनेन नियम इति। कुतः? अर्थान्तरत्वात् पशुच्छागयोः कथमर्थान्तरत्वम्? व्यतिरेकशब्दभेदाभ्याम् — छागशब्द उच्चरिते पशुसामान्यस्याभानात्, पशुशब्दोच्चारणे च च्छागाप्रतीतेरर्थव्यतिरेकः पशुच्छागशब्दयोः। पर्यायत्वे पुनरुक्तयापातादर्थभेदे सत्येव शब्दभेद इत्यपौनरुक्त्यमिति शब्दभेदः। ताभ्यां हेतुभ्यां पशुशब्दस्यान्य एवार्थ इति कृत्वा यस्यकस्यचिदालम्भस्स्यात् ॥ ३५ ॥

[1]न वा प्रयोगसमवायित्वात् ॥ ३६ ॥

वाकारः प्रागुक्तपक्षव्यावर्तकः। नैवानियमेन यस्यकस्यचित्पशोरालंभः। कुतः? प्रयोगसमवायित्वात् — प्रयोगवचनोपगृहीतमन्त्रवर्णस्य च्छागशब्दस्य कर्मसमवेत पशुरूपद्रव्यं प्रति स्मारकत्वेनैकार्थ्यहेतुना पशुपदेन समवायित्वात् — अन्वितत्वात्, चोदनामन्त्रगतयोः पशुच्छागपदयोर्नार्थव्यतिरेकश्शब्दभेदवत् ॥

---

१ इदं सूत्रं शाबरभाष्येऽनुल्लिखितं, परन्तु वार्तिककारेणोदाहृतमिति तन्त्ररत्ने। क. ख. पुस्तकयोर्नास्ति।

## [1]मन्त्रस्यापाक्षिकत्वात् ॥ ३७ ॥

यदि चोदनागतपशुपदानुग्रहार्थं पशुपदलिङ्गकमन्त्रान्तरानयनं कार्य-मित्युच्येत, तन्नोपपद्यते । कुतः? मन्त्रस्य अवैकल्पिकत्वेनापाक्षिक-त्वादित्यर्थः ॥ ३७ ॥

## [2]रूपलिङ्गाच्च ॥ ३८ ॥

चकारो विशेषाशङ्कार्थः । छाग एव पशुशब्दार्थो नियम्यत इत्येत-न्नोपपद्यते । अश्वस्याप्यालम्भस्स्यात् । कुतः? 'मुष्करा भवन्ति' इति मुष्कररूपपशुप्रतिपादकाल्लिङ्गाच्च च्छिन्नगमनोऽश्व एव च्छागशब्देनोच्यते, नतु प्रसिद्धश्छाग एव, यतः पशुपदं प्रसिद्धच्छागार्थे नियम्येत । अन्यत्रापि यौगिकार्थोपादाने सत्यश्वाभिधानं स्यादिति ॥ ३८ ॥

## [3]छागेऽकर्माख्या रूपलिङ्गाभ्याम् ॥ ३९ ॥

यदुक्तं छिन्नगमनेऽश्वादौ च्छागशब्द इति, तन्नोपपद्यते । कुतः? छागे अकर्माख्या—छिन्नगमनरूपकर्माख्या न भवति । कुतो हेतोः? रूप-लिङ्गाभ्याम्—लक्षण ... ... रूढिर्योगमपहरतीति रूपम् । छागशब्दो वयोविशिष्टां छागजातिमेव ब्रूत इति शब्दस्य सामर्थ्यम् । ताभ्यां हेतुभ्यां न क्रियावचन-श्छागशब्द इति च्छागस्यैवालम्भो नाश्वादेः ॥ ३९ ॥

## [4]रूपान्यत्वाद्वर्णवज्जातिशब्दस्स्यात् ॥ ४० ॥

यदि च्छागशब्दस्य वयोवचनत्वात्तद्वयांसोऽश्वादयोऽपि च्छागशब्देनाभि-धीयन्त इति तेषामप्यालम्भोऽनियमेन स्यादिति; तदुत्तरम्—न केवलं वयोमात्र-

---

१ इदं सूत्रं क. ख. पुस्तकयोर्नास्ति, शाबरभाष्यवाक्यमिदमस्यां मातृकायां सूत्रीकृतम् ।

२ रूपाल्लिङ्गाच्च क. ३ छागे न कर्माख्या रूपलिङ्गाभ्याम् क. ख.

४ रूपान्यत्वान्न जातिशब्दस्स्यात् क. ख.

वचनश्छागशब्दः । कुतः? रूपान्यत्वात् – छागशब्दरूपस्यान्यत्वात् – वयोवचनमात्रत्वाभावादित्यर्थः । कथं रूपान्यत्वम्? यतः कारणात् जातिशब्दोऽयम् – अजजातिविशिष्टे पशौ वयोवचनशब्दो न केवलवयोवचनः । तत्र दृष्टान्तः – वर्णवत् इति । यथा शोण इति वर्णशब्दोऽश्वजातिगतं वर्णमेव ब्रूते, न केवलं पशुमात्रगतं वर्णं, तद्वदत्रापि जातिविशिष्टवयोवचनो नान्यादृश इत्यर्थः ॥ ४० ॥

[1]विकार इति चेत् ॥ ४१ ॥

छागशब्दस्योच्चारणविशेषविशिष्टपशुमात्राभिधायकत्वेन च्छागशब्दोऽश्वादीनां ध्वनिविकार एवेत्यनियम इति पश्यसि चेत् – इत्यनुवादः ॥ ४१ ॥

[2]नौत्पत्तिकत्वात् ॥ ४२ ॥

प्रागुक्तं न समञ्जसम् । कुतः? औत्पत्तिकत्वात् – नामिनाम्नोस्संबन्धस्य वस्तूत्पत्तिसमकालीनत्वादाख्यायां न विकारार्थश्छाग इति च वयोविशेषवत्पशुजातिवचनो नान्य इति ॥ ४२ ॥

[3]न नैमित्तिकः पशोर्गुणस्याचोदितत्वात् ॥ ४३ ॥

"सुषिरो वा एतर्हि पशुर्यद्वपाम्रुत्खिदति" इति श्रवणात् सुषिरे निमित्ते, आलम्भस्य श्रवणात् । सुषिरनिमित्तकत्वश्चालम्भे क्रियमाणे सर्वेषामश्वादीनामविशिष्टमिति नैमित्तिकः पश्वालम्भ इत्युच्येत, स नैमित्तिक आलम्भो न समञ्जसः । कुतो हेतोः? 'अव्यङ्गं पशुमालभेत' इति साङ्गस्य पशोरालभ्यत्वेन च्छिद्ररूपस्य पशोर्गुणस्य आलभ्यपश्वङ्गत्वेन अचोदितत्वात्, न सुषिरनिमित्तकपश्वालम्भ इत्यर्थः ॥ ४३ ॥

जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ॥ ४४ ॥

---

१–२ विकारो नौत्पत्तिकत्वात् इत्येकं सूत्रम् क. ख.

३ सनैमित्तिकः ... ... चोदितत्वात् क. ख.

वाकारसिद्धान्तपतिपादनार्थः । जातेरेवायं छाग ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... र्थान्तरस्य वाचकः । कुतः ? तत्प्रायवचनार्थवत्त्वाभ्याम् – विश्वेषां देवानामुष्ट्राणां छागानां मेषाणां ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... प्रायपाठात् जात्याख्यायामेव समुदायप्रसिद्धेरर्थवत्त्वमित्याभ्यां हेतुभ्यां छाग एवालभ्यो ... ... ... ... ... ... ... ... ॥ ४४ ॥

प्रयोजनन्त्वनुष्ठानरूपं – गवादीनामप्यालम्भः पूर्वपक्षे, सिद्धान्ते तु च्छागस्यैवेति ॥ ९ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां षष्ठस्याध्यायस्य अष्टमः पादः

समाप्तश्चाध्यायः

---

श्रीः

# उत्तरषट्कम्

## सप्तमेऽध्याये प्रथमः पादः

(श्रुतिप्रमाणाधिकरणम्—१)

**श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावस्स्यात् ॥ १ ॥ (सि)**

षड्भिरेवहि लक्षणैः श्रुतिचोदिताङ्गयुतेषु वै
दर्शपूर्वमखेषु कृत्यविचिन्तनं समकार्यथ ।
सप्तमेऽथ तथाष्टमे नवमेऽन्तरे दशमेऽपि च
द्वादशे खलु लक्षणे प्रतिपाद्यजातमिदं क्रमात् ॥ १ ॥

धर्मसत्त्वमितीम एव न चेम इत्यथवेत्थमि-
त्यन्यलक्षणकेषु च त्रिषु कथ्यते तदियत्तता ।
कार्यकारणसंग (सेवित) तेह सप्तमषष्ठयोः
व्युत्क्रमेण च हेतुहेतुमदित्यपि प्रवदन्ति वै ॥ २ ॥

ऐन्द्राग्नादीन्यधर्मकाणि कर्माण्युदाहरणम् ॥

किं यजिप्रयुक्ता एते धर्माः? कथं यजिर्गुणवान् स्यादिति; अथवा अपूर्वप्रयुक्ताः? कथमपूर्वं स्यादिति ॥

यजिप्रयुक्तत्वे दर्शपूर्णमासपठितानामपि प्रयाजादिधर्माणां पारिप्लवत्वं, साधारण्यम् । तत उत्तराध्यायोऽतिदेशार्थं नारंभणीयः । अपूर्वप्रयुक्तत्वे तु, यथाप्रकरणं धर्मव्यवस्थानात् ऐन्द्राग्नादीनाञ्चाधर्मकत्वात् अतिदेशं विना तदसिद्धेरुत्तरेऽध्याया आरंभणीया इति संदिह्यते ॥

तत्र ऐन्द्राग्नादि विकृतिष्वनाम्नातेतिकर्तव्यताकासु धर्मातिदेशः प्रकृति-भूत दर्शादिभ्य एव, नत्वाम्नाताङ्गकात्स्न्र्यस्य दार्शपूर्णमासिकप्रकरणस्य सर्वयजि-साधारण्यम् ॥

अत्रायं सूत्रार्थः — मुख्यभेदे — फलवत्त्वेन मुख्यानां प्रधानानामपूर्वाणां द्वितीयाध्यायाभिहितैः शब्दान्तरादिभिः प्रमाणैर्भेदे समधिगते सति, शेषाणां — प्रयाजाद्यङ्गानां यथाधिकारं भावः स्यात् — यथाधिकारं यथाप्रकरणं धर्माणां सद्भावस्स्यात् ॥

तदयमर्थः — यस्मिन्प्रकरणे ये ये धर्मास्समाम्नाताः, ते तत्रैव व्यवतिष्ठन्ते न सार्वत्रिकाः। कुतो हेतोः? श्रुतिप्रमाणत्वात् — तत्तत्प्रकरण-समाम्नातानामङ्गानां तत्तत्प्रकरणशेषत्वे श्रुतेरेव प्रमाणत्वात्। तस्माद्यथाश्रुति व्यवतिष्ठन्त इत्यर्थः ॥ १ ॥

## उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥ २ ॥

वाकारः पक्षव्यावर्तकः। उत्पत्त्यर्थाविभागात् — उत्पाद्यतेऽनेना-पूर्वमित्युत्पत्तिर्यागः। अर्थोऽपूर्वम्। उत्पत्त्यर्थयोर्यागापूर्वयोर्यजेतेत्यादिस्थले-ऽविभागात्। अपि च, आख्यातेषु सर्वत्र यागापूर्वयोरैकान्त्यात् [1]ऐककर्म्यं — यज्यपूर्वयोरित ... ... ... प्राप्तेस्सर्वेषां कर्मणामैककर्म्यं — कर्मैक्यं स्यात् ॥

तदयमर्थः — 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'चित्रया यजेत' इत्येवमादिषु यज्यपूर्वयोरितरेतरसंस्पर्शात् प्रकरणसाधारण्यात् एकत्र पठिता अपि धर्मा ऐन्द्राग्नादिषु विकृतिषु पारिप्लवास्स्युः, नतु प्रकृतावेव प्रकरण्यां व्यवस्थिता इति। तत्र दृष्टान्तः — सत्त्ववदिति। 'गौर्न पदा स्प्रष्टव्या' इत्यत्र गोरूपसत्त्वधर्मः स्पर्शनिषेधोऽविशेषात् शुक्लपीतादिषु सर्वासु गोव्यक्तिषु प्रवर्तते, तद्वदिहापीति ॥ २ ॥

## चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥ ॥ ३ ॥

---

१ ऐकधर्म्यमित्येव साधु।

वाकारो धर्मविधिपारिप्लवत्वव्यावर्तकः। धर्माणां चोदनाशेषभावात्, चोदना–प्रधानविधिः तच्छेषभावात्–तच्छेषत्वात्। प्रधानविधौ च तद्भेदात्–प्रधानरूपभाव्यापूर्वभेदात्, शब्दान्तरादिभिश्च तद्भेदस्य द्वितीये साधितत्वाच्च यथाप्रकरणं धर्मा व्यवति(ष्ठेरन्)–न पारिप्लवा भवन्ति। न तु यज्यैकरूप्याद्धर्माणां पारिप्लवत्वम्। कुतो हेतोः? उत्पत्तेर्गुणभूतत्वात्–उत्प- ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... प्राधान्यात्, तदपेक्षया गुणभूतत्वाद्यागस्य। तदयमर्थः–प्रधानविधिषु परमापूर्वस्यैव भाव्यत्वात्, तदा किं ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... भाव्यापूर्वगुणभूतयजिशेषत्वम्। यतो यजीनामैकरूप्यात् ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ ३ ॥

## सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥ ४ ॥

यदुक्तं सत्त्ववदिति, तत्रोत्तरम्। सत्त्वे–सत्त्वधर्मे स्पर्शे ... ... ... .. ... ... ... सार्वत्रिकं–सर्वगोषु ... ... ... ... ... ... ... ... ... ... ... ... ... ... सर्वकारणं प्रतीयेत। कुतो हेतोः? लक्षणसंयोगात्–पदशक्तेराकृतिविषयत्वेनाकृतिलक्षितव्यक्तिसंयोगात् व्यक्त्याकृत्योर्नियतसंबन्धत्वेनाकृतावसंभवन् स्पर्शनिषेधस्तदुपलक्षितव्यक्तिषु कृत्स्नासु प्रवर्तत इति तत्र युक्तमत्र न तादृशमिति ॥ ४ ॥

## अविभागात्तु नैवं स्यात् ॥ ५ ॥

तुरेवार्थे। अपूर्वप्रयुक्ता धर्मास्ततो न पारिप्लवा इत्येतत् नैवं स्यात्–नोपपद्यत इत्यर्थः। कुतो हेतोः? देवतोद्देशेन द्रव्यत्यागात्मके यागे धर्माणां प्रत्यक्षतो गुणभावस्य अविभागात्–ऐकान्त्यात्, अपूर्वं पूर्वं प्रत्यक् ... ... जनत्वश्चानुमानिकम्। तच्च प्रत्यक्षधर्मगुणभावाद्दुर्बलम्। अतो यज्यैकरूप्याद्धर्माणां पारिप्लवत्वमिति ॥ ५ ॥

## द्व्यर्थत्वञ्च विप्रतिषिद्धम् ॥ ६ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । इतोऽपि हेतोर्धर्माः पारिप्लवा भवन्ति । शत कृष्णलायां "प्रयाजे प्रयाजें कृष्णलं जुहोति" इति दर्शनं धर्मपारिप्लवत्वे तूपपद्यते, नान्यथा । इतरथाहि प्रयाजांश्च विदध्यात्, प्रयाजेषु कृष्णलहोमांश्चेति द्व्यर्थत्वम् – द्व्यर्थविधानं, विप्रतिषिद्धम् – विरुद्धम् । वाक्यभेदादि-दोषादनुपपन्नमित्यर्थः ॥ ६ ॥

उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिस्स्यात्ततश्च [1]धर्म-भेदस्स्यात् ॥ ७ ॥

वाकारः प्रागुक्तपक्षव्यावर्तकः । चोदनायां – फलवत्यपूर्व एव धर्माणां प्रवृत्तिस्स्यात् – धर्मा अपूर्वप्रयुक्ता इत्यर्थः । कुतो हेतोः? उत्पत्तौ विध्यभावात् – भाव्यगुणभूतायामुत्पत्तौ – अफले यजौ विध्यभावात् – धर्म-विध्यभावात् । अफले विधौ धर्मविध्यनुपपत्तेरित्यर्थः । ततः इत्युपसंहारः । अपूर्वाणां प्रतिप्रकरणं भेदात् धर्माणाञ्च भेदस्स्यात् – ... ... ... ... ... ... ... ... पृथक्त्वम् ॥ ७ ॥

यदि वाप्यभिधानवत्सामान्यात्सर्वधर्मस्स्यात् ॥ ८ ॥

वाकारो विशेषोक्त्यर्थः । यद्यप्यपूर्वप्रयुक्ता धर्माः, न यजिप्रयुक्ताः; तथापि सामान्यात् – अपूर्वसामान्यात्, अपूर्वाणां सर्वेषामपूर्वत्वाकारेण समानत्वात् सर्वधर्मस्स्यात् – सर्वा ... ... ... (खिला) पूर्वार्थो धर्मविधिः स्यादित्यर्थः । तत्र दृष्टान्तः अभिधानवदिति । यथा "बाह्लीकाय यवान्नं दीयताम्" इत्युक्ते बाह्लीकाभिधानकपुरुषसंयुक्तं यवान्नं सर्वबाह्लीकेषु समानं ... ... ... लापीति ॥ ८ ॥

अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात्प्रयोगस्य कर्मणश्शब्दभाव्यत्वात्तद्विभागाच्छेषाणामप्रवृत्तिंस्स्यात् ॥ ९ ॥

तुना पक्षो व्यावर्त्यते । ... ... बाह्लीकादियवान्नादिप्राशनवदिहापि

[1] कर्मभेदस्स्यात् क. ख.

सर्वापूर्वार्थता स्यादिति—तत्रोत्तरम् । अभिधानेषु—वाह्लीकादिदेशनिमित्ताभिधानेषु, अर्थस्य—तद्देशसंबन्धनिमित्तस्य वाह्लीकादिरूपस्य, अविभक्तत्वात् अविभागात्—सर्वसमानत्वात्, तथा स्यात्—सर्ववाह्लीकसाधारण्यं स्यात् । कुतो हेतोः? प्रयोगस्य—वाह्लीकादिविषयकयवान्नादिदानरूपस्य प्रयोगस्य पूर्ववत्त्वात्—पूर्वमन्वयव्यतिरेकाभ्यामनुभूतत्वात् सर्ववाह्लीकविषयत्वमुपपद्यते । अत्र तु, कर्मणः—दर्शादेः शब्दभाव्यत्वात्—शब्दैकप्रमाणकत्वात्, तद्विभागात्—प्रतिकर्म भाव्यापूर्वविभागात् शेषाणाम्—प्रयाजादिधर्माणामप्रकरणिसमन्वितानामितरत्रैन्द्राग्नादिषु अप्रवृत्तिस्स्यात्—अप्रयुक्तिः स्यात् । व्यवतिष्ठन्त इत्यर्थः ॥ ९ ॥

स्मृतिरिति चेत् ॥ १० ॥

"ये दर्शपूर्णमासयोर्धर्मास्ते सर्वेष्टीनां" इत्यादिस्मृतिरेव धर्माणां सर्वार्थत्वे नियामिकेति पश्यसि चेत्; इत्यस्सूत्रिकानुवादः ॥ १० ॥

[1]अपूर्वत्वात् ॥ ११ ॥

प्रायश्चित्तस्योत्तरम् । "ये दर्शपूर्णमासयो"रित्यादेस्स्मृतेः अपूर्वत्वात्—पूर्वो न भवतीत्यपूर्व इत्यर्थनिर्णयात्, चोदकप्राप्तेतिकर्तव्यताकविकृतिविषयत्वादित्यर्थः ॥ ११ ॥

अर्थस्य शब्दभाव्यत्वात्[2]प्रतिप्रकरणञ्च (निबन्धनाच्छब्दादेवान्य) त्र भावस्स्यात् ॥ १२ ॥

उपसंहारार्थं निगमनसूत्रमिदम् । अर्थस्य अग्न्यन्वाधानादिरूपस्य, शब्दभाव्यत्वात्—शब्देन भाव्यापूर्वार्थत्वात्, प्रतिप्रकरणञ्चाग्न्यन्वाधानादि- ... ... ... ... धनात्—उपकारसंबद्धत्वात् यथाप्रकरणं व्यवस्थैव स्यात् न पारिप्लवत्वम् । अन्यत्र कर्मान्तरे धर्मजातस्य भावः सद्भावः शब्दादेव

१ न पूर्वत्वात् क. ख.

२ ...... प्रकरणनिबन्धना ...... क. ख.

स्यात् । यथा अग्निप्रकरणपठितानां जयाभ्यातानराष्ट्रभृतां शब्दादेव विवाहादौ सद्भावस्स्यात्, तद्वदत्रापि तत्तत्प्रकरणाम्नातानां धर्माणां व्यवस्थैव । अतोऽन्ये त्वैन्द्राग्नादयोऽधर्माः । तदर्थमुत्तराध्यायारम्भ इत्यर्थः ॥ १२ ॥

प्रयोजनन्त्वनुष्ठानरूपं—विकृतिगता अपि धर्माः प्रकृतौ स्युः पूर्वपक्षे, सिद्धान्ते तु न तथेति ॥ १ ॥

(इषुश्येनाधिकरणम्—२)

## समाने पूर्ववत्त्वादुत्पन्नाधिकारस्स्यात् ॥ १३ ॥ (पू)

पञ्चातिदेशे खलु कर्मनाम संस्कारनामाथ च यौगिकञ्च ।
प्रत्यक्षयोक्त्याप्यथ चानुमानात्प्रत्यक्षतः स्यादतिदेश आदौ ॥

इषुनामकश्येननामकौ द्वावाभिचारिकावेकाहौ । तत्र, इषौ कांश्चिद्विशेषधर्मान्विधाय श्रूयते "समानमितरच्छ्येनेन" इति ॥

तत्र संदिह्यते—किमयमनुवादः? उत निर्देशको विधिः? इति ॥

तत्र—समाने—समानपदे उत्पन्नाधिकारस्स्यात्—अतिदेशेनोत्पन्नानां धर्माणामधिकारस्स्यात्—अनुवादस्स्यात्; न तूद्देशपरः। कुतः? पूर्ववत्त्वात्—इषुनामकस्य क्रतोस्सप्रकृतिकत्वात्—अतिदेशप्राप्तज्यौतिष्टोमिकविध्यन्तवत्त्वात् । तदयमर्थः—इषोर्ज्योतिष्टोमविकारत्वेनातिदेशप्राप्ततद्धर्मवत्त्वेन "समान"मिति पदमतिदेशप्राप्तधर्मानुवादपरं, न तु विशेषातिदेशपरम् ॥ १३ ॥

## [1]श्येनग्रहणेनेति चेत् ॥ १४ ॥

इति चेत्पश्यसि, ज्यौतिष्टोमिकानां धर्माणामिषावतिदेशतः प्राप्तत्वात्तदनुवाद इति, नैतदुपपद्यते। केन हेतुना? श्येनग्रहणेन। तदयमर्थः—ज्यौतिष्टोमिकानामतिदेशप्राप्तानामनुवादपरत्वे, श्येनेनेति श्येनग्रहणमनर्थकं

---

१ श्येनस्येति चेत् क. ख.

स्यात्-अग्र ... ... त ... वि ... ... करं स्यात्। अतो विशेषधर्मातिदेशार्थं श्येनेनेति समानपदम्॥ १४॥

नासंनिधानात्॥ १५॥

इषौ संनिहितविशेषधर्मातिदेशपरं श्येनपदं न घटते। कुतो हेतोः? असन्निधानात्-श्येनपदस्य स्वाभिधेयश्येनपरत्वेन, इषौ स्वधर्मासन्निधायकत्वात्। समानपदस्य ... ... ... परत्वे, अकिञ्चित् ... ... ... विशेषकरत्वात्, अनुवादकत्वे तद्दोषाभावादनुवादक एव॥ १५॥

अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात॥ १६॥ (सि)

अपि वेति पक्षान्तरपरिग्रहार्थः। समानमितरदित्यत्र विधिरेव, नानुवादः। कुतः? अपूर्वत्वात्-विधित्वे प्रवृत्तिविशेषकरत्वात्, इतरत् इत्येतत्पदं अधिकार्थे नेयम्। फलितमाह— ज्यौतिष्टोमिकात् आतिदेशिकात् विधेः सकाशात् यदधिकं श्येने लोहितोष्णीपादि, तत् समानमिषौ इत्येवंरूपस्यार्थस्य तत् इतरदिति पदमधिकार्थपरं सत् वाचकं स्यात्। अतो विधिरेवायं नानुवादो ज्यौतिष्टोमिकानाम्॥ १६॥

प्रयोजनन्त्वनुष्ठानरूपं - श्येनविशेषधर्मलोहितोष्णीषाद्यननुष्ठानं पूर्वपक्षे, सिद्धान्ते तु तदनुष्ठानमिति-प्रत्यक्षो ह्यतिदेश इति॥ २॥

(पञ्चसञ्चराधिकरणम्-३)

पञ्चसञ्चरेष्वर्थवादातिदेशस्सन्निधानात्॥ १७॥ (पू)

चातुर्मास्येषु वैश्वदेवे पर्वणि, आग्नेयादीनि पञ्च सार्थवादकैर्वाक्यैर्विहितानि धर्माश्च तेषामुक्ताः। वरुणप्रघासेषु केवलानि हवींष्याम्नाय यद्वैश्वदेविकानां ब्राह्मणं तत्तेषामतिदिश्यते—"एतद्ब्राह्मणान्येव पञ्च हवींषि। यद्ब्राह्मणानीतराणि" इति। धर्माश्च "त्रेधा सन्नद्धं बर्हिर्भवति, त्रेधा सन्नद्ध इध्मः, नव प्रयाजा इज्यन्ते,

नवानूयाजाः" इत्येवमादयो विधयः । "वार्त्रघ्नानि वा एतानि हवींषि" इत्यर्थवादः ॥

तत्र संदिह्यते—किमर्थवादमात्रस्यातिदेशः? उत सार्थवादकस्य सविधिकस्य कृत्स्नकाण्डस्य? इति ॥

तत्र पञ्चसञ्चरेषु—पञ्चसु "आग्नेयमष्टाकपालं निर्वपेत् सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं" इति विहितेषु सञ्चरन्तीति सञ्चराणि—आग्नेयादीनीमानि पौष्णान्तानि हवींषि तेषु—वारुणप्रघासिकपञ्चसञ्चरेषु एतद्ब्राह्मणानीत्यादिना "वार्त्रघ्नानि वा एतानि हवींषि" इत्यर्थवादातिदेशः, न तु सविधिकस्य सार्थवादस्य कृत्स्नस्य काण्डस्यातिदेशः । कुतो हेतोः? सन्निधानात्—"वार्त्रघ्नानि वा एतानि हवींषि" इति हविष्यपि स्तावकस्य ब्राह्मणशब्दवाच्यस्यार्थवादस्य हविर्विधिभिस्सन्निधानात्, हविर्विधि ... ... ... ... ... ... ... ... त्वात् । धर्मविधीनान्तु हविरार्थवादिकैर्वाक्यैरसंबन्धात् न तेषां वरुणप्रघासेऽतिदेशः । तस्माद्धविरर्थवादमात्रातिदेश इति ॥ १७ ॥

## सर्वस्य वैकशब्द्यात् ॥ १८ ॥ (सि)

वा शब्दः प्रागुक्तपक्षव्यावर्तकः । सर्वस्य—सविधिकस्य सार्थवादस्य कृत्स्नस्य काण्डस्यातिदेशो न त्वर्थवादमात्रस्य । कुतः? ऐकशब्द्यात्—समानशब्दत्वात् । तदयमर्थः—"एतद्ब्राह्मणान्येव पञ्च हवींषि" इति श्रूयमाणं ब्राह्मणपदमर्थवादविधिसाधारणमिति कृत्वा धर्मविधीनामपि ब्राह्मणशब्देनोपसंग्रहणात् कृत्स्नातिदेश एव ॥ १८ ॥

## लिङ्गदर्शनाच्च ॥ १९ ॥

चाकारो हेत्वन्तरार्थः । तावत् "त्रिंशदाहुतयो हूयेरन्, वाजिनो यजन्त्याहुतीनां संपत्त्यै त्रिंशत्त्वाय" इति वैश्वदेविक त्रिंशदाहुतीनां वरुणप्रघासे धर्मविधीनामप्यतिदेशसूचकानां दर्शनात्—उपलम्भाच्च हेतोः कृत्स्नस्य काण्डस्यातिदेश इत्यर्थः ॥ १९ ॥

## विहिताम्नानान्नेति चेत् ॥ २० ॥

"अग्निं मथ्नन्ति" "प्रसुवो भवन्ति" इति वैश्वदेविकाग्निमन्थनादेर्विहितत्वात्, सर्वातिदेशे च विहिताम्नानात्—विहितानां धर्माणां पुनराम्नानेऽनर्थकत्वात् अर्थवादमात्रस्यातिदेश इति पश्यसि चेत् इत्यसूत्रारूढपक्षानुवादः ॥ २० ॥

## नेतरार्थत्वात् ॥ २१ ॥

अत्रेदमुत्तरम्ः—अग्निमन्थनादीनां प्राप्तत्वे "अग्निं मथ्नन्ति" इति पुनराम्नानमनर्थकमिति यदुक्तं, तन्न। कुतः? इतरार्थत्वात्—वरुणप्रघासे विहितस्याग्निमंथनस्य दक्षिणवैहारिकमारुतहविषः कृते विहितं न पुनराम्नानमनर्थकमित्यर्थः ॥ २१ ॥

प्रयोजनन्त्वनुष्ठानरूपं—पूर्वपक्षे त्रेधा सन्नद्धमित्यादीनां धर्माणां लोप एव। सिद्धान्ते तु तदनुष्ठानमिति ॥ ३ ॥

(एककपालाधिकरणम् —४)

## एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥ (सि)

वैश्वदेवे एककपाल आम्नातः, "द्यावापृथिव्य एककपालो भवति" इति। वरुणप्रघासेऽपि "काय एककपाल" इति। तत्रापरं "ऐन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा" इति। साकमेधे पुनः एककपालैन्द्राग्नावाम्नातौ—"ऐन्द्राग्न एकादशकपालो वैश्वकर्मण एककपालः" इति। तत्रेदमाम्नायते—"एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालः, यद्ब्राह्मणावितरश्चेतरश्च" इति ॥

तत्र ... ... साकमेधीयौ एककपालैन्द्राग्नौ च तद्वत्—पञ्चसञ्चराधिकरणे कृत्स्नकाण्डातिदेशवत्। तदयमर्थः—साकमेधे यावैन्द्राग्नैककपालावाम्नातौ तयोरुभयोः पञ्चसञ्चरकृत्स्नकाण्डातिदेशवदत्रापि कृत्स्नकाण्डातिदेशः। इदं तूत्तरत्र प्राप्त्यर्थम् ॥

प्रयोजनन्त्वत्रापि पञ्चसञ्चराधिकरणवदेव वर्णनीयं, तुल्यन्यायत्वात् ॥

( सर्वहोमाधिकरणम् –५ )

## एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमा-[1]पर्यावृत्ति दर्शनादवभृथे च सकृद्द्व्यवदानवचनात् ॥ २३ ॥ (सि)

साकमेधे श्रूयते "एतद्ब्राह्मण एककपालः" इति ॥

तत्र चिन्त्यते — [2]किं वारुणप्रघासिकस्यैककपालस्येदं ग्रहणम्? उत वैश्वदेविकस्यैककपालस्य? इति [3]संदेहे :–

एककपालानां वैश्वदेविकैककपालः प्रकृतिः, न वारुणप्रघासिक एककपालः। कुतः? आग्रयणे – आग्रयणेष्ट्या एककपाले द्यावापृथिव्ये, सर्वहोमापर्यावृत्तिदर्शनात् – यत्सर्वहुतं करोति सा त्वेका परिचक्षा, हुतोऽहुतः पर्यावर्तते सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेयाताम्" इति द्यावापृथिव्यानुवादेनाज्यसंबन्धविधिपरे वाक्ये सर्वहोमपर्यावृत्त्योर्दर्शनात्, सर्वहोमपर्यावृत्त्योश्च धर्मयोर्वैश्वदेविकैककपाले समाम्नानात्, अतिदेशप्राप्तवैश्वदेविक धर्मानुवादेनाज्यविधिरूपधर्मान्तरविधानात्, वैश्वदेविक एव साकमेधीयस्य वैश्वकर्मणैककपालस्य प्रकृतिः। लिङ्गान्तरञ्च दर्शयति अवभृथे च द्व्यवदान-वचनादिति। अवभृथे – वारुणैककपाले, "इदमेवैककपालस्य द्विरवद्यति" इति, यत्सकृद्द्विरवद्यतीति वारुणे इदमेककपालस्य वैश्वदेविकस्य" इति सकृत् द्व्यवदानवचनात् ... ... ... ... ... धर्माणां च वैश्वदेविके समाम्नातत्वात् स एवैककपालानां प्रकृतिरिति वचनानुग्रहार्थं साकमेधीयधर्माणामतिदेशः। भूयो-धर्मानुगुण ... ... ... ... ... ... बलैककपालधर्मातिदेश इति व्याहृतम्। वारुणप्रघासिके विशेषधर्मा "हिरण्मय्यो वा शमीमय्यो वा स्रुचो भवन्ति" इति विशेषस्समाम्नातः। वचनानुग्रहे त एव गृहीतास्स्यु ... ... ... ति ॥ २३ ॥

प्रयोजनन्त्वनुष्ठानरूपं – कतिपयधर्मधर्म सामस्त्याभ्यां प्रद्योतितम् ॥ ५ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां सप्तमाध्यायस्य प्रथमः पादः

---

१ ... परिवृत्तिदर्शनात ... द्व्यवदानस्य वचनात् क. ख.

२ सिद्धान्तकोटिरियं प्रथमतरमुपन्यस्यते? ३ इदं त्यक्तुं शक्यम्।

## सप्तमाध्यायस्य द्वितीयः पादः

(सामाभिधानाधिकरणम्–१)

### साम्नोऽभिधानशब्देन प्रवृत्तिस्स्याद्यथाशिष्टम् ॥ १ ॥

इदं श्रूयते–"रथन्तरमुत्तरयोर्गायति, बृहदुत्तरयोर्गायति, कवतीषु रथन्तरं गायति, यद्योन्यां तदुत्तरयोर्गायति" इत्येवमादि ॥

तत्र संदेहः – किं सस्तोभस्वरकालाभ्यासहिंकारप्रस्तावप्रतिहारादियुक्तायामृचि रथन्तरादिसामशब्दः? उत गीतिमात्र एव? इति ॥

तत्र साम्नोऽभिधानशब्देन–सामवाचकशब्देन यथाशिष्टम्–यथा येन प्रकारेण स्वरस्तोमयुक्तायामृचि सामनाम शिष्टं, तथैव बृहद्रथन्तरादिशब्दानां प्रवृत्तिस्स्यात्, न स्वरमात्रे। स्वरस्तोभादिविशिष्टा ह्यगेव रथन्तरादिशब्दवाच्या–रथन्तरादिशब्दप्रवृत्तिनिमित्तं, न स्वरमात्रमित्यर्थः ॥ १ ॥

### शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिस्स्यात्पृथग्भावात्क्रियायां [1]ह्यभिधानसम्बन्धः ॥ २ ॥

तुना प्रागुक्तपक्षो व्यावर्त्यते। कवतीषु रथन्तरं गायतीत्यादौ कवतीनां कार्ये, अभिवतीनां निवेश इत्ययं पक्षो नोपपद्यते। कुतो हेतोः? शब्दैरर्थविधित्वात्–शब्दैः–कवत्यादिशब्दैः, अर्थविधित्वात्–कवत्यादिरूपाणामर्थानामेवाभिधेयत्वात्, न हि कवतीशब्दोऽभिवतीं ब्रूते–अभिवतीशब्दो वा कवतीम्। तस्मादर्थान्तरे कवतीरूपे, अभिवतीरूपे अर्थान्तरे निमित्ते एतेषां शब्दानां अप्रवृत्तिस्स्यात्। अतः कवत्यादीनां कार्ये, अभिवत्यादीनां विनिवेश इत्येतन्न घटते ॥

अथाधाराधेयपक्षः—

कवतीष्वाधारेषु अभिवतीनामधेयत्वं विधीयत इतीदमपि नोपपद्यते।

---

१ ह्यभिसंबन्धः क. ख.

कुतः? पृथग्भावात्—कवत्यभिवत्यादीनां शब्दानां पृथगर्थत्वेन व्यवस्थितत्वात्। हिरेवकारार्थे। क्रियायां हि—गानरूपक्रियायामेव हि कवत्यादीनां ऋगभिधानानां संबन्धः। अयमर्थः—न शब्दश्शब्दान्तरेणान्वेति। अभिवत्यादीनां शब्दरूपाणां शब्दरूपैः कवत्यादिभी ऋग्विशेषैर्न घटतेऽन्वयः। अतः कवतीष्वाधारेष्वभिवतीनामाधेयत्वेन विधानमित्येतन्नोपपद्यत इत्यर्थः॥ २॥

स्वार्थे वा स्यात्प्रयोजनं [1]क्रियायां तेनाङ्गभावेनातिदिश्येरन् ॥ ३ ॥

वाकारः पक्षान्तरद्योतकः। स्वार्थे प्रवर्तमाना अभिवत्याद्याः, कवत्यङ्गभावेनातिदिश्येरन्। केन हेतुना? क्रियायां—गानरूपक्रियायां अदृष्टं प्रयोजनं स्यात्। तदयमर्थः—कवत्यादीन्प्रधानीकृत्य, अभिवत्यादीनामृचां तदङ्गभावेनोपदेशे सति दृष्टस्य कस्यचित्प्रयोजनस्यालाभाददृष्टमेव प्रयोजनं स्यात्॥ ३॥

शब्दमात्रमिति चेत् ॥ ४ ॥

कवत्याद्यङ्गभावेनाभिवत्यादीनामुपदेशे सत्यदृष्टस्य कल्प्यत्वेनाश्लिष्टत्वादङ्गभावपक्षो नोपपद्यत इति पश्यसि चेत् तर्हि शब्दमात्रं—अभिवत्यादीनामक्षरमात्रं—अक्षराण्यतिदिश्यन्तां, नात्र तादृशादृष्टकल्पनादोष इत्यर्थः॥ ४॥

नौत्पत्तिकत्वात् ॥ ५ ॥

कवतीष्वभिवतीनामक्षराभिलाप इत्ययं पक्षो नोपपद्यते। कुतो हेतोः? औत्पत्तिकत्वात्—नामधेय शब्दानां नामिना सह संबन्धस्योत्पत्तिशिष्टत्वात्। तदयमर्थः—यश्शब्दो यस्मिन्नर्थे प्रसिद्धः स तत्रैव व्यवतिष्ठते। अतोऽभिवतीषु कवतीनामभिलापो नोपपद्यते॥ ५॥ *

---

१ क्रियायास्तदङ्गभावेनोपदिश्येरन् क. ख.

*शास्त्रञ्चैवमनर्थकं स्यात्—इत्यधिकं सूत्रमत्र क. ख.

[1]स्वरस्यादिति चेत् ॥ ६ ॥

स्वरस्तोभविशिष्टङ्नामधेयानामभिवत्यादीनां कवत्यादिष्वतिदेशो नोपपद्यत इति पश्यसि चेत्, तर्हि अभिवत्यादि स्वरस्यातिदेश एव भवत्विति पक्षान्तरम् ॥ ६ ॥

नार्थाभावाच्छ्रुतेरसंबन्धः ॥ ७ ॥

अभिवत्यक्षराभिव्यञ्जकस्वरस्य कवतीष्वतिदेश इत्ययं पक्षो नोपपद्यते। कुतो हेतोः? अर्थाभावात्—अभिवत्यक्षराभिव्यञ्जनरूपस्यार्थस्य कवतीष्वभावात्। कवतीषु कर्तुं भावयितुं वा अशक्यत्वात्। तत्त्वेन भावनायां वा अभिवतीत्वमेव न कवतीत्वमित्यर्थः। यद्यपि भाव्येत, तदा "कवतीषु रथन्तरं गायति" इति श्रुतेरसंबन्ध एव स्यात्। कवत्याधारकरथन्तरविधानानुपपत्तिरित्यर्थः ॥ ७ ॥

स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ८ ॥

तुः पक्षान्तरपरिग्रहार्थः। यद्यभिवतीस्वरस्य कवतीष्वतिदेशो नोपपद्यते, तर्हि अभिवतीस्वरस्य कवतीवर्णेष्वपि साधारणस्यानुवादस्स्यात्। कुतो हेतोः? कवतीष्वभिवतीषु च मात्रावर्णाविभक्तत्वात्—मात्राणां ह्रस्वदीर्घादीनां, वर्णानां—अक्षराणाञ्च प्रायेणाविभक्तत्वाद्धेतोः, उत्पत्तिषु—कवतीनामुच्चारणेषु, स्वर एवानुवाद्यस्स्यात्। अयमर्थः—अभिवतीनां कवतीनाञ्च क्वचित् ... ... ... ... सा ... ... ... ... कवतीषु यद्रथन्तरं तद्गायतीत्यनुवादोपपत्तिरेवम् ॥ ८ ॥

लिङ्गदर्शनाच्च ॥ ९ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। "रथन्तरमुत्तरयोर्न पश्यामीति विश्वामित्रस्तपस्तेपे, बृहदुत्तरयोर्न पश्यामीति वसिष्ठस्तपस्तेपे" इति कवत्यादिषु रथन्तरशब्दवाच्याभिवत्यादीनां स्वरसद्भावसूचकलिङ्गदर्शनात् कवतीष्वभिवतीस्वरानु-

---

1 स्वरस्येति चेत् क. ख. अत्रापि व्याख्या तथैव।

वादः । तदयमर्थः –“उत्तरयो रथन्तरं न पश्यामीत्येतत् रथन्तरसद्भाव एवोपपद्यते । यथा, सन्तमेव घटमन्धकारेऽपश्यन् तद्दर्शनाय दीपमादत्ते न त्वसच्छशविषाणदर्शनाय दीपमादत्ते, तद्वदत्रापीति ॥ ९ ॥

[1]अश्रुतेषु विकारस्योत्तरासु यथाश्रुति ॥ १० ॥

तुना प्रागुक्तस्वरानुवादपक्षो व्यावर्त्यते । यल्लिङ्गमुपन्यस्तं, न तद्गमकमनुवादत्वे, किन्तु विधिपरम् । उत्तरास्वृक्षु अश्रुतेषु योनिसामसु, विकारस्य–योनिसामविकारस्य, विधानमेव स्यान्नानुवादः । तस्मात् यथाश्रुति स्यात् । अथवा यथाश्रुति – यथा अध्ययनकाले श्रुता उत्तराः केवलाः, तासूत्तरासु, विकारस्य – योनिसामविकारस्य अश्रुतेरिति सूत्रम् । अश्रवणात्तद्विधिपरमेव नानुवादकमित्यर्थः ॥ १० ॥

शब्दानाञ्चासामञ्जस्यम् ॥ ११ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । स्वरस्य सामशब्दवाच्यत्वेऽपि स्वरानुपूर्व्यावस्थिते स्वरविशेषे रथन्तरादि सामशब्दप्रयोगात्, विच्छिन्नानुपूर्व्ये च कवतीस्वरे तदभावाद्रथन्तरादि शब्दानां असामञ्जस्यं – अतद्वाचकत्वं स्यात् ॥

अपितु कर्मशब्दस्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १२ ॥ (सि)

अपिना ऋगतिदेशपक्षो देशलक्षणापक्षो धर्मलक्षणापक्षश्च व्यावर्त्यन्ते । एतत्पक्षत्रयं नोपपद्यते । किन्तु कर्मशब्दः स्यात् – कवतीषु रथन्तरं गायतीत्यादि कर्मशब्दः स्यात् – संस्कारशब्दस्स्यात्, कवतीषु रथन्तरं गानेन संस्कुर्यादिति संस्कारोल्लेखः । अतो रथन्तरं गायतीति भावोऽर्थः – संस्काररूपोऽर्थः प्रतीयेत । एवञ्च सति रथन्तरं गायतीत्यस्य प्रसिद्धग्रहणत्वात् – प्रसिद्ध गानरूपार्थग्रहणत्वात् – तद्वाचकत्वात् गानमपि प्रसिद्धमनुगृहीतं भवतीत्यर्थः । हिर्हेतौ । इतोऽपि गीतिवचनोऽयं शब्दः, यतः कारणात् अन्यैः – संस्कार-

---

१ अश्रुतेस्तु .... क. ख.

कर्मभिरवहननपेषणादिभिः पृथक् संस्कार्यकर्मकैः रथंतरादीनामविशिष्टो विकारः । अयमर्थः – यथा संस्कारकर्मस्ववहननपेषणादिषु संस्कार्यरूपविकारभेदो दृष्टः, एवमिहापीति । रथन्तरशब्दवाच्याभिवत्यादिषु ह्रस्वानां दीर्घत्वं, दीर्घाणाञ्च वर्णानां ह्रस्वत्वं, संवृतानां विवृतता – विवृतानां संवृतता– इत्येवंरूपविकारोऽविशिष्टः । अतोऽयं रथन्तरं गायतीत्यादिस्संस्कारवचन एव ॥

अद्रव्यञ्चापि दृश्यते ॥ १३ ॥

चापीति वर्णद्वयं विपर्यस्य "अपि च" इति योज्यम् । अपिचेति हेत्वन्तरार्थः । संस्कारकर्मत्वेन गानमात्रस्य कवत्यादिष्वतिदेशे ग्राह्ये हेत्वन्तरं, अद्रव्यं – अनृचं सामापि दृश्यते – प्रजापतेर्हृदयमनृचं गायतीति । अतोऽपि गानमात्रस्य कवत्यादिष्वतिदेशः । अतोऽपि ऋग्व्यतिरिक्तस्य गानमात्रस्यातिदेशः, न तु गीतिविशिष्टस्यातिदेश इति ॥ १३ ॥

[1]तस्य क्रियाग्रहणार्था नानार्थेषु विरूपितत्वादर्थोऽप्यासान्न लौकिके विधानात् ॥ १४ ॥

यदुक्तं संस्कारकर्मत्वे क्रतुबहिर्भूमौ साम्नां प्रयोगरूपगानं न स्यादिति, तत्रोत्तरमिदं सूत्रम् । तस्य – गानस्य अकर्मकाले क्रिया – अक्रत्वनुष्ठानकाले क्रिया ग्रहणार्था – शिष्याभ्यासार्था । कुतो हेतोः ? तस्य गानस्य नानार्थेषु – नानाव्यवस्थितगर्दिरूपार्थेष्वाश्रयेषु, विरूपितत्वात् – आश्रयभेदेन भिन्नानां गीतीनां शिक्षाभ्यासाभ्यां विना कर्मकाले प्रयोगस्यानुग्रहीतुमशक्यत्वात्, अकर्मकालेऽनुष्ठानं शुष्केष्टिवदुपपद्यते । यद्युच्येत – गानं लौकिकमपि स्यादिति, तत्रोत्तरं – आसां – रथन्तरादिसंज्ञानां, अर्थो गानरूपोऽर्थो न लौकिके व्यवहारे सिद्धः-प्रसिद्धः । कुतो हेतोः ? विधानात् कवतीषु रथन्तरं गायतीति विधानात् । विधिश्च लोकव्यवहारप्राप्तेऽर्थे पर्युदास्ते । अतः संस्कारकर्मत्वे क्रतुबहिर्भूमौ गानं न स्यादित्येतन्न चोद्यमित्यर्थः ॥ १४ ॥

---

१ तस्य च ... विरूपित्वादर्थो ह्यासामलौकिको विधानात् क. ख.

## तस्मिन् संज्ञाविशेषास्स्युर्विकारपृथक्त्वात् ॥ १५ ॥

अथ यदुक्तं, बृहद्रथन्तरमिति संज्ञाभेदोपलम्भात् संज्ञाभेदस्य च संस्कारकर्मण्यानर्थक्यात् ऋचामेव नामानि बृहदादीनीति; तस्योत्तरमिदं— तस्मिन्—गानरूपार्थ एव बृहदादि संज्ञाविशेषाः उपपन्नास्स्युः । कुतो हेतोः? 'आसारितकं गायति' 'वर्धमानकं गायति' 'गौरिवीतं गायति' इति विकारपृथक्त्वदर्शनात्संज्ञाभेद उपपद्यत इत्यर्थः ॥ १५ ॥

## [1]योनिशंस्या च तुल्यवदितराभिर्विधीयते ॥ १६ ॥

चकारोऽयं प्रागुक्तगानरूपार्थदार्ढ्यार्थः । योनिशंस्या—योनिश्चासौ शंस्या च योनिशंस्या । "रथन्तरस्य योनिमनुशंसति" इत्यप्रगीतमन्त्रसाध्यार्थ-परेण वाक्येन शंस्या बृहदादियोनिः इतराभिः अप्रगीताभिश्शिपिविष्टवत्यादिभिः तुल्यवत्—तुल्यतयैव विधीयते । अतश्च ऋग्गीत्योस्स्पष्टो भेदः ॥ १६ ॥

## [2]अयोनावपि दृश्यते ॥ १७ ॥

अपिर्हेत्वन्तरसंसूचनार्थः । स्थाल्यां सक्तवधीयत इत्याहुः यत् बृहत् गायत्रीषु क्रियते, अपि चैनां रुजति नवा अस्यां संभवतीत्याधाराधेयभावे-नाभिहितयोर्गायत्रीबृहत्योर्मध्ये, आधेयस्य गानरूपेण भेदे सत्येव सामञ्जस्यात् । अयोनौ—ऋक् योनिशब्देनोच्यते । अयोनावनृचि सामशब्दो बृहदादिसाम-शब्दो दृश्यते । ततो गीतिरेव रथन्तरादिशब्दवाच्या ॥ १७ ॥

## ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् ॥ १८ ॥

इदं प्रागुक्ताकर्मकालप्रयोगदूषणपरिहरणार्थम् । इति चेत् पश्यसि, योनौ रथन्तरे शिक्षिते उत्तरास्वपि रथन्तरादिसाम्न ऐकार्थ्यात् शिक्षाभ्यास-निमित्तं साम वैरूप्यं नास्ति, अतो हेतोः अकर्मकाले प्रयोगः कर्मकाले प्रयोगसौकर्यार्थमिति पश्यसि चेदित्यनुवादः प्रागुक्तस्य ॥ १८ ॥

---

१ योनिशास्याश्च ... क. ख.  २ अयोनौ चापि दृश्यतेऽनथायोनि क. ख.

[1]स्यादर्थान्तरेषु निष्पत्तेर्यथा पाके वैरूप्यम् ॥ १९ ॥

अर्थान्तरेषु – ऋगन्तरेषु, आश्रयभेदाद्रथन्तरादीनां निष्पत्तेः, साम्न ऐकरूप्येप्याश्रयभेदेन वैरूप्यं – नानारूपता स्यात्, तदर्थश्चाकर्मकाले शिक्षा अभ्यासश्च । तत्र दृष्टान्तः – यथा पाके – ओदनादिपाके एकरूपेऽपि, ओदनपाके शिक्षितोऽप्याश्रयरूपद्रव्यभेदात् गुळपाकमशिक्षित्वा न गुळं पक्तुं जानाति । तथा रथन्तरादिसाम्नैकरूप्येऽप्याश्रयभेदाद्वैरूप्यं भवत्येव । अतो हेतोरयोनिषूत्तरास्वृक्षु शिक्षार्थमकर्मकाले प्रयोग उपपद्यते ॥ १९ ॥

शब्दानाञ्च सामञ्जस्यम् ॥ २० ॥

चकारोऽयं समुच्चयार्थः । सामशब्दे गीतिरूपार्थे पर्यवसन्ने सति शब्दानां – ऋक् शब्दानां सामशब्दानाञ्च सामञ्जस्यं – यथा प्र ... ... ... प्रयोग उपपद्यते । इतरथा हि प्रसिद्ध्यतिक्रमे कदाचित् ऋचि सामशब्दप्रयोगस्साम्नि च ऋक्शब्दप्रयोग इत्यव्यवस्थाऽऽपद्येतेत्यर्थः ॥ २० ॥

प्रयोजनन्त्वनुष्ठानरूपम् – पूर्वपक्षे मृग्यम् । सिद्धान्ते तु स्पष्टमेव ॥ १ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां सप्तमाध्यायस्य द्वितीयः पादः

---

## सप्तमाध्यायस्य तृतीयः पादः

---

(क्रियाभिधानाधिकरणम् – १)

उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशस्स्यात् ॥ १ ॥ (सि)

द्वाभ्यां पादाभ्यां प्रत्यक्षातिदेशे वर्णिते सति, उक्तक्रमेण तृतीये नामातिदेशः प्रस्तूयते ॥

---

१ स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके क. ख.

कुण्डपायिनामयने श्रूयते—"मासमग्निहोत्रं जुहोती"ति। द्वितीये अग्निहोत्रस्य च कर्मान्तरत्वं समधिगतमेव ॥

एवं सत्यत्र संदिह्यते—किमिदं कुण्डपायिनामयनगतमग्निहोत्रकर्म यावदुक्तेतिकर्तव्यताकमधर्मकमेव? उत नित्याग्निहोत्रनामसाम्यात् तत एव धर्मान् गृह्णाति? इति ॥

अन्यत्र—प्रकरणान्तरे, तच्छ्रुतौ—तस्याग्निहोत्रपदस्य श्रवणे सति विधिप्रदेशः स्यात्—धर्मातिदेशकमग्निहोत्रपदं स्यात्। अतो नामैव धर्मग्राहकमिति ॥ १ ॥

## अपूर्वे वापि भागित्वात् ॥ २ ॥

वापीत्येतद्विपर्यस्यापि वेति योज्यम्। नैयमिककौण्डपायिनामयनीये उभे अप्यग्निहोत्रकर्मणी अपूर्वे एव—कर्मान्तरे एव। कुतो हेतोः? भागित्वात्—अस्यापि कौण्डपायिनामयनीयाग्निहोत्रवत् सावयवत्वात् अङ्गोपेतत्वात्। अतो ... ... मधर्मातिदेशकमिति ॥ २ ॥

## [1]नाम्नां त्वौत्पत्तिकत्वात् ॥ ३ ॥

तुना प्रागुक्तपक्षो व्यावर्त्यते। नेदमग्निहोत्रनाम सर्वसाधारणम्। कुतः? नाम्नाम्—अभिधानानां नामिना संबन्धस्य औत्पत्तिकत्वात्—उत्पत्तिशिष्टत्वात्। तस्मादग्निहोत्रनामधेयस्य नैयमिक एव ... ... ... ... .... तत्वात् तत्रैव मुख्यम्। इतरत्र धर्मातिदेशकमित्यर्थः ॥ ३ ॥

## प्रत्यक्षाद्गुणसंयोगात्क्रियाभिधानं स्यात्तदभावेऽप्रसिद्धं स्यात् ॥ ४ ॥

इतो ... ... ... नैयमिकाग्निहोत्र एवाग्निहोत्रशब्दो मुख्यवृत्तः। कुतो हेतोः? प्रत्यक्षाद्गुणसंयोगात्—प्रत्यक्षात् द्रव्यदेवतादिरूपगुणसंयोगात्;

---

१ नाम्नस्त्वौत्पत्तिकत्वात् क. ख.

"पूर्वो दुह्यात्, दुग्धमेवाधिश्रयते, चतुरुन्नयति, खादिरीमग्निहोत्रस्य समिधमादधाति, इत्थं जुहोति" इत्येवंरूपगुणसंबन्धात् नै ... ... ... क्रियाया अभिधानं स्यात्। तदभावे—तादृशप्रत्यक्षगुणसंबन्धाभावे सति, कौण्डपायिनामयनीयाग्निहोत्रस्य अग्निहोत्रमिति नाम अप्रसिद्धं—अमुख्यं गौणं स्यात्। अतः कौण्डपायिनामयनीयमग्निहोत्रनाम, नैयमिकाद्धर्मातिदेशकमित्यर्थः ॥ ४ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पूर्वपक्षे मासाग्निहोत्रे यावदुक्तं तावदेव कर्तव्यं स्यात्, सिद्धान्ते तु, नित्याग्निहोत्राद्धर्मग्रह इति ॥ १ ॥

(सत्रकर्माधिकरणम्—२)

## अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिस्स्यात् ॥ ५ ॥ (सि)

गवामयने श्रूयते—वैश्वानरो ज्योतिष्टोमः प्रायणीयमेतदहर्भवति इति। द्वादशाहे च प्रकृतावस्ति प्रायणीयो नाम प्रथममहरतिरात्र इति। उभयोरपि प्रकरणान्तरस्थत्वेनैव नानात्वं सिद्धम्।

एवं सति संदिह्यते—किं परत्र गवामयने श्रूयमाणः प्रायणीयशब्दो द्वादशाहिकात् प्रायणीयातिरात्रात् धर्मग्राहकः? उत गुणार्थ एवायं, अतो न तत्सकाशाद्धर्मान् गृह्णाति? इति।

तत्र अपिवेति प्रागुक्तन्यायापवादार्थः। सत्रकर्मणि—गवामयनाख्यसत्रकर्मणि श्रूयमाणा प्रायणीयेत्येषा श्रुतिर्गुणार्था—प्रारभ्यानेन यान्तीति प्रारंभरूपगुणार्था स्यात्। तदयमर्थः—प्रारभ्य अयति—गच्छतीति योगार्थस्य द्वादशाहिक गावामयनिक प्रायणीययोस्तुल्यत्वादुभयत्र प्रायणीयशब्दस्य मुख्यतया न नाम वैकृतं प्राकृतधर्मातिदेशकम्। द्वितीयादिष्वहस्सु श्रूयमाणं प्रायणीयपदमतिदेशकं स्यात्, न प्रथमश्रुतमिति ॥ ५ ॥

## [1]वाक्यशेषाच्च ॥ ६ ॥

---

१ इदं सूत्रं क. ख. नास्ति।

चकारो हेत्वन्तरसमुच्चयार्थः । "ज्योतिरेव पुरस्ताद्दधाती"ति वाक्य शेषाच्च गुणार्थतैवावगम्यते । अतो न नामातिदेशकमित्यर्थः ॥ ६ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – पूर्वपक्षे, गवामयने यावदाम्नातं प्रायणीये ताव- ... ... ... ... ... थं ... ... ... ... द्वादशाहिकात् ग्र ... ... ... सिद्धान्ते तु, यावदुक्तं गवामयने तावदेव कर्तव्यमिति ॥ २ ॥

( [1]विश्वजिति षाडहिकषट्पृष्ठातिदेशाधिकरणम् –३)

## विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः ॥ ७ ॥ (पू)

"विश्वजित्सर्वपृष्ठो भवती"ति श्रूयते ॥

तत्र किमयं सर्वपृष्ठशब्दोऽनुवादकः ? विधिर्वा ? इति संदेहे —

तत्र सर्वपृष्ठे विश्वजिति यागे ज्योतिष्टोमविकृतौ, अतिदेशतः प्राप्तानि ज्यौतिष्टोमिकानि पृष्ठानि सर्वपृष्ठशब्देनानूद्यन्ते । कुतो हेतोः ? तत्पूर्वकत्वात् – विश्वजितस्सोमपूर्वकत्वात् – सोमप्रकृतिकत्वात् । अनुवाददार्ढ्यार्थश्चकारः । "सप्तदशानि पृष्ठानि" इति पृष्ठशब्दश्च ज्योतिष्टोमेऽस्ति । अतः प्रकृतितः प्राप्तानि पृष्ठान्यनूद्यन्ते, न तु सर्वपृष्ठता विधीयते ॥ ७ ॥

## षडहाद्वा तत्र हि चोदना ॥ ८ ॥ (सि)

वाकारोऽनुवादपक्षव्यावर्तकः । द्वादशाहिकात् षडहादेव सर्वपृष्ठातिदेशकस्सर्वपृष्ठशब्दो न त्वनुवादकः । कुतः ? हिर्हेतौ । यस्मात्कारणात् तत्र–षडहे, "रथन्तरं पृष्ठं भवति" "बृहत्पृष्ठं भवति" इत्यादि पृष्ठचोदना । नैतादृशी पृष्ठचोदना ज्योतिष्टोमे । अतोऽत्र विधिरेवेति ॥ ८ ॥

## [2]लिङ्गदर्शनाच्च ॥ ९ ॥

---

१ मातृकायामविद्यमानमिदं नाम । २ लिङ्गाच्च क. ख.

चकारो हेत्वन्तरसमुच्चयार्थः। "पवमाने रथंतरं करोति आर्भवे बृहत् मध्यत इतराणि वैरूपं होतृसाम" इत्यादिषाडहिक सर्वपृष्ठ चोदनासूचक लिङ्गदर्शनाच्च तत्रैव सर्वपृष्ठचोदना नान्यत्र ज्योतिष्टोमे यतस्ततः प्राप्तस्य सर्वपृष्ठत्वस्यानुवादस्सर्वपृष्ठशब्दस्स्यात् ॥ ९ ॥

## उत्पन्नाधिकारो [1]ज्योतिष्टोमे ॥ १० ॥

यदुक्तं, "सप्तदशानि पृष्ठानि" इत्यस्ति पृष्ठशब्दो ज्योतिष्टोम इति, तत्रोत्तरम् – ज्योतिष्टोमे सप्तदशानि पृष्ठानीति सर्वपृष्ठतापरश्शब्दः, उत्पन्नाधिकारः – उत्पन्नानां माहेन्द्रादि स्तोत्राणां पृष्ठत्वस्तुत्यर्थमनुवाद इत्यर्थः ॥ १० ॥

## [2]लिङ्गसमवायात् ॥ ११ ॥

"रथन्तरं पृष्ठं भवति" "बृहत्पृष्ठं भवति" इति पृष्ठोत्पत्तौ पृष्ठैकत्वद्योतक-लिङ्गसमवायात् न ज्योतिष्टोमे पृष्ठबहुत्वम्; यतस्तदनुवादार्थः पृष्ठशब्दस्स्या-दिति ॥ ११ ॥

## [3]द्वयोरिति चेत् ॥ १२ ॥

इति चेत् पश्यसि षाडहिकानां पृष्ठानां विधिरिति, नैतदुपपद्यते। किन्तु द्वयोर्बृहद्रथन्तरयोः पृष्ठयोः प्रकृतौ विकल्पितयोरधिकारात्। तदयमर्थः,— सर्वशब्दस्यानेकपर्यायत्वादनेकशब्दस्य च द्वयोरपि प्रवृत्तेस्तत्परस्सर्वशब्द इति ॥

## न व्यर्थत्वात्सर्वशब्दस्य ॥ १३ ॥

नैतदुपपद्यते पृष्ठद्वयीपरस्सर्वपृष्ठशब्द इति। कुतः? सर्वशब्दस्य बह्वर्थे प्रसिद्धस्य द्वित्वपरत्वे व्यर्थत्वात् – विरुद्धार्थत्वात् – स्वार्थात्प्रच्युतत्वात् द्वित्वे

---

१ ... ज्योतिष्टोमः क. ख.

२ इदं सूत्रं 'क' 'ख' नास्ति।

३ द्वयोर्विधिरिति चेत् क. ख.

लक्षणा स्यात् । पृष्ठानां विधिः सर्वतायाश्च विधिरिति वाक्यभेदः । सर्वतामात्रं विधीयते, सा च सर्वता पृष्ठान्य ... ... संपादयितुं न शक्यत इत्यर्थात्पृष्ठानि प्राप्तानि, अतो नोभयविधिः, यतो वाक्यभेदस्स्यात् । अतष्षाडहिकानां सर्वताविधिपरस्सर्वशब्द इति ॥ १३ ॥

प्रयोजनन्त्वनुष्ठानरूपम् — पूर्वपक्षे बृहद्रथन्तरयोरुभयोरावृत्त्या सर्वपृष्ठतासंपादनम्; सिद्धान्ते तु न तथेति ॥ ३ ॥

( निष्कासाधिकरणम् — ४)

## तथावभृथस्सोमात् ॥ १४ ॥ (सि)

वरुणप्रघासे श्रूयते — " वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति " इति ॥

तत्र किं दार्शपूर्णमासिके चोदकप्राप्ते " एष वै दर्शपूर्णमासयोरवभृथः " इत्युपचरितेऽपां व्युत्सेके तुषनिष्कासविधिः ? उत सौमिकावभृथसमाननामत्वात्तद्धर्मातिदेशः ? इति संदेहे सति —

वारुणप्रघासिकावभृथशब्दोऽपि तथा — सर्वपृष्ठे षाडहिकधर्मातिदेशवदेव । अत्रत्यावभृथस्सोमधर्मान् गृह्णाति, न दार्शपूर्णमासिकादुपचरितादपां व्युत्सेकात् ॥

## [1]प्रकृतिरिति चेत् ॥ १५ ॥

सर्वेष्टीनां दर्शपूर्णमासौ प्रकृतिः । वरुणप्रघासश्च तद्विकृतिः । अतः प्रकृतितः प्राप्तेऽपां व्युत्सेकरूपेऽवभृथे तुषनिष्कासाख्यगुणविधिस्सन्निहितत्वादिति पश्यसि चेत् — इत्यस्खलितपक्षानुवादपरं सूत्रम् ॥ १५ ॥

## न भक्तित्वात् ॥ १६ ॥

नैतदुपपद्यते दार्शपूर्णमासिकेऽपां व्युत्सेकरूपेऽवभृथे तुषनिष्कासरूपगुणविधिरिति । कुतो हेतोः ? दर्शपूर्णमासयोः श्रूयमाणस्यावभृथशब्दस्य भाक्तत्वात् — अमुख्यत्वात् — गौणत्वात् — औपचारिकत्वादिति ॥ १६ ॥

---

१ प्रकृतेरिति चेत् क ख.

लिङ्गदर्शनाच्च ॥ १७ ॥

चकारो हेत्वन्तरार्थः। "नायुर्दा जुहोति, न साम गायति" इत्यादि-सौमिकावभृथधर्मनिषेधपरात् लिङ्गाच्च सौमिकावभृथादेव धर्मग्रहणम्। इतरथा हि कतिपयधर्माणां निषेधो नोपपद्यते ॥ १७ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पूर्वपक्षे, प्रणीतापात्रे तुषनिष्कासं संनिधाय व्युत्सेक एव स्यात्, सिद्धान्ते तु न तथा इति ॥ ४ ॥

(द्रव्यादेशाधिकरणम्—५)

द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्-प्रकृतित्वात् ॥ १८ ॥ (सि)

वारुणप्रघासिकावभृथसंज्ञा सौमिकावभृथधर्मग्राहिणीति समधिगतम् ॥

तत्रापि संदिह्यते—किमयमवभृथः पुरोडाशद्रव्यकस्स्यात्? उत तुष-निष्कासद्रव्यकः? इति ॥

वारुणप्रघासिकेऽवभृथे द्रव्यादेशे—द्रव्यातिदेशे कर्तव्ये सति, वारुण-प्रघासिकोऽवभृथः तद्द्रव्यस्स्यात्—तुषनिष्कासद्रव्यकस्स्यात्। कुतः? श्रुति-संयोगात्—वारुणप्रघासिकावभृथश्रुतौ तुषनिष्कासद्रव्यसंयोगात्। तुरेव-कारार्थे। अनादेशे—द्रव्यानादेश एवावभृथान्तरे पुरोडाशः स्याद्वारुणः तत्प्रकृतित्वात्—प्रसिद्धावभृथप्रकृतिकत्वादवभृथान्तरस्य। इह तु द्रव्यस्य श्रुतत्वात् श्रुतमेवोपादेयं नाश्रुतमिति ॥ १८ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पूर्वपक्षे पुरोडाशतुषनिष्कासानां समुच्चयेनानुष्ठानम्, सिद्धान्ते तु पुरोडाशाननुप्रवेश इति ॥ ५ ॥

(वैष्णवशब्दस्य सौमिकातिथ्येष्टिधर्मानतिदेशकत्वाधिकरणम्—६)

गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ १९ ॥ (सि)

आतिथ्ये श्रूयते—"वैष्णवो नवकपालो भवती"ति। राजसूये तु पूर्वस्मिन् त्रिसंयुक्ते वैष्णवस्त्रिकपाल इति ॥

तत्र संदिह्यते—किमयं वैष्णवशब्दो ज्यौतिष्टोमिकातिथ्याधर्माणां ग्राहकः? नवा? इति ॥

तत्र राजसूयत्रिकपाले वैष्णवे धर्मागमे कर्तव्ये सति, विष्णुर्देवतास्येति विष्णुरूपगुणविधिरयम्। अतः प्रायणीयादिशब्दवत् धर्मानातिथ्यावैष्णवनवकपालगतान्न गृह्णीयात्। कुतो हेतोः? देवतारूपगुणविधेरुभयत्र समत्वात्। अतो न गुणविधिरतिदेशक इति। १९ ॥

प्रयोजनन्त्वनुष्ठानरूपं—आतिथ्यावैष्णवनवकपाल धर्मग्रहणे नवकपाला-(तिथ्या) धर्माश्च त्रिकपाले स्युः पूर्वपक्षे। सिद्धान्ते तु, राजसूयगते यावदुक्त-मिति—एकदेवताधर्मानेव गृह्णातीति ॥ ६ ॥

(निर्मंथ्याधिकरणम्—७)

## निर्मंथ्यादिषु चैवम् ॥ २० ॥ (सि)

अग्नीषोमीये पशौ धर्मवान्निर्मंथ्याग्निराम्नातः पशुश्रपणार्थम्। अत्रानुश्रूयते—"निर्मंथ्येनेष्टकाः पचन्ति" इति ॥

तथा दर्शपूर्णमासयोर्बर्हिराज्ये धर्मवती श्रूयेते। पशौ तु "बर्हिषा यूपावटमास्तृणाति, आज्येन यूपमनक्ति" इति चाम्नातम् ॥

तत्र किं निर्मंथ्यबर्हिराज्यशब्दाः प्राकृतधर्मग्राहकाः? उत न ग्राहकाः? इति संदेहे—

निर्मंथ्यादिषु—'निर्मंथ्येनेष्टकाः पचन्ति' 'बर्हिषा यूपावटमास्तृणाति' 'आज्येनाऽऽङ्क्ते' इत्यादिषु च, गुणविधिपरत्वादेव अग्नीषोमीयगतान्निर्मंथ्यात्, दार्शपूर्णमासिकाभ्यां सधर्मकाभ्यामाज्यबर्हिर्भ्याञ्च धर्मग्रहो न स्यात्। निर्मंथ्यादयः शब्दा नातिदेशका इति, निर्मथनादिरूपगुणस्यैतेष्वप्युक्तुं शक्यत्वात् ॥

प्रयोजनन्त्वनुष्ठानरूपं – सधर्मकाधर्मकप्रभेदेन विशदमेव ।। ७ ।।

( प्रणयनाधिकरणम्–८ )

## [1]सौमिकन्तु प्रणयनमवाच्यं हीतरत् ।। २१ ( पू )

चातुर्मास्येषु श्रूयते – "द्वयोः प्रणयन्ति, तस्माद्द्वाभ्यां यन्ति" इति। अस्ति च सोमे प्रणयनं धर्मवत् । तथा दर्शपूर्णमासयोरधर्मकं प्रणयनम् ।।

तत्र संदिह्यते – किं सौमिकमेतदग्निप्रणयनम् ? उत दार्शपूर्णमासिकम् ? इति ।।

तत्र चातुर्मास्याग्निप्रणयने धर्मातिदेशे कर्तव्ये सति, सौमिकन्तु – सौमिकमेवाग्निप्रणयनं चातुर्मास्येष्वतिदिश्यते, न दार्शपूर्णमासिकम् । कुतो हेतोः ? इतरत् – दार्शपूर्णमासिकं, अतिदेशप्राप्तत्वेन अवाच्यं स्यात् – अवक्तव्यं स्यात् । दार्शपूर्णमासिकस्य प्रणयनस्य प्राप्तत्वेन तस्य पुनर्वचनमनर्थकं स्यात्, अतोऽत्र सौमिकमेवाग्निप्रणयनमिति ।। २१ ।।

## उत्तरवेदि प्रतिषेधश्च तद्वत् ।। २२ ।।

चकारो हेत्वन्तरप्रदर्शनार्थः । "न वैश्वदेव उत्तरवेदिमुपवपन्ति, न शुनासीर्ये" इति उत्तरवेदि प्रतिषेधश्च तद्वत् – प्रणयनवचनवदेव सौमिकधर्मप्रापकः ।।

अयमर्थः – ... ... ... एवोत्तरवेदिसद्भावात्, दर्शपूर्णमासयोरुत्तरवेद्यभावात्, तत्प्रतिषेधस्य च प्राप्तिपूर्वकत्वात् सौमिकमेव प्रणयनं न दार्शपूर्णमासिकम् ।। २२ ।।

## प्राकृतं वा नामत्वात् ।। २३ ।। (सि)

वाकारः पक्षव्यावर्तकः । प्राकृतमेव – दार्शपूर्णमासिकमेवाग्निप्रणयनमतिदिश्येत । कुतः ? नामत्वात् – प्रणयनशब्दस्य दर्शपूर्णमासयोः

---

१ प्रणयनन्तु सौमिक ... ख.

प्राचीनाग्निप्रणयनरूपपदार्थनामत्वात्, प्रकृतिविकृत्योरसन्निहितत्वादित्यपि हेतुर्द्रष्टव्यः ॥ २३ ॥

## परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २४ ॥

यदुक्तं, दार्शपूर्णमासिकस्याग्निप्रणयनस्यातिदेशे सति पुनराम्नानं व्यर्थं स्यादिति; तत्रोत्तरम्। पुनः श्रवणं परिसंख्यार्थं, चतुर्षु पर्वसु प्राप्तौ द्वयोरेव पर्वणोरिति। गुणार्थं वा – सधर्मकं प्रणयनं द्वयोः, अधर्मकमाद्यन्तयोरित्येवंरूपगुणार्थं वा। अर्थवादो वा – "ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासस्साकमेधश्च" इति गत्यर्थवादो वा स्यात्। तत्र परिसंख्यागुणार्थत्वयोर्दोषदर्शनात् प्रयोजनाभावात् व्यर्थत्वात् क्रमेण गत्यर्थवाद एव स्यात्। अतो दार्शपूर्णमासिकमेवाग्निप्रणयनं चातुर्मास्येष्वतिदिश्यत इति ॥ २४ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – सौमिकाग्निप्रणयनवत् सधर्मकमेव स्यात्पूर्वपक्षे, सिद्धान्ते त्वधर्मकमिति ॥ ८ ॥

(प्रथमोत्तमाधिकरणम्–९)

## प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ २५ ॥ (पू)

"द्वयोः प्रणयन्ति" इति श्रूयते ॥

तत्र संदेहः – किं ययोः कयोश्चित् द्वयोः पर्वणोः? उत प्रथमोत्तमयोः? इति ॥

प्रागुक्तमग्निप्रणयनं प्रथमोत्तमयोः – आद्यन्तयोः पर्वणोरेव स्यात्, न मध्यमयोः। कुतो हेतोः? उत्तरवेदिप्रतिषेधात् – 'न वैश्वदेव उत्तरवेदिमुपवपन्ति, न शुनासीर्ये' इति प्रतिषेधात्। प्रतिषेधस्य च प्राप्तिपूर्वकत्वात् तयोरेव स्यात् ॥ २५ ॥

## मध्यमयोर्वा गत्यर्थवादात् ॥ २६ ॥ (सि)

वाकारः प्रागुक्तपक्षव्यावर्तकः। मध्यमयोरेव पर्वणोः – वरुणप्रघास-साकमेधयोः – अग्निप्रणयनं स्यात्। कुतः कारणात्? गत्यर्थवादात् – "ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासस्साकमेधश्च" इत्यूरुत्वेन संस्तवात्, तत्संस्तवस्य च समाप्तिलिङ्गत्वात् समाप्तेश्च प्रणयनेन विनानुपपद्यमानत्वात्, तयोरेव – मध्यमयोरेव प्रणयनं स्यादित्यर्थः ॥ २६ ॥

## औत्तरवेदिकोऽनारभ्यवाद प्रतिषेधः ॥ २७ ॥

यदुक्तमुत्तरवेदिप्रतिषेधादाद्यन्तयोरेव पर्वणोः प्रणयनमिति, तदुत्तारकमिदं सूत्रम्। अनारभ्यवादप्रतिषेधः – कञ्चिदपि पर्वविशेषमनारभ्यानुपा...ना-दित्यर्थः .... थ्यते न कामेवेति वादस्य प्रतिषेधः आद्यन्तयोरेव स्यात् न तु तत्प्रापकम्। अर्थवादेन मध्यमयोरेवाग्निप्रणयनप्राप्तौ सिद्धायां, अत औत्तर-वेदिकाग्निप्रणयनरूपगुणविधानार्थमिदं पुनः श्रवणम्। अतो मध्यमयोरेवौत्तर-वेदिकाग्निप्रणयनं व्यवतिष्ठते। २७ ॥

अत्र वार्तिककारेणाधिकरणद्वयमप्येकाधिकरणीकृत्य, सूत्राण्यन्यथा योज-यित्वा प्रकारान्तरेणाधिकरणं नीतम्। तत्तत्रावलोकयताम्। इह तु विस्तर-भयान्न विलिख्यते ॥

प्रयोजनन्त्वनुष्ठानरूपम् – आद्यन्तयोः पर्वणोः – मध्यमयोः पर्वणोरिति पक्षयोः स्पष्टम् ॥ ९ ॥

(स्वरसामाधिकरणम् – १० )

## स्वरसामैककपालामिक्षञ्च लिङ्गदर्शनात् ॥ २८ ॥ (सि)

*क्वचिच्छ्रूयते – 'पृष्ठ्यष्पडहो द्वौ स्वरसामानौ' इति। तथा वैश्वदेवे श्रूयते – 'द्यावापृथिव्य एककपालः' इति। तत्राप्याम्नाता विशेषधर्माः – 'सर्वहुतं जुहोति' 'पुनरपर्यावर्तयञ्जुहोति' इति। पुनरन्यत्र 'काय एककपालः' इति। तत्रैव च श्रूयते – 'वैश्वदेव्यामिक्षा' इति। तत्रापि विशेषधर्माः केचिदाम्नाताः। पुनरन्यत्र 'मैत्रावरुण्यामिक्षा' इति ॥

---

* गवामयने श्रूयते - अभितो दिवाकीर्त्यमहः त्रयः स्वरसामानो भवन्ति इति। तेषां विशेषधर्माश्चाम्नाताः — सप्तदशाभवन्ति, सन्ततः यातिग्राह्यागृह्यन्ते. इति च।

तत्र संदेहः — किं स्वरसामैककपालामिक्षाशब्दाः गवामयनादिभ्योऽन्यत्र श्रूयमाणाः, गावामयनिकादिस्वरसामादिभ्यो धर्मान् गृह्णन्ति? उत न? इति ॥

तत्र स्वरसामैककपालामिक्षश्च — क्रमोदाहृतं गावामयनिकेभ्यः स्वरसामभ्यः, वैश्वदेविकैककपालात्, वैश्वदेव्यामिक्षायाश्च धर्माणां ग्राहकाः। कुतो हेतोः? लिङ्गदर्शनात् — पृष्ठ्यच्छ्वडहो द्वौ स्वरसामानाविति च, "यत्सर्वहुतं जुहोति सा त्वेका परिचक्षा, हुतोऽहुतोऽन्यः पर्यावर्तते सा द्वितीयेति च, 'न वाजिनेन प्रचरन्ति च,' इत्येवमादीनां विकृतिगतानां प्राकृतधर्मग्रहणसूचकानां लिङ्गानां दर्शनाच्च धर्मग्राहका एव।

* स्वरसामनामसामान्यात् — एककपालनामसामान्यात् — आमिक्षानामसामान्याच्च ग्राहका एव। न तु "गुणविधिस्तु न गृह्णीया"दिति न्यायेन प्राकृतधर्माग्रहणम्, गुणानां कल्पयितु मशक्यत्वादेव ॥

प्रयोजनन्त्वनुष्ठानरूपम् — पूर्वपक्षे विकृतिविशेषेषु यावदाम्नातमनुष्ठेयम्; सिद्धान्ते तु गावामयनिकादिस्वरसामादीनां धर्मग्रहणेन सामस्त्यमिति ॥ १० ॥

(वासोऽनोऽधिकरणम्—११)

## कर्मजे कर्म यूपवत् ॥ २९ ॥ (पू)

क्वचिच्छ्रूयते — 'वासो ददाति, अनो ददाति' इति।

तत्र संदिह्यते — किं वासोऽनसी कृत्वा देयम्? उत सिद्धे एव? इति ॥ तत्रापि किं कर्मनिमित्तावेतौ वासश्शब्दानश्शब्दौ? उत आकृतिनिमित्तौ? इति।

कर्मनिमित्तत्वे तत्क्रिया — जातिनिमित्तत्वे तु सिद्धोपादानमिति।

तत्र कर्मजे — वयनतक्षणादि कर्मजे वासआदौ, कर्म — वयनादिकं कर्तव्यम्। न ततः प्राक् वासआदिशब्दप्रवृत्तिः। किन्त्वेतादृशेषु तदानीं कर्म कृत्वैव वासःप्रभृतयः प्रयोक्तव्याः। तत्र दृष्टान्तः — यूपवत् इति। यथा यूपशब्दे प्रयुज्यमाने जोषणादिधर्माः प्रवर्तन्ते, तत्प्रवृत्त्युत्तरकालमेव च यूपशब्द

*अत्र "चोदनासामान्याद्वा" इत्येकं सूत्रमधिकं, तद् व्याख्या च क. ख.

प्रयोगः, तत्संस्कारान्न कृत्वैव यूपशब्दः प्रयुज्यते, तद्वदिहापि वासआदौ श्रूयमाणे वयनादिकं कर्म कृत्वैव वासःप्रभृतयो देयाः, नान्यथा ॥ २९ ॥

## रूपं वाऽशेषभूतत्वात् ॥ ३० ॥ (सि)

वाकारः पक्षव्यावर्तकः। वास आददाने श्रूयमाणे वासोरूपमेवादर्तव्यं स्यात्। न तदानीं वयनादि कृत्वा तद्दानमिति। कुतो हेतोः? अशेषभूतत्वात् न तत्र वयनादिक्रिया कर्मशेषत्वेन श्रूयते। अतो जातिनिमित्ता एते शब्दा इति॥

प्रयोजनन्त्वनुष्ठानरूपं—कृत्वा वास आदि दद्यात्पूर्वपक्षे, सिद्धान्ते तु न तथेति ॥ ११ ॥

(लौकिकाग्न्यधिकरणम्—१२)

## विशये लौकिकस्स्यात्सर्वार्थत्वात् ॥ ३१ ॥ (सि)

गर्गत्रिरात्रे आज्यदोहसामानि प्रकृत्य श्रूयते, "अग्निमुपसमाधाय स्तुवीत" इति ॥

तत्र संदेहः—किं वैदिकाग्निः उप—समीपे, निधेयः? उत लौकिकाग्निः? इति।

तत्र उपनिधेयोग्निः, विशये सति लौकिक एवाग्नि रुपनिधेयः स्यात्, न वैदिकः क्लृप्तकार्योऽग्निः। कुतः? सर्वार्थत्वात्—लौकिकस्य वह्नेरनिर्दिष्ट-कार्यत्वेन सर्वकर्मार्थत्वात्। अतो लौकिक एवाग्निरुपनिधेयः ॥ ३१ ॥

## न वैदिकमर्थनिर्देशात् ॥ ३२ ॥

न वैदिकमग्निमुपदध्यात्। कुतो हेतोः? अर्थनिर्देशात्—वैदिकस्य प्रयोजननिर्देशात्—'यदाहवनीये जुहोती"त्यादिभिर्निर्दिष्टप्रयोजनत्वात्। लौकिक-स्त्वनिर्दिष्टप्रयोजन इति ॥ ३२ ॥

## तथोत्पत्तिरितरेषां समत्वात् ॥ ३३ ॥

न धैष्ण्याग्नय उपधेयाः, इतरेषां–धैष्ण्यानामग्नीनामपि तथैव–आहवनीयाग्निवदेव "धिष्ण्यान् व्याघारयती"त्यादिभिः कर्मण्युत्पत्तिः। कुतो हेतोः? समत्वात्–तैराहवनीयादिभिर्निर्दिष्टकार्यैर्धैष्ण्याग्नीनामपि समत्वात् ते नोपधीयन्ते। कर्मापवर्गे तु तन्निधानेऽपि न दोषः, कर्मान्ते तदग्नीनां लौकिकत्वादेव ॥ ३३ ॥

प्रयोजनन्त्वनुष्ठानरूपं–वैदिकलौकिकाग्न्युपनिधानेन स्पष्टम् ॥ १२ ॥

( उपशयाधिकरणम्–१३ )

## [1]संस्कृतस्स्यात्तच्छब्दत्वात् ॥ ३४ ॥ (पू)

एकादशिन्यां श्रूयते–"उपशयो यूपो भवति" इति। तत्र संदिह्यते–किमुपशये जोषणादयो यूपसंस्काराः कर्तव्याः? उत न कर्तव्याः? इति।

अपशुरुपशयो यूपः, जोषणादिभिः संस्कृत एव स्यात्। कुतो हेतोः? तच्छब्दत्वात्–उप ... ... ... ... ... ... ... ... ... ... ततो यूपधर्माः प्रवर्तन्त इत्यर्थः ॥ ३४ ॥

## भक्त्या वाऽयज्ञशेषत्वाद्गुणानामभिधानत्वात् ॥३५ ॥ (सि)

वाकारः पक्षव्यावर्तकः। नोपशये ... ... ... ... ... कर्तव्याः। कुतो हेतोः? उपशयस्य अयज्ञशेषत्वात्–पशुनियोजनार्थत्वाभावेन यज्ञशेषत्वाभावात्। यूपशब्दप्रयोगस्तु, यूपशब्दस्य अमन्त्रकतक्षणादिरूपगुणानामभिधानत्वात्–तद्वाचकत्वात् "यजमानो वा आहवनीय" इत्यादिवत् भक्त्या–गौण्या वृत्त्या प्रयुक्तस्स्यादित्यर्थः ॥ ३५ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–पक्षयोर्विशदम् ॥ १३ ॥

---

१ संस्कृतं स्यात्तच्छब्दत्वात् क. ख.

( पृष्ठशब्दाधिकरणम्—१४ )

## कर्मणः पृष्ठशब्दस्स्यात्तथाभूतोपदेशात् ॥ ३६ ॥ (पू)

अग्नौ श्रूयते—"पृष्ठैरुपतिष्ठते" इति ॥

तत्र संदिह्यते—किं पृष्ठधर्माः "रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्, बृहति प्रस्तूयमाने समुद्रम्" इत्येवंरूपाः [1]पृष्ठधर्माः कर्तव्याः? उत न? इति ॥

तत्र पृष्ठशब्दः कर्मणो वाचकस्स्यात् न द्रव्यस्य। कुतो हेतोः? तथाभूतोपदेशात्—तथाभूतस्य कर्मरूपस्यैव पृष्ठशब्दस्य प्रागुपदेशात्, अत्र च पृष्ठशब्दश्रवणात् प्राकृत पृष्ठप्राप्तौ पुनः श्रवणवैयर्थ्यात्, पृष्ठसदृशैः कर्मभिरुपतिष्ठेतेत्येवंरूपोऽर्थः कल्प्यते, अतः तद्धर्महिंकारादिप्रापकमिति ॥

## अभिधानोपदेशाद्वा विप्रतिषेधाद्द्रव्येषु पृष्ठशब्दस्स्यात् ॥ ३७ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। द्रव्येषु—अभीवर्त्याद्यृक्षु पृष्ठशब्दस्स्यात्। न कर्मसु। कुतः? अभिधानोपदेशात्—अभिधाने—मन्त्राभिधान एव आत्मनेपदोपदेशात्। उपपूर्वात्तिष्ठतेरात्मनेपदन्तु मन्त्रकरणे विहितम्। इतरथा हि आत्मनेपदानुग्रहे कर्तव्ये, पृष्ठरूपकर्मानुपपत्तिः—तदनुग्रहे चात्मनेपदानुपपत्तिरिति विप्रतिषेधात्—इतरेतरविरोधात्, पृष्ठशब्दस्य अभीवर्त्याद्यृग्वाचकत्वेन मन्त्रकरणत्वे विहितात्मनेपदानुग्रह एव न्याय्य इति ॥ ३७ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पूर्वपक्षे मृग्यम्। सिद्धान्ते तु विशदम् ॥ १४ ॥

---

इति जैमिनिसूत्रवृत्तौ फलवत्यां सप्तमस्याध्यायस्य तृतीयः पादः ॥

---

१ इदं पुनरुक्तम्।

## सप्तमस्याध्यायस्य चतुर्थः पादः

(इतिकर्तव्यताधिकरणम् -१)

### इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥ (सि)

अनारभ्य किञ्चिच्छ्रूयते - "सौर्यश्चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति ॥

तत्र संदेहः-किं सौर्ये अधर्मके इतिकर्तव्यता नास्ति? उत अस्ति? इति।

*तत्र यजतेः - सौर्यादियागस्य, इतिकर्तव्यता विधेः - इतिकर्तव्यतायाः विध्यन्तस्य, विधेः - विधानाद्धेतोः पूर्ववत्त्वं - विहितेतिकर्तव्यतावत्त्वम्। तदयमर्थः - सौर्यादियागस्यासमग्राङ्गत्वेन विध्यन्तसाकांक्षत्वात्, विध्यन्तस्य च दर्शपूर्णमासयोराम्नानात्, विकृतिक्रमपदात् पूर्ववत्त्वमिति। प्राकृतानां धर्माणां प्रकृतौ साक्षात्संबन्धः, विकृतौ त्वानुमानिक इति। इदञ्चोत्तरविवक्षार्थम् ॥ १ ॥

प्रयोजनन्त्वनुष्ठानरूपम् - असमग्रसमग्राङ्गानुष्ठानहेतोः स्पष्टम्। अथवा नैवात्र उत्तरचिन्तार्थे प्रयोजनं वर्णनीयम् ॥ १ ॥

(दृष्टप्रवृत्त्यधिकरणम् -२)

### स लौकिकस्स्याद्दृष्टप्रवृत्तित्वात् ॥ २ ॥ (पू)

सौर्यादावेव चिन्त्यते - किमितिकर्तव्यता वैदिकी लौकिकी वेत्यनियमः? उत लौकिक्येव? अथवा वैदिक्येव? इति।

तत्र सौर्यादौ सः - कर्तव्यतोपायो लौकिकस्स्यात्। कुतो हेतोः? दृष्टप्रवृत्तित्वात् - पार्वणस्थालीपाकादिषु लौकिकेषु प्रवृत्तिदर्शनात्। तत्र च लौकिक एव कर्तव्यतोपायो न वैदिकः। तद्वदत्रापि लौकिक एव कर्तव्यतोपायो न श्रौतः। अतो नात्र विध्यन्तविधिः, प्राप्तत्वाल्लोकत इति ॥ २ ॥

---

* पूर्वग्रन्थाननुरूपा इयं व्याख्या।

### वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥

तुना सर्वत्र लौकिक्येवेतिकर्तव्यतेत्ययं पक्षो व्यावर्त्यते। ततः—लौकिकेतिकर्तव्यतातः सकाशात् क्वचिल्लौकिकान्यत्वं—वैदिकीतिकर्तव्यतापीति। कुतो हेतोः? वचनात्। अयमर्थः—यत्र वचनं तत्र वैदिकीतिकर्तव्यता, अन्यत्र तु सर्वत्र लौकिक्येव। न सर्वत्र लौकिकी, न सर्वत्र वैदिकीति ॥ ३ ॥

### लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥ ४ ॥ (सि)

वाकारः प्रागुक्तपक्षव्यावर्तकः। वैदिक्येवेतिकर्तव्यता "प्रयाजे प्रयाजे कृष्णलं जुहोति" इत्यादिना नियम्यते—नियमेन विधीयते। कुतो हेतोः? लिङ्गस्य तद्गुणत्वात्—लिङ्गस्य प्रयाजादिलिङ्गस्य, तद्गुणत्वात् वैदिकापूर्वगुणप्रतिपादकत्वात्। विकृतौ प्रयाजादिश्रवणं वैदिकीमेवेतिकर्तव्यतामवगमयति। अतो न लौकिक्या इतिकर्तव्यतायाः प्राप्तिरिति ॥ ४ ॥

### [1]अपि वाऽन्यायपूर्वकत्वादत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥

अपि वेत्यनन्तरोक्तपक्षव्यावृत्तिः क्रियते। यदुक्तं, 'प्रयाजे प्रयाजे कृष्णलं जुहोती'ति वैदिकलिङ्गात् वैदिक्येवेतिकर्तव्यतेति; तत्रोत्तरम्; नैतदुपपद्यते वैदिक्येवेतिकर्तव्यतेति। कुतः? अन्यायपूर्वकत्वात्—वैदिकेतिकर्तव्यताप्रापकलिङ्ग ... ... ... भावादित्यर्थः। तर्हि प्रयाजादिलिङ्गसङ्घातस्य का गतिरिति चेत्—तत्रोत्तरम्; प्रयाजादीनां प्रकरणादिभिः प्रकृतावभिसंबन्धात्, विकृतौ प्रयाजादि ... ... ... ... ... विकृतौ प्रयाजादयस्तत्रैव निविशन्त इति। अत्र विकृतौ विधेयभागस्याप्यभावात् नित्यानुवादवचनानि—अनर्थकानि स्युरित्यर्थः ॥ ५ ॥

---

१ अपिवाऽन्यायपूर्वत्वादत्र ... ... क ख.

मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ६ ॥

लौकिकवैदिकेतिकर्तव्यतयोः प्राप्त्यावाशङ्क्यमानायां तदपि नोपपद्यते। कुतो हेतोः? मिथो विप्रतिषेधात्—लौकिकप्राप्तौ वैदिक्या अप्राप्तिः, तत्प्राप्तौ च तदप्राप्तिरिति मिथोविरोधाच्च हेतोरेकैवेतिकर्तव्यता सौर्यादौ स्यात्। सा च लौकिक्येव प्रागुक्तयुक्त्या। अतो गुणानां प्रयाजाद्यङ्गानां यथार्थ-कल्पना स्यात्—यथाप्रयोजनमेव क्लृप्तिः स्यात्। अयमर्थः—एकयैति-कर्तव्यतया विकृतावुपकारसिद्धेरितिकर्तव्यतान्तरस्याप्रवृत्तेः प्रयाजादीनाञ्च प्रकरणा-दिभिः प्रकृतावेव संबन्धात्, विकृतिसंबन्धे च प्रकरणादिव्याकोपात् लौकिक्ये-वेतिकर्तव्यतेति ॥ ६ ॥

भागित्वात्तु नियम्येत गुणानामभिधानत्वात् सम्बन्धादभि-धानवद्यथा धेनुः किशोरेण ॥ ७ ॥

तुना पक्षो व्यावर्त्यते। वैदिक्येवेतिकर्तव्यता नियम्येत, न लौकिकी। कुतः? भागित्वात्—पूर्वभागित्वात्। गुणानां—सौर्यादिषु प्रतिदृश्यमानानां प्रयाजादीनां, अभिधानत्वात्—वैदिक्येवेतिकर्तव्यतेत्येवं-रूपस्यार्थस्य साधकत्वात् संबन्धात् हेतोः वैदिक्येवेतिकर्तव्यता। तत्र दृष्टान्तः—अभिधानवदिति। यथा कौण्डपायिनामयनीयमग्निहोत्रपदं नैयमिक-सहचरितान् धर्मानेव गृह्णाति नान्यान्, तद्वत्। यद्यपि लौकिकीतिकर्तव्यतापि भागिनी भवति, तथापि प्रयाजादिलिङ्गाद्वैदिक्येवेति नियम्यते। यथा कृष्णकिशोरा धेनुरित्युक्ते धेनुशब्दस्य गोव्यक्तौ प्रसिद्धत्वेऽपि किशोरपद-साहचर्यादश्वधेन्वामेव वर्तनमिति गम्यते, तद्वदत्रापि प्रयाजादिलिङ्गाद्वैदिक्येवेति-कर्तव्यतेति ॥ ७ ॥

उत्पत्तीनां समत्वाद्वा [1]यथाधिकारभावस्स्यात् ॥ ८ ॥

---

[1] यथाधिकारं भावस्स्यात् क. ख.

अथवा नैतदेवं लिङ्गेन विकृतौ सौर्यादौ प्रयाजादिप्राप्तिरिति। कुतो हेतोः? उत्पत्तीनां—प्रयाजानुयाजाद्युत्पत्तीनां इतरेतरगुणप्रधानभावाभावेन समत्वात्—तुल्यत्वात् प्रयाजदर्शनमात्रेण नानुयाजानां प्राप्तिरिति। वाकार एवकारार्थे। अतो यथाधिकारभावः स्यात्—प्रयाजादीनां यथाधिकारं यथाप्रकरणं सद्भावः स्यात्। न तु विकृतावपि तेषां निवेशः। विकृतौ प्रयाजादिप्राप्तिस्तु, प्रधानं विदधता विकृतिविधिनैव विधेया स्यात, नान्यथा ॥ ८ ॥

## उत्पत्तिविशेषवचनञ्च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥

यदुक्तं विकृतिचोदनया प्रधानमपि विधीयते, प्रयाजादयोऽपि विधीयन्त इति, तदयुक्तम्। कथम्? उत्पत्तिः—प्रधानोत्पत्तिः, शेषवचनं—प्रयाजादि विधानञ्च, एकस्मिन्—विकृतिचोदनावाक्ये, विप्रतिषिद्धम्—विरुद्धम्। उभयविधाने वाक्यभेदादेतद्विधिद्वयं नोपपद्यत इत्यर्थः। अतो लिङ्गादेव प्रयाजादिप्राप्तिर्विकृतौ, न विकृतिचोदनया ॥ ९ ॥

## विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथा हि लिङ्ग-दर्शनम् ॥ १० ॥

वाकारः पक्षव्यावर्तकः। चोदनायां—सौर्यादिविकृतिचोदनायां, प्रकृतिवत्—प्रकृतिवदिति वाक्येन, विध्यन्तः—इतिकर्तव्यता, प्रवर्तेत न लौकिकी। कथम्? "प्रयाजे प्रयाजे कृष्णलं जुहोति" इति विकृतिगत प्रयाजादिलिङ्गदर्शनं तथा हि तथैव वैदिकेतिकर्तव्यताप्राप्तिं दर्शयति नान्यथा ॥ १० ॥

## लिङ्गहेतुत्वादलिङ्गे [1]लौकिकी स्यात् ॥ ११ ॥

यद्युच्येत, प्रयाजादिलिङ्गदर्शनात् वैदिकीतिकर्तव्यतेति, तर्हि विकृति-विशेषे प्रयाजादिप्राप्तेर्लिङ्गहेतुत्वात्—प्रयाजादिदर्शनहेतुकत्वात्, अलिङ्गे—

---

१ लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् क. ख.

ऐन्द्राग्नादौ विकृतिविशेषे लिङ्गाभावादेव लौकिकीतिकर्तव्यता स्यात्, न वैदिकी ॥ ११ ॥

## लिङ्गस्य पूर्व[1]वत्त्वाद्वा चोदनाशब्दसामान्यादेकेनापि [2]निरुच्येत यथा स्थालीपुलाकेन ॥ १२ ॥

सर्वासां विकृतीनां पूर्ववत्त्वात्–प्रकृतिपूर्वकत्वात्, लिङ्गस्य–प्रयाजादिलिङ्गस्य च प्रापकत्वात्, एकेनापि–प्रयाजमात्रदर्शनेन कृत्स्ना वैदिकीतिकर्तव्यता, निरुच्येत। कुतो हेतोः? चोदनाशब्दसामान्यात्–चोदनाशब्दस्य-प्रधानचोदनाशब्दस्य सामान्यात्–साधारणत्वात्। प्रकृतिविकृत्योस्सर्वत्र विकृतिषु विध्यादिरस्ति, विध्यन्तो नास्ति। अतो विकृतिचोदनानां समानता। अत एकेनापि लिङ्गेन प्रयाजाद्यङ्गकात्स्र्न्यं निरुच्येत सौर्यादिषु। तत्र दृष्टान्तः–यथा स्थाली पुलाकेनेति। यथा पक्वेन एकेन स्थालीगत पुलाकेन सिक्थेन स्थालीस्थं सर्वं पक्वमिति ज्ञायते, तद्वदिहापि एकेनापि प्रयाजमात्रलिङ्गेन सर्वा विकृतयस्सेतिकर्तव्यताका ज्ञायन्त इत्यर्थः ॥

प्रयोजनन्त्वनुष्ठानरूपम् — विचारसुगममिति नेह विलिख्यते ॥ २ ॥

(द्वादशाहिकाधिकरणम्–३)

## द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत् ॥ १३ ॥ (पू)

"प्रजाकामा गवामयनमुपेयु"रिति गवामयनं विधायेदमाम्नायते–"ज्योतिर्गौरायु"रिति। गवामयने द्वादशाहिको विध्यन्त इति च वक्ष्यते। चोदकेन च द्वादशाहिका धर्माः प्राप्यन्ते, नामभिश्चैकाहानां धर्माः। तत्र येषां धर्माणां द्वादशाहिकानां ऐकाहिकानां अविरोधः, तेषामुभयेषामनुष्ठानम् ॥

---

१ ... पूर्ववत्त्वाच्चोदना ... ... क. ख.

२ ... निरूप्येत ... ... क.

विरुद्धेषु धर्मेषु संदिह्यते—किं द्वादशाहिका धर्माः कर्तव्याः? उत ऐकाहिकाः? इति ॥

तत्र सत्रे द्वादशाहिका गणचोदनया प्राप्यन्ते। प्रातिस्विकज्योतिरादिनाम भिश्चैकाहिकाः। तत्र परस्परविरुद्धेषु द्वादशाहिकेषु ऐकाहिकेषु च संजातेषु, अहर्गणे गवामयनादौ द्वादशाहिकमेव धर्मजातं विरुद्धमप्यनुष्ठीयते। कुतो हेतोः? द्वादशाहस्य तत्प्रकृतित्वात्—अहर्गणप्रकृतित्वात्, द्वादशाहिका एव धर्माः कर्तव्या नैकाहिका विरुद्धा अपि। ऐकाहिकं ज्योतिरादिनामधेयन्तु, अधिकागमात्—ज्यौतिष्टोमिकेभ्योऽधिकधर्मप्राप्त्या तदाख्यं स्यात्—ज्योतिरादिशब्दवाच्यं स्यात्। ज्योतिरादीनामेकाहनाम्नां अधिकधर्मागमादप्युपपत्तेरित्यर्थः। तत्र दृष्टान्तः—एकाहवदिति। यथा एकाहे प्रकृतिभूते ज्योतिरादावधिकस्तोत्रशस्त्राद्यागमात् ज्योतिरादिनामधेयं प्रवृत्तं, तद्वदत्राप्यधिकागमेन ज्योतिरादिना ज्योतिरादिनाम कृतार्थं सत् न स्वयं विरुद्धानपि धर्मानतिदिशति। अतो द्वादशाहिका एव विरुद्धा अपि धर्माः कर्तव्या इति ॥

"अधिकागमात्तदाख्यं स्यादेकाहवत्"

इत्यस्य सूत्रावयवस्यापरा व्याख्या—ज्योतिराद्येकाहजातं, अधिकागमात्—"पारिप्लवोऽन्वहं भवति" "सुज्ञानमन्वहं भवति" इति द्वादशाहिकाधिकविशेषधर्मावगमात्, तदाख्यं—ज्योतिराद्याख्यं, तेनापि तन्नामोपपद्यत इत्यर्थः। एकाहवदिति सूत्रावयवः प्राग्वदेव व्याख्येयः ॥ १३ ॥

[1]लिङ्गदर्शनाच्च ॥ १४ ॥

चकारो वर्णितार्थे हेत्वन्तरसमुच्चयार्थः। "द्वाभ्यां लोमावद्यति द्वाभ्यां मांसं" इत्यारभ्य "द्वादशोपसदो भवन्त्यात्मानमेव निरवदयते" इति द्वादशोपसत्त्वलिङ्गात्, यदतिरिक्तामेकादशिनीमालभेरन्" इत्युपक्रम्य एकादशिनीविहारप्राप्तिलिङ्गाच्च द्वादशाहिका एव विरुद्धा धर्माः कर्तव्याः, नैकाहिकाष्षडुपसत्त्वादयो विरुद्धा इति ॥ १४ ॥

न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १५ ॥ (सि)

१ लिङ्गाच्च क. ख. ।

न वा—नैवैतदुपपद्यते—विरोधे द्वादशाहिका एव धर्माः कर्तव्या नैकाहिका इति। कुतो हेतोः? ज्योतिरादितः क्रत्वभिधानात्—क्रतुनामधेयात् प्रत्यक्षादेवैकाहिकधर्मप्राप्तिः। नत्वप्रत्यक्षाच्चोदकात् द्वादशाहिकविध्यन्तप्राप्तिरित्यर्थः। यदप्युक्तं अधिकागमाज्ज्योतिरादिनाम कृतार्थं स्यादिति, तदप्यसत्। कुतः अधिकानां ज्योतिरादीनामुच्यमानानां अशब्दत्वात्—इमेऽधिका धर्मा इति शब्दानवबोधितत्वात्। अत ऐकाहिका एव॥

"अधिकागमात्तदाख्यं स्यात्"

इति सूत्रस्य या द्वितीया व्याख्या, तत्परिहारस्तु—अभिप्लवादिपरत्वेन गौणत्वे-—ऽर्थवादत्वेनानर्थक्यात्—अप्रवृत्तिविशेषकरत्वात् तदपि नोपपद्य इत्यर्थः[1]॥ १५॥

[2]लिङ्गसंघातधर्मस्स्यात्तदर्थापत्तेर्द्रव्यवत्॥ १६॥

यदुक्तं, द्वादशोपसत्त्वादि लिङ्गदर्शनात् द्वादशाहिकविध्यन्त इति; तत्रोत्तरम्—द्वादशोपसत्त्वादि लिङ्गं संघातधर्मस्स्यात्—गणधर्मस्स्यात्। कुतो हेतोः? तदर्थापत्तेः—ऐकार्थ्यापत्तेः—एककार्यकरत्वादेव द्वादशोपसत्त्वादीनां गणधर्माणां सर्वत्र गणेषूपदेशत एव, नातिदेशात्। तत्र दृष्टान्तः—द्रव्यवदिति। यथा द्रव्ये व्रीहिरूपे समाम्नाताः प्रोक्षणादयो धर्माः तत्कार्यापन्नेषु यवनीवारादिषु उपदेशत एव प्राप्यन्ते नातिदेशेन, तद्वदत्राप्युपदेशेन प्राप्तेर्न लिङ्गं प्रापकमातिदेशिकानां द्वादशाहिकानामिति॥ १६॥

[3]नार्थधर्मत्वात्संघातस्य गुणत्वात्॥ १७॥

नैतद्युक्तं द्वादशोपसत्त्वादि संघातस्य गुण इति। कथं तर्हि? संघातस्य—गणस्य अहर्गुणत्वात्—अहरुपसर्जनत्वाद्धेतोः द्वादशोपसत्त्वादेरर्थधर्मत्वात्—गवामयनापूर्वधर्मत्वात्। अतोऽयं प्रागुक्तः परिहारो न समञ्जस इत्यर्थः॥ १७॥

---

१ अत्र 'इति' करणमुचितम्।

२ लिङ्गं संघातधर्मस्स्यात् क. ख. अत्रापि व्याख्या तथैव।

३ न वार्थधर्मत्वात् संघातस्य गुणत्वात् क. ख.

अर्थापत्तेर्द्रव्येषु धर्मलाभस्स्यात् ॥ १८ ॥

यदुक्तं द्रव्यवदिति – तत्र परिहारः ; द्रव्येषु – यवनीवारादिषु, अर्थापत्तेः – व्रीहिकार्यपुरोडाशादिरूपप्रयोजनापत्तेः, धर्मलाभः – प्रोक्षणादिधर्मप्राप्तिस्स्यात् । इह तु, द्वादशोपसत्त्वस्यापूर्वार्थत्वेन गणार्थत्वाभावात्, न त्वदुक्तमुपपद्यत इत्यर्थः ॥ १८ ॥

[1]प्रवृत्त्या तु नियतस्य लिङ्गदर्शनम् ॥ १९ ॥

द्वादशोपसत्त्वरूपलिङ्गस्य का गतिरितिशङ्कायां उत्तरम् – प्रवृत्त्या – मुख्यप्रवृत्त्या हेतु ... ... ... ... ... ... ... दशो ... ... ... स्य तल्लिङ्गदर्शनमुपष्टम्भकं भवति, न चोदकप्राप्तस्य सूचकमित्यर्थः ॥ १९ ॥

[2]विहारदर्शनञ्च शिष्टस्य ॥ २० ॥

यदुक्तं विहारदर्शनात् द्वादशाहिकधर्मप्राप्तिरिति, तत्रोत्तरम् – अनारभ्य शिष्टस्य एकादशिनीविहारस्य, एकाहप्रकृतिज्योतिष्टोमगणप्रकृति द्वादशाहयोः, “यदि बहवः पशवस्स्यु”रिति एकादशिनीपर्यायस्यावृत्तेरनिवेशात्, गवामयने च निवेशात् विहारदर्शनं – एकादशिनीगतं ... ... ... ... उपपद्यते । अतः प्रागुक्तानां लिङ्गानां अद्वादशाहिकधर्मप्राप्तिसमर्थत्वात्, विरोधे च एकाहज्योतिरादिधर्मा एव गवामयनेऽनुष्ठेया इति ॥ २० ॥

प्रयोजनन्त्वनुष्ठानरूपं – विशदमेव ॥ ३ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां सप्तमस्याध्यायस्य चतुर्थः पादः

समाप्तश्चाध्यायः

---

१ प्रवृत्त्या नियतस्य लिङ्गदर्शनम् क. ख.

२ विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात् क. ख.

## अष्टमेऽध्याये प्रथमः पादः

(विशेषातिदेशप्रतिज्ञाधिकरणम् – १)

### अथ विशेषलक्षणम् ॥ १ ॥

प्रत्यक्षोक्त्या पादयुग्मेऽतिदेशः
नामवैविध्यातिदेशस्तृतीये ।
तुर्ये ह्यैन्द्राग्नादि सौर्येषु दार्शी
विध्यन्ताप्तिस्सप्तमे वर्णितैवम् ॥

ऐन्द्राग्नादिषु सामान्यतो दार्शपूर्णमासिकविध्यन्तनिर्णये सति, अपरमिदं संदिह्यते किमेकस्मिन्कर्मणि सर्वकर्मभ्योऽतिदेशः? उतैकस्मात्? इति ॥

तत्र अथ – सामान्यतोऽतिदेशलक्षणानन्तरम्, विशेषलक्षणम् – इयमस्य प्रकृतिः, अस्यामेतस्य धर्मा इति विशेषातिदेशलक्षणमारभ्यत इत्यर्थः ॥ १ ॥

प्रतिज्ञासूत्रत्वान्नास्मिन्नधिकरणे प्रयोजनादिकथनम् । अथवा धर्मसाङ्कर्यासाङ्कर्याभ्यां वा प्रयोजनं सौर्यादावनुसंधेयम् ॥ १ ॥

(प्रकृतिभूताधिकरणम् — २)

### यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥ (सि)

विशेषातिदेशस्य सामान्यतो लक्षणकथनपरमिदं सूत्रम् । यस्य वैदिकस्य विध्यन्तस्य, लिङ्गं वैकृत्यां चोदनायां अर्थसंयोगात् शब्दसंयोगाद्वा दृश्यते, तत्तस्मात् प्रकृतिविशेषात् तद्धर्मान् प्रकृतिविशेषधर्मान् बुद्धौ सन्निधापयति । अत्र दृष्टान्तः – अभिधानवदिति । यथा कौण्डपायिनीयमग्निहोत्रपदं, शब्दगतेन नामधेयरूपेण लिङ्गेन नैयमिकाग्निहोत्रधर्मान् बुद्धौ सन्निधापयति, एवमिहापि सौर्यादिविकृतौ निर्वपतिप्रभृतिशब्दश्रवणात् एकदेवतत्वात् औषधद्रव्यसामान्यात् दार्शपूर्णमासिकाग्नेयविध्यन्तः प्राप्नोति । ऐन्द्राग्नमेकादशकपाल-

P. 21.

मित्यादिषु द्विदैवत्यादिसामान्यात् अग्नीषोमीयविध्यन्तः प्राप्यत इति द्रष्टव्यम् । तदयमत्र प्रकृतिवदनुष्ठाने उन्नयनप्रकारः — सौर्यश्चरुं निर्वपेदाग्नेयवत्; ऐन्द्राग्न-मेकादशकपालं निर्वपेदग्नीषोमीयपुरोडाशवत् — [1]इत्यादि ॥ २ ॥

प्रयोजनन्त्वनुष्ठानरूपं प्रतिज्ञासूत्रोक्तमनुसन्धेयम् ॥ २ ॥

(सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् — ३)

[2]प्रवृत्तत्वादिष्टेस्सोमे प्रवृत्तिस्स्यात् ॥ ३ ॥ (पू)

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति श्रुतम् ॥

तत्र संदेहः — किं विध्यन्तानियमः? उत नियतविध्यन्तता? इति।

तत्र सोमे दीक्षणीयादिष्विष्टिषु इष्टेः — दार्शपूर्णमासिकस्य ऐष्टिक-विध्यन्तस्य प्रवृत्तत्त्वात् — प्रवृत्त्यानुपूर्व्या, सोमेऽपि दार्शपूर्णमासिकविध्यन्त-प्रवृत्तिरेव स्यात्, नान्यतः ॥ ३ ॥

लिङ्गदर्शनाच्च ॥ ४ ॥

चकारः ... ... तेऽर्थे हेत्वन्तरसमुच्चयार्थः । 'तस्यैकशतं प्रया-जानूयाजा' इति दार्शपूर्णमासिकप्रयाजानूयाज दर्शनाच्च ऐष्टिकविध्यन्त एवेति ॥ ४ ॥

[3]कृत्स्नविधानात्त्वपूर्वत्वम् ॥ ५ ॥

तुना प्रागुक्तपक्षो व्यावर्त्यते। सोमस्य अपूर्वत्वम् — अकिञ्चित्प्रकृति-कत्वम्। कुतो हेतोः? कृत्स्नविधानात् — कृत्स्नाङ्गानां सौमिकानां ... सो ... ... ... ... नैष्टिकविध्यन्तप्राप्तिरित्यर्थः ॥ ५ ॥

स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥ ६ ॥

---

१ इत्यादिः — इति स्यात्।

२ प्रवृत्तित्वादिष्टे ... स्यात् क. ख.

३ कृत्स्नविधानाद्वाऽपूर्वत्वम् क. ख.

'घृतं वै देवा वज्रं कृत्वा सोममघ्नन्, स्रुचौ बाहू, तस्मात्स्रुचि सौमीमाहुतिं नासादयेत्, तस्मान्न सोममाज्येनाभिघारयति' इति स्रुगभिघारणाभावस्य नित्यानुवादात्—अप्राप्तिपूर्वकत्वेन प्रकरणानन्वयात् नित्यानुवादाच्च नैष्टिकविध्यन्तप्राप्तिः। प्राप्तावुच्यमानायां आज्येनैव सोमाभिघारस्स्यान्नान्यथा। तच्च नोपपद्यत इत्यर्थः॥ ६॥

## विधिरिति चेत्॥ ७॥

आज्याभिघारणाभावस्य नित्यानुवादात् नैष्टिकविध्यन्तस्सोमे प्रवर्तत इति पश्यसि चेत्, तर्हि प्रकृतित्वेन प्राप्तस्य दार्शपूर्णमासिकस्याज्याभिघारणस्य निषेधविधिरेवास्तु, प्राप्तिपूर्वकत्वात्प्रतिषेधस्येति॥ ७॥

## न वाक्यशेषत्वात्॥ ८॥

नैतदुपपद्यते प्राप्ताज्याभिघारनिषेध इति। कुतो हेतोः? 'अंशुरंशुस्ते देवसोमाप्यायता' मित्यभिहितस्य सोमाप्यायनस्य शेषत्वात् न निषेधवाक्यशेषतेति॥ ८॥

## शङ्कते चानुपोषणात्॥ ९॥

चकारो हेत्वन्तरसमुच्चयार्थः। "यदनुपोष्य प्रयायाद्ग्रीवबद्धमेनममुष्मिँल्लोके नेनीयेरन्" इति बहिरनुपोषणपराद्वाक्यात् अनुपोषणप्रतीतेः, दार्शपूर्णमासिकविध्यन्तप्राप्तौ तु उपोषणस्य नैयत्यात् शङ्कत एवापूर्वत्वं सोमस्य॥ ९॥

अथवा शक्यते चानुपोषणात्—अनुपोषणाद्धेतोः सोमस्यापूर्वत्वं वक्तुं शक्यत एवेत्यर्थः॥

## दर्शनमैष्टिकानां स्यात्॥ १०॥

यदुक्तं—"तस्यैकशतं प्रयाजानूयाजा" इति प्रयाजानूयाजदर्शनात् दार्शपूर्णमासिकविध्यन्त इति, तत्परिहारः—तत्र प्रयाजानुयाजदर्शनं ऐष्टिकानां,

प्रायणीयादीष्टिप्रभवानां प्रयाजानूयाजानां स्यात्, न तत् सोमे संक्रामति दर्शनम् ॥ १० ॥

प्रयोजनन्त्वनुष्ठानरूपं – पक्षयोरनतिगहनम् ॥ ३ ॥

( दर्शपूर्णमासप्रवृत्त्यधिकरणम् – ४ )

## इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यात् ॥ ११ ॥ (सि)

"ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" इत्येवमाद्या विकृतीष्टय उदाहरणम् ॥

किमासु विकृतिषु दार्शपूर्णमासिकसौमिकविध्यन्तयोरनियमेनानुष्ठानम्? उत दार्शपूर्णमासिकविध्यन्त एव? इति संदेहे –

इष्टिषु – ऐन्द्राग्नादिषु, तद्धितदेवतोपदेशकपालवत्ता निर्वपतिशब्दैर्लिङ्गैः दर्शपूर्णमासयोः – दार्शपूर्णमासिकविध्यन्तस्य प्रवृत्तिः स्यात् । अतो नानियतानुष्ठानम् ॥ ११ ॥

प्रयोजनन्त्वनुष्ठानरूपं – पक्षयोरतिविशदम् ॥ ४ ॥

( पशुलिङ्गाधिकरणम् – ५ )

## पशौ च लिङ्गदर्शनात् ॥ १२ ॥ (सि)

अग्नीषोमीये पशौ चिन्त्यते – किं सौमिकविध्यन्तः? उत दार्शपूर्णमासिकविध्यन्तः? इति ॥

तत्र अग्नीषोमीय पशौ च दार्शपूर्णमासिकविध्यन्त एव स्यात्, नतु सोमस्य । कुतो हेतोः? "एकादशप्रयाजान् यजति एकादशानूयाजान्, स्रौवमाघारमाघार्य जुह्वा पशुं समनक्ति" इति लिङ्गदर्शनात् – व्यक्तदेवतत्वसाम्यात् – ऐन्द्राग्नस्यैव दार्शिकस्य प्रवृत्तिः पशौ ॥ १२ ॥

प्रयोजनन्त्वनुष्ठानरूपं – सोमधर्माः कृष्णाजिनादिदीक्षाश्च स्युरग्नीषोमीये पूर्वपक्षे, सिद्धान्ते तु न तथेति ॥ ५ ॥

(सवनीयाधिकरणम्—६)

दैक्षस्य चेतरेषु ॥ १३ ॥ (सि)

सवनीय निरूढ सौम्यादयः पशव उदाहरणम् ॥

किमेषु प्राग्वत् दार्शपूर्णमासिको विध्यन्तः ? उताग्नीषोमीय विध्यन्तः ? इति संदेहे सतिः—

इतरेषु—सवनीयादिषु पशुषु च दैक्षस्य—दीक्षासंबन्धिनः अग्नीषोमीयपशोर्विध्यन्तः प्राप्नोति। "वपया प्रातस्सवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने, अङ्गैस्तृतीयसवने" इति कालभेददर्शनात्, आलभतिचोदनासामान्यात्, अग्नीषोमीयपशुविध्यन्तस्यैव प्राप्तिर्नैष्टिकस्य ॥ १३ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—दर्शपूर्णमासप्रकृतिकत्वे ऐष्टिकविध्यन्ता एव स्युः पूर्वपक्षे, सिद्धान्ते ... ... ... ... ... ॥ ६ ॥

(ऐकादशिनाधिकरणम्—७)

ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ १४ ॥

सन्त्यैकादशिनाः पशवः, "आग्नेयं कृष्णग्रीवं" इत्यारभ्याम्नाताः ॥

तत्र संदेहः—किमग्नीषोमीयविध्यन्तः ? उत सवनीयविध्यन्तः ? इति ॥

ऐकादशिनेषु पशुषु, सौत्यस्य—सुत्यादिवसोत्पन्नस्य सवनीयस्यैव धर्माः प्रवर्तन्ते। कुतो हेतोः ? "अग्निष्ठात् द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययते" इति सौत्यधर्मसूचकस्य द्वैरशन्यस्य ऐकादशिनेषु पशुषु दर्शनात् सुत्याकालीनतारूप विशेषलिङ्गदर्शनाच्च तस्यैव विध्यन्तः प्रवर्तते, नाग्नीषोमीयस्य ॥ १४ ॥

प्रयोजनन्त्वनुष्ठानरूपं—नातीव मृग्यम् ॥ ७ ॥

(तत्प्रवृत्त्यधिकरणम् – ८)

तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥ (सि)

इह पशुगणा उदाहरणम् "वसन्ते ललामांस्त्रीन् वृषभानालभेत" इत्याद्याः। तत्र संदिह्यते— किमेष्वग्नीषोमीयविध्यन्तः? उत ऐकादशिनानाम्? इति ॥

पशुगणेषु तत्प्रवृत्तिः–ऐकादशिनविध्यन्तप्रवृत्तिः स्यात् । कुतो हेतोः? प्रतिपशु यूपदर्शनात् । "यत्त्रिषु यूपेष्वालभेत बहिर्धास्मादिन्द्रियं वीर्यं दध्यात् । यद्येकस्मिन् यूप आलभेत, एकधैवास्मिन्निन्द्रियं वीर्यं दधाति, नास्मै भ्रातृव्यं जनयति" इति प्रतिपशु बहुयूपप्रतिषेधदर्शनात्, यूपप्रतिषेधस्य च प्राप्तिपूर्वकत्वात् तदीयविध्यन्त एव पशुगणेषु, नाग्नीषोमीयस्य ॥ १५ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – अत्राप्यनतिगहनम् ॥ ८ ॥

(अव्यक्ताधिकरणम् – ९)

अव्यक्तासु तु सोमस्य ॥ १६ ॥ (सि)

क्वचिच्छ्रूयते– "विश्वजिता यजेत" "अभिजिता यजेत" इत्येवमादि ॥

तत्र संदेहः – किमेषां दार्शपूर्णमासिकविध्यन्तः? उत सौमिकः? इति ॥

तत्र विश्वजिदादिषु अव्यक्तासु – अव्यक्तद्रव्यदेवताचोदनासु, अव्यक्तद्रव्यदेवताकत्वसामान्यात्, "दीक्षणीयाया हिरण्यं द्वादशमानं दक्षिणा, चतुर्विंशतिमानं प्रायणीयायाः" इति सोमाङ्गदीक्षणीयादिलिङ्गदर्शनात्, सोमस्य सौमिकविध्यन्तस्य प्रवृत्तिस्स्यात्; न तु दार्शपूर्णमासिकविध्यन्तस्य प्रवृत्तिरित्यर्थः ॥ १६ ॥

प्रयोजनन्त्वनुष्ठानरूपं – स्पष्टभेदम् ॥ ९ ॥

(गणाधिकरणम्–१०)

गणेषु द्वादशाहस्य ॥ १७ ॥ (सि)

द्विरात्रादयश्शतरात्रपर्यन्ता गणा उदाहरणम् ॥

तत्र संदिह्यते—किं गणेषु अहरुपलक्षणकत्वाद्रात्रिशब्दस्य, द्व्यहादिषु सौमिको विध्यन्तः? उत द्वादशाहिकविध्यन्तः? इति ॥

तत्र गणेषु—अहर्गणेषु, "द्वादशाहेन यजेत, द्विरात्रेण यजेत" इत्यहोरात्रचोदना सामान्यात् शब्दगताल्लिङ्गात्, "गण एव गणधर्मैर्गणान्तरमनुग्रहीतुं समर्थो नान्यः" इत्यर्थगत ... ... सामर्थ्यरूपाल्लिङ्गात्, द्वादशोपसत्त्वादिलिङ्गदर्शनाच्च द्वादशाहिकस्यैव प्रवृत्तिः, न सौमिकस्य ॥ १७ ॥

प्रयोजनन्त्वनुष्ठानरूपं—नातिगहनान्वेषणम् ॥ १० ॥

(गव्याधिकरणम्–११)

## गव्यस्य च तदादिषु ॥ १८ ॥ (सि)

आदित्यानामयनप्रभृतीनि संवत्सरसत्राण्युदाहरणम् ॥

तेषु संदिह्यते—किं द्वादशाहिको विध्यन्तः? उत गावामयनिकः? इति ॥

तदादिषु—आदित्यानामयनप्रभृतिषु संवत्सरसत्रेषु, 'पत्नय उपगायन्ति' इति गवामयनमध्यपाति माहाव्रतिकधर्मदर्शनात्, 'ऋत्विज उपगायन्ति' इति सहस्रसंवत्सरे दर्शनात्, गव्यस्य—गावामयनिकस्यैव विध्यन्तस्य प्रवृत्तिस्स्यात्, न द्वादशाहिकस्य ॥ १८ ॥

प्रयोजनन्त्वनुष्ठानरूपं—अगहनान्वेषणं पक्षयोः ॥ ११ ॥

(निकाय्यधिकरणम्–१२)

## [1]निकायिनान्तु पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात् ॥ १९ ॥ (सि)

निकायिषु किं ज्योतिष्टोमिको विध्यन्तः? उत प्रथमनिकायिनः? इति संदेहे सति—

---

१ निकायिनाञ्च ... स्यात् क. ख.

तत्र निकायिनां – निकायः – अनौत्तरधर्मेणावस्थितोगणः। स येषामस्ति ते निकायिनः उच्यते। ते च निकायिनस्साहस्रास्साद्यस्का इत्येवमाद्याः। तेषां निकायिनां ऋतुविशेषाणां विध्यन्तविचारे, उत्तरेषु निकायिषु उत्तरेषु साहस्रेषु च पूर्वस्य निकायिनः पूर्वस्य साहस्रस्य च प्रवृत्तिस्स्यात्। निकायित्वसामान्यात्, साहस्रत्व सामान्यात्, पूर्वपूर्वधर्मस्योत्तरेषु दर्शनात् पूर्वपूर्वधर्मा एव प्रवर्तन्ते। न त्वव्यक्तचोदनाकत्वेन ज्यौतिष्टोमिकविध्यन्त प्रवृत्तिरिति ॥ १९ ॥

प्रयोजनन्त्वनुष्ठानरूपं – पक्षयोरतिस्पष्टम् ॥ १२ ॥

(फलनियमाधिकरणम् – १३)

## कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ २० ॥ (सि)

स्वर्गरूपं फलं, यावज्जीवाभ्यासरूपो नियमः, कर्ता स्वर्गकामः पुरुषः, समुदायो दर्शपूर्णमासौ – इतीमान्युदाहरणम् ॥

किं फलनियमकर्तृसमुदायानां सौर्यादिषु प्राप्तिः? उताप्राप्तिः? इति संदेहे सति—

फलनियमकर्तृसमुदायस्य विकृतौ सौर्यादौ, "इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः" इत्यनेन न्यायेन अनन्वयः – असंबन्धः। कुतो हेतोः? कर्मणः – दर्शपूर्णमासशब्दवाच्यप्रधानयागरूपकर्मणः अतिदेशेन विकृतावप्रवृत्तत्वात् – फलादीनाञ्च तद्बन्धनत्वात् – तत्कर्मबन्धनत्वात्। अयमर्थः – प्रधानकर्मसंबद्धानां फलनियमकर्तृसमुदायानां प्रधानानतिदेशादेव हेतोर्विकृतौ नातिदेशतः प्राप्तिरिति ॥ २० ॥

## प्रवृत्तौ चापि तादर्थ्यात् ॥ २१ ॥

चापि इति अपिचेति विपर्यस्य योज्यम्। फलनियमकर्तृसमुदायानां सौर्यादौ विकारे प्रवृत्तावुच्यमानायां, अतिदिष्टानाञ्च धर्माणां तादर्थ्यात् –

विकृत्युपकारार्थत्वात्, फलादीनाञ्च विकृतिकर्मानुपकारकत्वात् न तेषामतिदेशेनाप्युपकारसिद्धिरिति ॥ २१ ॥

## अश्रुतित्वाच्च ॥ २२ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। विकृतौ फलादिप्राप्तेरश्रुतत्वात्—अतत्प्रापकश्रुतिमूलत्वात् न फलादीनां विकृतावन्वयः ॥ २२ ॥

प्रयोजनन्त्वनुष्ठानरूपं पक्षयोर्विशदम् ॥ १३ ॥

(गुणकामाधिकरणम् – १४)

## गुणकामेष्वाश्रितत्वात्प्रवृत्तिस्स्यात् ॥ २३ ॥ (पू)

"गोदोहनेन पशुकामस्य प्रणयेत्" "उपास्मै गायता नर इति ग्रामकामाय प्रतिपदं कुर्वन्" इत्येवमादयो गुणकामा उदाहरणम् ॥

किं गुणकामानां विकृतिषु सौर्यादिषु सोमविकृतिषु च प्रवृत्तिस्स्यात्? उत न प्रवृत्तिः? इति संदेहे सति—

गुणकामानामपि विकृतौ प्रवृत्तिः—अनुप्रवेशः स्यात्। कुतः? यथा प्रणयनसाधनस्य चमसस्य प्रणयनप्राप्त्या प्राप्तिः, तद्वदेव प्रणयनद्वारेण गोदोहनस्यापि प्राप्तत्वात्, तद्द्वारेण पशुकामस्यापि गोदोहनाश्रितत्वात् गुणकामेष्वपि विकृत्यनुप्रवेशो युज्यत एवेत्यर्थः ॥ २३ ॥

## निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। विकृतौ निवृत्तिरेव केवलगुणानाम्। कुतः? कर्मभेदात्—कार्यभेदात्। क्रत्वर्थत्वपुरुषार्थत्वरूपकार्यभेदाच्चमसगोदोहनयोः। इदन्तु पुरुषार्थम्। अतो विकृतावनन्वयोऽतिदेशेन। अतः खादिरवन्न प्राप्तिरित्यर्थः ॥ २४ ॥

## [1]अपि वातद्विकारत्वात्प्रवृत्तिस्स्यात् ॥ २५ ॥

---

१ अपि वा तद्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिस्स्यात क. ख.

यदुक्तं खादिरवदेव गुणकामप्राप्तिर्भवत्विति, तत्रोत्तरम्। अपि वेति पक्षव्यावृत्तिः। खादिरस्य तु विकृतिपशुष्वतिदेशतः प्रवृत्तिस्यादिति युक्तमेव। कुतो हेतोः? तस्य खादिरस्य अतद्विकारत्वात्—अक्रत्वर्थविकारत्वात्। "एकस्य तूभयत्वे संयोगपृथक्त्व"मिति क्रत्वर्थत्वादित्यर्थः। अतस्तदनुत्तरम्॥ २५॥

प्रयोजनन्त्वनुष्ठानरूपं—पक्षयोर्विशदमेवेति न विलिख्यते॥ १४॥

(अभिमर्शनाधिकरणम्—१५)

## [1]एककर्मणि विकल्पोऽविभागेन हि चोदनैकत्वात्॥ २६॥
(सि)

"सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति श्रूयते। अस्ति प्रकृतावभिमर्शनद्वयम्—"चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रामावास्या"मिति। तदिह चोदकेन प्राप्यते॥

तत्र संदेहः—किं यदा सौर्यः पौर्णमास्यां प्रयुज्यते तदा चतुर्होत्राऽभिम्रष्टव्यम्, यदामावास्यायां तदा पञ्चहोत्रेति? अथवा उभयत्र विकल्पः—चतुर्होत्रा पञ्चहोत्रा वेति॥

कालभेदेन विहितस्याभिमर्शनयुग्मस्य एककर्मणि—सौर्यादौ विकल्प एव। न तु कालभेदेनोभयोरप्यभिमर्शनयोरनुष्ठानम्। कुतः? हिर्हेतौ। यस्मात्कारणात् 'सौर्यं चरुं निर्वपे' दिति चोदनैकत्वात् अविभागः कर्मणः श्रूयते, अतो न कालभेदेन व्यवस्थितयोरभिमर्शनयोः अविभक्ते कर्मणि समुच्चयः। विकारत्वात्तु एकेनापि चरितार्थत्वाद्विकल्प इत्यर्थः॥ २६॥

प्रयोजनन्त्वनुष्ठानरूपं—विशदमेव॥ १५॥

---

१ एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् क, ख.
अत्रापि व्याख्या तथैव.

( लिङ्गसाधारण्याधिकरणम् – १६ )

## लिङ्गसाधारण्याद्विकल्पस्स्यात् ॥ २७ ॥ (पू)

सौर्यादौ दार्शपूर्णमासिकविध्यन्तप्राप्तौ समधिगतायां, दर्शपूर्णमासयोश्चाग्नेयादीनामनेकेषां वर्तमानत्वात्, किं यस्यकस्यचित् दार्शपूर्णमासिकस्य कर्मणस्सौर्ये विध्यन्तः? उताग्नेयस्यैव? इति संदेहे सति –

तत्र लिङ्गसाधारण्यात् – निर्वापादिलिङ्गानामाग्नेयादिसाधारणत्वात्, यतः कुतश्चिद्धर्मा ग्राह्या इति धर्मग्रहणे विकल्पस्स्यात् ॥ २७ ॥

## ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि ॥ २८ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। नैतदुपपद्यते लिङ्गसाधारण्याद्विकल्प इति। सौर्ये चरावैकार्थ्यात्–एकार्थत्वात्-एकदेवतत्वात्-आग्नेयस्यापि तथात्वात्-देवतैक्यात्, आग्नेयादेव सौर्ये विध्यन्तप्राप्तिरिति नियम्येत। कुतो हेतोः? पूर्ववत्त्वात् – सौर्यस्य पूर्वशब्देन प्रकृति ... ... ... ... ... तद्वत्त्वात् – प्रकृतिपूर्वकत्वात् – प्रकृत्युक्तधर्मग्राहकत्वात्। हिर्हेतौ। यस्माद्विकारस्सर्वोऽपि प्रकृतित एव धर्मान् गृह्णाति ... ... ... ... ... एकदेवतत्वेन प्राकृतेन लिङ्गेन आग्नेयविध्यन्तनियम एकदेवतेष्विति ॥ २८ ॥

## अश्रुतत्वान्नेति चेत् ॥ २९ ॥

इति चेत् पश्यसि एकदेवतत्वेनाग्नेयविध्यन्त एवेति, तन्नोपपद्यते। कुतः कारणात्? आग्नेये सौर्ये च एकदेवत ... ... ... ... सौर्यमाग्नेयमित्युभयत्रापि, अग्निः अग्नी अग्नयो वा देवता अस्येति च; सूर्यः सूर्यौ सूर्याः इति च बहुवचनान्ते वा विग्रहोपपत्तेः एकदेवतत्वा ... ... ... ... ... पद्यत इत्यर्थः ॥ २९ ॥

## स्याल्लिङ्गभावात् ॥ ३० ॥

अग्निदेवतातद्धिते विग्रहे कर्तव्ये, एकत्वमेव देवतायां स्यात् नानियमः। कुतो हेतोः? लिङ्गभावात् – "अमुमेवादित्यं स्वेन भागधेयेनोपधावति" इति सौर्ये देवतैकत्व सूचकलिङ्गसद्भावात्; "अङ्गिरसो वा इत उत्तमास्सुवर्गं लोक-

मायन्" इत्युपक्रम्य, "तमब्रुवन्नग्नये" इति एकवचनान्तेनाग्नेर्निर्देशाच्च एकदेवत-आग्नेयस्सौर्योऽपि। तस्मात्सौर्ये आग्नेयादेव विध्यन्तप्राप्तिरिति ॥

तथा चान्यार्थदर्शनम् ॥ ३१ ॥

चकारो लिङ्गान्तरसमुच्चयार्थः। अन्यार्थे-यागार्थे अनुवाक्यामन्त्रे, 'अग्निर्मूर्धा दिवः' इत्येकवचनस्य दर्शनं, 'उदुत्यं जातवेदसं ... ... ... ... ... कृतानुवाक्यागतैकत्वलिङ्गमेवैकत्वद्योतकमित्यर्थः ॥ ३१ ॥

प्रयोजनन्त्वनुष्ठानरूपं चतुर्मुष्टिनिर्वापः ... ... ... ... वैपक्षे - सिद्धान्ते तु नेति ॥ १६ ॥

(हविर्नियमाधिकरणम् - १७)

विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥ (सि)

"ऐन्द्राग्नमेकादशकपालं निर्वपेत्" इति श्रूयते, तथा 'आग्नेयं पयः' इति ॥

तत्र संदिह्यते - किं देवतासामान्यात् ऐन्द्राग्नपुरोडाशे सान्नाय्यविध्यन्तः, आग्नेये पयसि चौषधस्य, देवतासामान्यं बलवत्तरमिति? अथवा हविस्सामान्यात् आग्नेये पयसि सान्नाय्यविध्यन्तः, ऐन्द्रे चौषधविध्यन्तः। ततो हविस्सामान्यं बलवत्तरम्? इति।

तत्र ऐन्द्रे पुरोडाशे आग्नेये पयसि च धर्मविप्रतिपत्तौ सञ्जातायां, हविषा - पुरोडाशरूपेण पयोरूपेण च धर्माः नियम्यन्ते - पुरोडाशे पुरोडाशधर्माः, पयसि च पयोधर्माः इति। न तु देवतासामान्यात् आग्नेये पयसि पुरोडाशधर्माः - ऐन्द्रे पुरोडाशे सान्नाय्यधर्माः ... ... ... कुतो हेतोः? कर्मणः - आग्नेयादिकर्मणः, तदुपाख्यत्वात् - हविरुपाख्यत्वात्। हविषस्सन्निपत्योपकारित्वेन अन्तरङ्गत्वेन प्रधानत्व ... ... ... कर्मणो हविःप्रधानत्वादित्यर्थः। देवता तूपसर्जनीभूता। न तया गुणभूतया धर्मा नियम्यन्ते ॥ ३२॥

## तेन च कर्मसंयोगात् ॥ ३३ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । तेन हविषैव ऐन्द्रं आग्नेयं इति कर्मणः संयोगात्—संबन्धात्, हविष एव कर्मसंबद्धत्वेन मुख्यत्वात् तेनैव धर्मव्यवस्थेत्यर्थः ॥ ३३ ॥

## गुणत्वेन देवताश्रुतिः ॥ ३४ ॥

आग्नेयं ऐन्द्रं इत्यत्र बहुव्रीहिविग्रहे देवताश्रुतिः—देवताश्रवणं, गुणत्व एव देवताया उपपद्यते। अप्राधान्ये अन्यपदार्थस्य … … … … …र्थस्य प्राधान्यादित्यर्थः ॥ ३४ ॥

प्रयोजनन्त्वनुष्ठानरूपं—कोटिभ्यां व्याख्यातम् ॥ १७ ॥

## गुणत्वेन देवताश्रुतिः ॥

अस्य सूत्रस्य अपरा व्याख्या—देवतासामान्यहविस्सामान्ययोः बलाबलविचारे सति, "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इति देवताया एव कर्मफलदातृत्वेन प्राधान्यात् देवतासामान्यस्य बलीयस्त्वे पूर्वपक्षीकृते, इदं सूत्रमुत्तरम् ॥

यागादेव सर्वत्र फलावगमात् यागे गुणभूता देवताश्रुतिरिति । गुणत्वे सत्येवोपपद्यते । फलदानन्तु स्तुत्यर्थम् । यथा राज्ञा दत्ते ग्रामे, अमात्यसेनापतिभिर्दत्त इति स्तुतिव्यवहारो भवति, तद्वदत्रापि कर्मण एव फलदातृत्वेन तद्गुणभूता देवता फलदातृत्वेन स्तूयते ॥ ३४ ॥

प्रयोजनन्त्वनुष्ठानरूपं—प्रागभिहितमेव ॥ १८ ॥

(हिरण्याज्यधर्माधिकरणम्—१९)

## [1]हिरण्यमाज्यधर्मं तेजस्त्वात् ॥ ३५ ॥ (पू)

"प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इति श्रुतम् ॥

---

१ हिरण्यमाज्यधर्मस्तेजस्त्वात् क. ख.

तत्र संदेहः = किं हिरण्यं आज्यधर्म ? उत औषधधर्म ? इति ॥

तत्र हिरण्यशब्दवाच्यं कुण्डलं आज्यधर्म — आज्यादेव धर्मग्राहकम् । नान्यस्मात् । कुतः कारणात् ? तेजस्त्वात् — हिरण्याज्ययोरश्मगोसारत्वेन तेजस्त्वात्, तेजस्त्वसामान्यात् आज्यविध्यन्त एव स्वर्णे ॥ ३५ ॥

## धर्मानुग्रहाच्च ॥ ३६ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । हिरण्ये उपांशुयाजद्रव्याज्यविध्यन्ते सति, अवेक्षणादीनां बहुधर्माणामनुग्रहात् । औषधधर्मत्वे, अवहन्त्यादीनां बहूनां धर्माणां परित्यागात् आज्यविध्यन्त एव ॥ ३६ ॥

## औषधं वा [1]विशेषत्वात् ॥ ३७ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः । हिरण्ये औषधं — औषधविध्यन्त एव प्राप्नोति । कुतो हेतोः ? विशदत्वात् — विशदत्वसामान्यात् । औषधमपि विशदं सुवर्णमपि । अत औषधविध्यन्त एव ॥ ३७ ॥

## चरुशब्दाच्च ॥ ३८ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । "प्राजापत्यं घृते चरुं" इति चरुशब्दश्रवणात् चरोश्च औषधधर्मत्वात् चरुनामैव धर्मातिदेशकम् । अतो नाज्यविध्यन्तः (इत्यर्थः) ॥ ३८ ॥

## तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥

तस्मिंश्चाज्ये "घृते चरुं" इति श्रपणश्रुतेः — श्रपणमात्रस्य श्रवणात् तत्रानुग्रहा ... ... ... ... हविर्बलवत्त्वे तु वैशद्य ... ... ... ... ... ... ... चरुशब्दादीनां बहूनामनुग्रहात्, बह्वनुग्रहस्य चासति विरोधे न्याय्यत्वात् औषधधर्मा एव हिरण्ये ॥ ३९ ॥

प्रयोजनन्त्वनुष्ठानरूपम् — कोटि ... ... ... ... व्याख्यातम् ॥ १९ ॥

---

१ ... विशदत्वात् क. ख. अत्रापि व्याख्या तथैव.

( मधूदकयोरुपांशुयाजधर्मातिदेशाधिकरणम् – २० )

## मधूदके द्रव्यसामान्यात्पयोविकारस्स्यात् ॥ ४० ॥ (पू)

चित्रेष्टौ श्रूयते–"दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्" इति ॥

तत्र किं मधूदकं पयोविकारः ? उत आज्यविकारः ? इति संदेहे—

मधूदके द्रव्ये द्रव्यसामान्यात् द्रवत्वसामान्यात् द्रवरूपपयोविकारस्स्यात्, नाज्यविकारः। अतः पायसविध्यन्तप्राप्तिरिति ॥ ४० ॥

## आज्यं वा वर्णसामान्यात् ॥ ४१ ॥ (सि)

वाकारः प्रागुक्तपक्षव्यावर्तकः। मधूदकयो राज्यं–आज्यविध्यन्त एव प्रवर्तते, न पयोविध्यन्तः। कुतः ? वर्णसामान्यात्–पिशङ्गरूपवर्णस्य सामान्यात्–सामानत्वात् ॥ ४१ ॥

## धर्मानुग्रहाच्च ॥ ४२ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। आज्यधर्मकत्वे मधूदकयोरुत्पवनादिधर्मानुग्रहात्, पयोविध्यन्तप्राप्तौ अशक्यदोहनादिधर्मापाताच्च, आज्यविध्यन्त एव मधूदकयोरिति ॥ ४२ ॥

## [1]पूर्वस्य वाविशिष्टत्वात् ॥ ४३ ॥

यदुक्तं द्रवत्वसामान्यात् पयोधर्मा मधूदकयोरिति, तद्व्यावर्तको वाकारः। पूर्वस्य पूर्वोक्तस्य द्रवत्वलिङ्गस्य आज्यविकारत्वेऽप्यविशिष्टत्वात्। अयमर्थः-आज्यमपि घनीभूतं अग्निसंयोगात् द्रवं भवति इति द्रवत्वसामान्याच्चाभ्युचीयते। अत आज्यधर्मके मधूदके, न पयोधर्मके इत्यर्थः ॥ ४३ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–कोटिभ्यां व्याख्यातम् ॥ २० ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां अष्टमाध्यायस्य प्रथमः पादः

---

१ पूर्वस्य चाविशिष्टत्वात् क. ख.

## अष्टमाध्यायस्य द्वितीयः पादः

(वाजिनयागसुराग्रहयोः सौमिककर्मातिदेशाधिकरणम्-१)

### वाजिने सोमपूर्वत्वं सौत्रामण्याञ्च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥

चातुर्मास्येषु श्रूयते "वाजिभ्यो वाजिन"मिति वाजिनयागः। सौत्रामण्याञ्च "सुराग्रहं गृह्णाति आ ... ... ... ... ... ... ... ... ... ... ... ... ग्रहं गृह्णाति ऐन्द्राग्नं ग्रहं गृह्णाति" इति ॥

तत्र संदिह्यते—किं वैश्वदेविके सौत्रामण्याञ्च सौमिकविध्यन्तप्राप्तिः? उत दार्शपूर्णमासिकविध्यन्तप्राप्तिः? इति ॥

तत्र वाजि ... ... ... ... ... ... ... ... श्रूयमाणेषु च ग्रहेषु च सोमपूर्वत्वं—सोमप्रकृतिकत्वम्—सौमिकविध्यन्तप्राप्तिरित्यर्थः। कुतो हेतोः? ताच्छब्द्यात्—"सोमो वै वाजिनं—सुरा सोमः" इति वा ... ... ... ... सुराग्रहाणाञ्च सोमशब्दवाच्यत्वात् कौण्डपायिनीयाग्निहोत्रवदतिदेशकम्। अतस्सौमिकविध्यन्तस्यैव प्राप्तिः ॥ १ ॥

### अनुवषट्काराच्च ॥ २ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। "वाजिनस्याग्रे वीहीत्यनुवषट्करोति" "सुराया अग्रे वीहीत्यनुवषट्करोति" इति सौमिकविध्यन्तप्राप्तिसूचकानुवषट्कारदर्शनाच्च सौमिकविध्यन्त एव न दार्शपूर्णमासिक इति ॥ २ ॥

### समुपहूय भक्षणाच्च ॥ ३ ॥

शेषं *समधा विभज्य समुपहूय भक्षणाच्च लिङ्गात् सौमिक एवेति। सोमे हीतरेतरं समुपहूय भक्षणं नान्यत्र। अतोऽपि लिङ्गात् इतिकर्तव्यता सौमिकस्यैवेति ॥ ३ ॥

---

*समं विभज्य, सप्तधा विभज्य, इति च पाठान्तरम्।

[1]क्रयणश्रयणपुरोरुगुपयामग्रहासादनवासोपनहनञ्च तद्वत् ॥ ४ ॥

चकारो विशेषोक्ति समुच्चयार्थः। "सीसेन शष्पाणि क्रीणाति ... ... ... ... ... ... ... ... गृह्णातीति ग्रहणम् । एका पुरोरुक् । पुरोऽनुवाक्येति पुरोरुक् । "उपयामगृहीतोऽस्यश्विभ्यान्त्वाच्छिद्रेणाश्विभ्यां गृह्णातीति उपया ... ... ... ... ... ... ... हणम् । गृहीत्वासादयतीत्यासादनम् । त्रिरात्रमुपवसतीत्युपवासः। क्षौमेण वाससोपनद्धानि तोक्मानि शष्पाणि भवन्तीति उप ... ... ... ... ... ... ... ... ... भावि इदञ्च तद्वत् प्रागुक्तहे ... ... ... सौमिकविध्यन्तप्राप्तिलिङ्गमित्यर्थः ॥ ४ ॥

हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥ (सि)

वाकारः प्रागुक्तपक्षव्यावर्तकः। हविषा—दार्शपूर्णमासिकहविस्सामान्येन तद्विध्यन्त एव नियम्यते। कुतः कारणात्? तद्विकारत्वात्—दार्शपूर्णमासिकौषधसान्नाय्य विकारत्वात्। पैष्टिकी सुरा पुंस्त्विति सुराया औषधविकारत्वम्। वाजिने सान्नाय्यविकारत्वं स्पष्टमेव। अतो दार्शपूर्णमासिकविध्यन्त एवेति ॥ ५ ॥

प्रशंसा सोमशब्दः ॥ ६ ॥

यदुक्तं सोमशब्दश्रवणमिति—तत्रोत्तरम्—सोमशब्दः प्रशंसा, सुरावाजिनयोरित्यर्थः ॥ ६ ॥

वचनानीतराणि ॥ ७ ॥

यदुक्तं क्रयणादिदर्शनात्सौमिकविध्यन्तप्राप्तिरिति—तत्रोत्तरम्—इतराणि—क्रयणादीनि, वचनानि ... ... ... ... नीत्यर्थः ॥ ७ ॥

---

१ क्रयण ... ... ग्रहणासादन ... ... तद्वत् क. ख.

क्रयण श्रयण ... ... ख.

व्यपदेशश्च तद्वत् ॥ ८ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । "शष्पैरेव दीक्षणीयमाप्नोति, तोक्मभिः प्रायणीयां, सिंहलोमभिरातिथ्यां" इति शष्पादिभिर्दीक्षणीयाप्राप्तिव्यपदेशश्च, अतिदेशप्राप्तानां पुनर्वचनं व्यर्थमिति स्तुत्यर्थ एव स्यात्, न तु तत्प्राप्त्यर्थमिदं, अतिदेशतः प्राप्तानां दीक्षणीयादीनां शष्पादिभिः पुनराप्तिवचनं नोपपद्यत इत्यर्थः ॥ ८ ॥

[1]पशुपुरोडाशस्य लिङ्गदर्शनात् ॥ ९ ॥

इतश्च विध्यन्त ऐष्टिक एव — "नैतेषां पशूनां पुरोडाशा भवन्ति, ग्रहपुरोडाशा ह्येते पशवः" इति पुरोडाशानां [2]ग्रहत्वाभावेन हेतुना पुरोडाशशब्दश्रवणाच्च ऐष्टिक एव विध्यन्त इति ॥ ९ ॥

प्रयोजनन्त्वनुष्ठानरूपम् — सौमिकधर्मप्राप्तौ दीक्षणीयादीनामपि प्राप्तिः पूर्वपक्षे, सिद्धान्ते तु न तथेति ॥ १ ॥

( पुरोडाशाधिकरणम् — २ )

पशुः पुरोडाशविकारस्स्याद्देवतासामान्यात् ॥ १० ॥ ( पू )

अस्ति पशुरग्नीषोमीयः ।

तत्र संदिह्यते — किं पशुः पुरोडाशविकारः ? उत सान्नाय्यविकारः ? इति ॥

स पशुरग्नीषोमीयः, दार्शपूर्णमासिकाग्नीषोमीय पुरोडाशविकारस्स्यात् । कुतो हेतोः ? देवतासामान्यात् — अग्नीषोमीयदेवतासामान्यात् तद्विध्यन्त एव प्राप्नोति ॥ १० ॥

प्रोक्षणाच्च ॥ ११ ॥

---

१ पशुपुरोडाशस्य च लिङ्गदर्शनम् क. ख.

२ अत्र शोधयितव्यः पाठः ।

चकारो वर्णितार्थे हेत्वन्तरसमुच्चयार्थः । "अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि" इति दार्शपूर्णमासिक पौरोडाशिकलिङ्गाच्चाग्नीषोमीयविध्यन्त एव ॥११॥

पर्यग्निकरणाच्च ॥ १२ ॥

चकारस्समुच्चयार्थः । "आहवनीयादुल्मुकेन पशुं पर्यग्निकरोति" इति ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... पौरोडाशिक-विध्यन्त एव ॥ १२ ॥

साान्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः । दार्शपूर्णमासिकं सान्नाय्यमेवाग्नीषोमीयपशुप्रकृतिः । कुतः? तत्प्रभवत्वात् – पशोस्सान्नाय्यस्य च पशुप्रभवत्वात् – पशूपादानत्वेनान्तरङ्गत्वात् हविस्सामान्यमेव बलीयः । तस्मात्सान्नाय्यविध्यन्तः पशुः ॥ १३ ॥

तस्य च पात्रदर्शनात् ॥ १४ ॥

चकारस्समुच्चयार्थो हेत्वन्तरस्य । तस्य – सान्नाय्यस्य यत्पात्रं उखा, तस्यैवोखापात्रस्य पशावपि 'यदि पशुरुखा ... ... दिति दर्शनात् सान्नाय्य-विध्यन्त एवाग्नीषोमीये पशौ, न पौरोडाशिक इत्यर्थः ॥ १४ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – पूर्वपक्षे पेषणादिधर्मा अपि स्युः, सिद्धान्ते तु न तथेति ॥ २ ॥

(पशोः पयोविकारत्वाधिकरणम् – ३)

दध्नस्स्यान्मूर्तिसामान्यात् ॥ १५ ॥ (पू)

पशौ सान्नाय्यविकारत्वे समधिगते, किं दध्नो विकारः? उत पयसः? इति संदेहे सति–

दध्न एव धर्मा अग्नीषोमीये पशौ प्रवर्तन्ते । कुतः? मूर्तिसामान्यात्– कठिन मूर्तेरुभयत्र सामान्यात् तस्यैव दध्नो विध्यन्तः प्रवर्तत इत्यर्थः ॥ १५ ॥

पयो वा कालसामान्यात् ॥ १६ ॥ (सि)

पयो वा—पय एव पशुर्विकुर्यात् न दधि। कुतो हेतोः। कालसामान्यात् —दिवाकालस्समानः पशुपयसोः। तादृशकालसामान्यात् बलीयसः पयस एव विकारः पशुः।

*

साक्षादेव पशुतः पशुपयसोरुत्पत्तेः, दध्नस्तु एकान्तरितत्वेन दौर्बल्यात् पयसो विकार एव ॥ १६ ॥

द्रवत्वञ्चाविशिष्टम् ॥ १७ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। द्रवतीत्येतादृशं द्रवत्वञ्च पशुपयसोरविशिष्टम्। अतो गुणसामान्यात् पयोविकार एव पशुः ॥ १७ ॥

प्रयोजनन्त्वनुष्ठानरूपम् –विशदमेव, अतो न लिख्यते ॥ ३ ॥

(आमिक्षायागे पयोधर्मातिदेशाधिकरणम्—४)

आमिक्षोभयभाव्यत्वादुभयविकारस्स्यात् ॥ १८ ॥ (पू)

अस्ति वैश्वदेव्यामिक्षा। तत्र संदिह्यते—किमामिक्षा उभयविकारः? उत दधिविकारः? उत पयोविकारः? इति ॥

तत्र सा आमिक्षा उभयविकारः स्यात्—उभयोर्दधिपयसोर्विकारस्स्यात्। कुतो हेतोः? उभयभाव्यत्वात्—उभाभ्यां दधिपयोभ्यां भाव्यत्वात्—साध्यत्वात्। १८ ॥

एकं वा चोदनैकत्वात् ॥ १९ ॥

---

*पश्वानन्तर्यात इति सूत्रेणात्र भवितव्यम्। मातृकायां न विद्यते तत्। व्याख्या परं दृश्यते?

वाकार उभयविकारत्वपक्षव्यावर्तकः । एकमेव दधि पयो वा आमिक्षां विकुर्यात, नोभे विकुर्याताम् । कुतः ? चोदनैकत्वात् – वैश्वदेव्यामिक्षेत्येषा चोदना एकैव । तदयमर्थः – एकचोदनायामेकेन नैराकांक्ष्यात् न द्वितीयविध्यन्तः प्रवर्तेत इत्यर्थः ॥ १९ ॥

## [1]दधि वा सङ्घातसामान्यात् ॥ २० ॥

वाकारोऽनियमपक्षव्यावर्तकः । दधि वा – दध्येवामिक्षां विकुर्यात, न पयः । कुतः ? सङ्घात सामान्यात् – अवयवसङ्घात सामान्यात् – दृढत्व साम्यादित्यर्थः । अतो दधिविध्यन्त प्रवृत्तिरिति ॥ २० ॥

## पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात् ॥ २१ ॥ (सि)

वाकारः प्रागुक्तपक्षव्यावर्तकः । पय एवामिक्षां विकुर्यात, न दधि । कुतः ? तत्प्रधानत्वात् – तस्यैव पयसो दध्यपेक्षया भूयस्त्वेन प्रधानत्वात् । दधि स्वल्पम् । लोकवत – यथा लोके पयो घनीकर्तुमेव दध्यादिकमानीयते, तद्वदत्र दध्नस्तदर्थत्वात् – पयोऽर्थत्वात् । दध्नस्तादर्थ्यात्पय एव प्रधानम् । ततः पयसो धर्मा आमिक्षायामिति ॥ २१ ॥

## धर्मानुग्रहाच्च ॥ २२ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । आमिक्षायाः पयोधर्मत्वे वर्ण्यमाने सद्यस्कालतादि बहुसमान धर्मानुग्रहाच्च हेतोः पयस एव विध्यन्त आमिक्षायाम् ॥

प्रयोजनन्त्वनुष्ठानरूपं – विशदमेव ॥ ४ ॥

(सत्राहीनयोस्सत्राहीनोभयात्मकद्वादशाहधर्माणां व्यवस्थयातिदेशाधिकरणम्–५)

## सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥२३॥ (पू)

अस्ति द्वादशाहोऽहर्गणः । प्रायणीयोऽतिरात्रः, पृष्ठ्यषडहः, त्रय-

---

१ दधि सङ्घात सामान्यात् क. ख.

श्छन्दोमाः, अविवाक्यमहः, उदयनीयोऽतिरात्रः" इति। स एव द्वादशाहः सत्रमहीन इति द्वेधा प्रसिद्धः याज्ञिकसमाख्यया, उपायिचोदनाचोदितत्वे सत्रत्वं – यजतिचोदनाचोदितत्वे अहीनत्वमित्यपि वक्ष्यमाणन्यायेन सिद्धम्। द्विरात्रादिषु गणेषु द्वादशाहविध्यन्त इत्येतावत् ... ... ... ... ।

तत्र संदिह्यते – किमुभयप्रकारोऽसौ विकृतावनियमेन प्रवर्तते? उत व्यवस्थया – उपेयिचोदनासु सत्रधर्माः, द्विरात्रचतूरात्रेण यजेतेत्येवमादौ अहीन-धर्माश्चेति ... ... ... ... ... ... ... ... ... ... ... व्यवस्थाकारेण? इति।

तत्र सत्रमहीन इति सत्रद्वादशाहोऽहीनद्वादशाहश्चेत्युभयथा प्रभिन्नस्य तस्य द्वादशाहस्य द्विरात्रादिष्वहर्गणेषु प्रवृत्तिस्स्यात्। कुतः? ऐककर्म्यात् – सत्राहीनात्मकस्य द्वादशाहस्य विधाभेदेप्यैककर्म्यात् – एककर्मत्वात्। अत उभयविध्यन्तयोर्विकल्पेनानुष्ठानं द्विरात्रादिषु ॥ २३ ॥

(अपि वा यजतिश्रुतेरहीनभू)तप्रवृत्तिस्स्यात्प्रकृत्या तुल्य-शब्दत्वात् ॥ २४ ॥ (सि)

अपिवेति सार्वत्रिकोभयप्रवृत्तिर्द्वादशाहस्य निराक्रियते। द्विरात्रा-दिष्वेकादशरात्रपर्यन्तेषु अहर्गणेषु अहीनभूतप्रवृत्तिस्स्यात् – अहीनभूतस्य द्वादशाहस्य प्रवृत्तिस्स्यात्। कुतः? यजतिश्रुतेः – "द्विरात्रेण यजेत चतूरात्रेण यजेत" इति यजतिश्रवणात्। "द्वादशाहेन प्रजाकामं याजयेदिति प्रकृत्या अमीषामपि तुल्यशब्दत्वात् तुल्य यजति शब्दवत्त्वात् अहीन द्वादशाहविध्यन्त एव प्रवर्तत इत्यर्थः ॥ २४ ॥

(द्विरात्रादीनामैकादशरात्रादहीनत्वं यजति चोद)नात् ॥ २५ ॥

ऐकादशरात्रात् – एकादशरात्रपर्यन्तं, अहीनद्वादशाहविध्यन्तः। कुतः? यजतिचोदनात् – एकादशरात्रपर्यन्तं यजतिचोदनत्वात् – अथवा यजतिचोदनाल्लिङ्गात् ऐकादशरात्रात् – एकादशरात्रपर्यन्तेषु अहीनविधान-मित्यर्थः ॥ २५ ॥

* अस्य सूत्रस्यापरा व्याख्या–

## ( द्विरात्रादीनामैकादशरात्रादहीनत्वं यजति चोद )नात् ॥

ऐकादशरात्रात्–एकादशरात्रपर्यन्तं यजतिचोदनात् तत्राहीनविध्यन्तः । तत्र त्रयोदशरात्रादीनि आसनोपेयिचोदनानि, तेषु तु सत्रद्वादशाहविध्यन्त इत्यर्थः ॥

## लिङ्गाच्च ॥ २६ ॥

"अग्निष्टोमो वै प्रजापतिः, स उत्तरानेकाहानसृजत, तमेतं द्विरात्रादयोऽहर्गणा ऊचुः त्वमस्मान् [1]मा हिंसीरिति, तदेषामहीनत्व"मिति द्विरात्रादीनामहीनत्वलिङ्गाच्च (द्विरात्रादिषु) अहीनविध्यन्त एव प्रवर्तत इति ॥ २६ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–पूर्वपक्षे बहुयजमानाधिकारादयो धर्माः ... ... ... सिद्धान्ते तु ... ... ... ... ॥ ५ ॥

( पञ्चदशरात्र कुण्डपायिनामयनयोः सत्रत्वात्सत्रात्मकद्वादशाहधर्मातिदेशाधिकरणम्–६ )

## [2]अन्यतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २७ ॥ ( पू )

पञ्चदशरात्रः कुण्डपायिनामयनञ्च, उभावपि किं सत्रधर्माणौ? उताहीनौ? इति संदेहे सति —

**पञ्चदशरात्रस्य च कुण्डपायिनामय ... ... ... ... ... ... ... ... त्वान्न सत्रत्वम् ।** कुतः? उभयोः पञ्चदशरात्रकुण्डपायिनामयनयोः, "उदव-

---

* "त्रयोदशरात्रादिषु सत्रभूतेष्वासनोपायिचोदनात्" इति सूत्रं अस्यां मातृकायामुपेक्षितम् । तदर्थ एव "पूर्वसूत्रस्यापरा व्याख्ये"ति वर्ण्यते ।

१ ... माहासीरिति ... इत्येव समीचीनः पाठः स एव ग्रन्थान्तरेषु दृश्यते ॥

२ अन्यतरतोऽतिरात्रत्वात् ... ... दर्शनात् क. ख. अत्रापि व्याख्या तथैव.

सानीयोऽतिरात्रः" इति अन्यतरतोऽतिरात्रत्वात्, तद्भूतेषु – अन्यतरतोऽतिरात्रभूतेषु अह ... ... ... (यदन्यतरतोऽतिरात्रस्तेनाहीनः इति) अहीनत्वस्य दर्शनात्। अतोऽत्र पञ्चदशरात्रे कुण्डपायिनामयने च, अहीनद्वादशाहधर्माः प्रवर्तन्ते, न सत्र द्वादशाहधर्माः इति ॥ २७ ॥

*

## [1]सत्रे वोपेयिचोदनात् ॥ २८ ॥

वाकारः प्रागुक्तपक्षव्यावर्तकः। पञ्चदशरात्रकुण्डपायिनामयने सत्रे एव न त्वहीने। कुतः? उपेयि चोदनात् – "त एनं पञ्चदशरात्रमुपेयु"रिति च, "ऋद्धिकामा उपेयु"रितिच उभयोरुपेयि चोदनत्वादित्यर्थः। अतस्सत्रद्वादशाहप्रकृतिके उभे अपि। अहीनलिङ्गस्य, अर्थवादवाक्यान्तरगतस्य चोदनागतोपेयिचोदनादन्तरङ्गात् दुर्बलत्वात्, तस्य चोभयरूपत्वस्तुत्याप्युपपत्तेः, न तदहीनत्वसाधकमिति ॥ २८ ॥

## सत्रलिङ्गञ्च दर्शयति ॥ २९ ॥

चकारो लिङ्गान्तरसमुच्चयार्थः। कुण्डपायिनामयने, "गृहपतिः – सुब्रह्मण्यः" इतीदं वाक्यं गृहपतेस्सात्रिकत्वात् तादृशं सत्रलिङ्गं दर्शयति। सत्रलिङ्गदर्शनाच्च कुण्डपायिनामयनस्य सत्रत्वम्। अतस्सत्रद्वादशाहात् विध्यन्तप्राप्तिरित्यर्थः ॥ २९ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – प्राग्वद्वर्णनीयम् ॥ ६ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां अष्टमस्याध्यायस्य द्वितीयः पादः

---

* अत्र "अहीनवचनाच्च" इत्येकं सूत्रं, तद्व्याख्या च क. ख.

१ सत्रे वोपायिचोदनात् क. ख.

## अष्टमाध्यायस्य तृतीयः पादः

(आग्नावैष्णवादौ देवतासामान्यात् अग्नीषोमीयादिधर्मातिदेशाधिकरणम्–१)

### (हविर्गणेऽपरमुत्तर)स्य देशसामान्यात् ॥ १ ॥ (पू)

"आग्ना वैष्णवमेकादशकपालं निर्वपेत्, अग्नये शुचयेऽष्टाकपालं, सरस्वत्यै चरुं" इत्येवमाद्या हविर्गणा उदाहरणम्।

तत्र संदेहः–किं शुचिदेवत्यस्य अग्नीषोमीयविध्यन्तः, आग्नावैष्णवस्य आग्नेयः ? (उत विपर्ययः ? इति)

... ... ... ... तेषु हविर्गणेषु वैकृतेषु धर्मातिदेशे कर्तव्ये सति, उत्तरस्य–अग्नेः शुचेः, अपरं–दार्शपूर्णमासिकं ... ... ... अग्नीषोमीयधर्मप्रवृत्तिः स्यात्, पूर्वं पूर्वस्येत्यपूर्वा ... ... ... कुतो हेतोः ? देशसामान्यात्–क्रमापरपर्यायस्य देशस्य प्रकृतिविकृत्योः समानत्वात् क्रमप्रमाणेन प्राकृतेन विकृतावपि तथैव धर्मप्राप्तिरित्यर्थः ॥ १ ॥

### देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥२॥(सि)

वाकारः पक्षव्यावर्तकः। देशाद्धर्मनियम इत्येतन्नोपपद्यते। देवतयैव नियम्येत — देवतासामान्येनैव नियम्येत। कुतः ? शब्दवत्त्वात् — देवतासामान्यस्य–आग्नावैष्णवं, अग्नये शुचये, इति देवतायाश्शब्दवत्त्वात्–शब्द प्रतिपादितत्वात्। देवतासामान्यमेव शब्दवत्त्वात्प्रबलम्, इतरस्य तु देशाख्यस्य अश्रुतित्वात् — आर्थिकत्वात्, न तत् धर्मग्रहणप्रमाणम् ॥ २ ॥

प्रयोजनन्त्वनुष्ठानरूपम् — विपर्ययाविपर्ययाभ्यां प्रद्योतितम् ॥ १ ॥

(गणचोदनाधिकरणम्–२)

### गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥ (पू)

जनकसप्तरात्रे श्रूयते—"चत्वारि त्रिवृन्त्यहानि भवन्ति" इति। तथाऽन्यत्र श्रूयते—"नव त्रिवृन्त्यहानि भवन्ति" इति।

तत्र संदिह्यते — किं षाष्ठिकस्य प्रथमस्याह्नोऽयमभ्यासः? उत नानाह्नां द्वादशाहिकानां स्तोमविधिः? इति।

तत्र ईदृश्यां गणचोदनायां श्रूयमाणायां, यस्य क्रतुविशेषस्य लिङ्गं उपलभ्यते, तदावृत्तिः—तस्यैवावृत्तिः प्रतीयते। अत्र च 'त्रिवृन्त्यहानि' इति श्रूयते। त्रिवृत्त्वञ्च षाडहिकं लिङ्गम्। तस्माल्लिङ्गात् षाडहिकप्रथमाह्न आवृत्तिस्स्यात्, न द्वादशाहिकस्य प्राप्तिः। तत्र दृष्टान्तः—आग्नेयवत् इति। यथा आग्नेयस्य एकदैवत्यत्वात्, अग्नये पावकायेत्यत्र देवतैक्यसामान्यात् तद्धर्म एव, (न) द्विदैवत्याग्नीषोमीयधर्माः; तद्वदत्रापि षाडहिकप्रथमाह्न आवृत्तिरेवेदृश्यां गणचोदनायाम्॥ ३॥

[1]नाना वा संघातत्वात्प्रकृतिलिङ्गेन चोदनात्॥ ४॥ (सि)

वाकारः पक्षव्यावर्तकः। द्वादशाहिकानि नानाहानि—नानाविधान्यहानि प्रवर्तन्ते त्वीदृश्यां गणचोदनायां, न षाडहिकप्रथमाहरावृत्तिः। कुतः? संघातत्वात्—"चत्वारि त्रिवृन्त्यहानि" इत्यहस्संघातत्वात्। प्रकृतिलिङ्गेन—अहस्संघातेन सामान्येनामीषां चोदनात्। अतो द्वादशाहिकानां प्राप्तानां नानाह्नामनुवादेन त्रिवृत्त्वं विधातुं शक्यमित्यर्थः॥ ४॥

तथा चान्यार्थदर्शनम्॥ ५॥

चकारो हेत्वन्तरसमुच्चयार्थः। "चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि" इत्यग्निष्टोममुखत्वरूपान्यार्थदर्शनञ्च तथा—द्वादशाहिकानां नानाह्नामनुवादेन त्रिवृत्त्वविधान एवोपपद्यते, नान्यथा। त्रिवृदभ्यासे ह्युच्यमाने सर्वेऽग्निष्टोमा भवेयुः। तत्र त्रिवृन्मुखत्वं चतुर्णां त्रिवृतां नोपपद्यते। अतश्च द्वादशाहनानाहरनुवादेन त्रिवृत्त्वविधिरिति॥ ५॥

---

१ नानाहानि वा संघातत्वात्प्रवृत्तलिङ्गेन चोदनात् क.
" " प्रवृत्ति " " ख.

प्रयोजनन्त्वनुष्ठानरूपम् – कोटिभ्यां द्योतितप्रायम् ॥ २ ॥

( कालाभ्यासाधिकरणम् –३ )

## कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥ (पू)

क्वचित्कर्मविशेषे श्रूयते – "षडहा भवन्ति-चत्वारो भवन्ति, पञ्चाहा भवन्ति-पञ्चभवन्ति" इति ॥

तत्र संदिह्यते – किं प्राग्वत् द्वादशाहिकानां प्रवृत्तिः ? उत षाडहिकानामभ्यासः ? इति ॥

तत्र कालाभ्यासेऽपि – कालशब्देनाहरेवोच्यते सौत्यम् । तादृशकालाभ्यासयुक्ते हीदृशकर्मविशेषेऽपि "षडहा भवन्ति, चत्वारो भवन्ति" इति संख्यायाः पृथङ्निवेशित्वेन कर्मभेदात्–आवृत्तिरूपकर्मभेदात्, द्वादशाहिकानि नानाहान्येवानावृत्तानि परिपूरणसंख्यानि प्रवर्तन्ते इति बादरिराचार्यो मेने । अतो द्वादशाहिकानां नानाह्नामेव सङ्घातसामान्याल्लिङ्गात्प्रवृत्तिः, न षाडहिकस्यावृत्तिरित्यर्थः ॥ ६ ॥

## तदावृत्तिन्तु जैमिनिरह्नां प्रत्यक्षसंख्यत्वात् ॥ ७ ॥ (सि)

तुना पक्षो व्यावर्त्यते । जैमिनिराचार्यः, तदावृत्ति – प्रसिद्धषडहावृत्तिमेव ईदृशेषु गणेष्वनुमनुतेस्म, न द्वादशाहिकानि । कुतः ? अह्नां – षाडहिकानां, 'षडहा भवन्ती'ति प्रत्यक्षसिद्धत्वात् 'चत्वारष्षडहा' इति चतुर्विंशतिसंख्या तु षडहप्रत्ययाधीनप्रवृत्तिः । अतो द्वादशाहिकानां नानाह्नां प्राप्तौ, आनुमानिकचतुर्विंशतिसंख्याया ... ... ... ... कत्वात्, अनुमानाच प्रत्यक्षस्य बलवत्तरत्वात् षाडहिकान्येव प्राप्नुयुरिति ॥ ७ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – नातीव ... ... ... ... ॥ ३ ॥

(संस्थागणाधिकरणम्—४)

**संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥८॥ (पू)**

"पञ्चो (क्थ्योऽग्निष्टोमः, शताग्निष्टोमं भवति, शतातिरात्रं) शतं भवति" इत्येवमादयस्संस्थागणा उदाहरणम् ॥

तेषु संदेहः—किं ज्योतिष्टोमाद्यभ्यासः? उतैवं संख्यासंस्थाविशिष्टानामनुवादः? इति ॥

तत्र संस्थागणेषु—संस्थानां प्रधानेषु गणेषु, तदभ्यासः—ज्योतिष्टोमाभ्यासः, प्रतीयेत—ज्योतिष्टौमिकस्यैवाभ्यासस्स्यात्। कुतः कारणात्? ज्योतिष्टोमस्यैवाग्निष्टोमादिभिर्भेदैः कृतलक्षणत्वेन तस्यैव ग्रहणात्। अतः "पञ्चाग्निष्टोम" इत्यादौ ज्योतिष्टोमस्यैवाभ्यासो न द्वादशाहिकानां नानाह्नां वाद इत्यर्थः ॥ ८ ॥

**अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥ ९ ॥ (सि)**

वाकारः पक्षव्यावर्तकः। द्वादशाहरूपा प्रकृतिः तद्विशिष्टा स्यात्—गणप्रकृतिभूतद्वादशाहिकनानाह्नान्येवाग्निष्टोमादिभिस्संख्याविशेषै[1]र्विशिष्टा स्यात्। कुतो हेतोः? अधिकारात्—द्वादशाहिकनानाह्नामेव चोदकेनाधिकृतत्वात्, तदनुवादेन संस्थाविधिरित्यर्थः। यदुक्तमग्निष्टोमादिसंस्थानामभिर्ज्योतिष्टोमाभ्यास इति, तत्रोत्तरम्—अभिधानस्य—अग्निष्टोमाद्यभिधानस्य, तन्निमित्तत्वात्—संस्थानिमित्तत्वात्। अतो न ज्योतिष्टोमस्य वाचकमग्निष्टोमपदम्। तस्मात् द्वादशाहिकानां नानाह्नां वाद इति ॥ ९ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—एकैव दीक्षा स्यात्पूर्वपक्षे, सिद्धान्ते तु न तथेति ॥ ४ ॥

---

१ विशिष्टानि स्युः इति स्याद्।

( गणादुपचयाधिकरणम्—५ )

## गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥ (पू)

"शतोक्थ्यं भवति, शतातिरात्रं भवति" इति श्रूयते। तत्र द्वादशाहिकानि प्रवर्तन्ते। तानि प्रायेणोक्थ्यसंस्थानि। द्वावग्निष्टोमौ। शतोक्थ्यं भवतीत्युक्तेरग्निष्टोमयोरुक्थ्यस्तोत्रोपचयः। शतातिरात्रं भवतीति सर्वेषु रात्रिपर्यायोपचयः॥

तत्र संदिह्यते—किं द्वादशाहादुपचयः कर्तव्यः? उत ज्योतिष्टोमात्? इति।

एतेष्वहर्गणेषु गणात्—अहर्गणप्रकृतिभूतात् द्वादशाहादेव उपचयः—प्रचयः स्यात्। कुतः? तत्प्रकृतित्वात्—गणानां द्वादशाहप्रकृतिकत्वात्। अतो द्वादशाहं विध्यन्त इति)॥ १०॥

## एकाहाद्वा तेषां समत्वात्स्यात् ॥ ११ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। एकाहात्—ज्योतिष्टोमादेवाहर्गणेष्वीदृशेषु उपचयस्स्यात्, न द्वादशाहात्। कुतो हेतोः? द्वादशाहिकानामुक्थ्यादीनां वैकृतैरेतादृशैस्समत्वात्—प्रकृतिभूतज्योतिष्टौमिकधर्मग्राहित्वेन तुल्यत्वात्। (उक्थ्यत्वात्) अतो ज्योतिष्टोमादेवोपचयः कर्तव्यः॥ ११॥

प्रयोजनन्त्वनुष्ठानरूपम्—पूर्वपक्षे भेदेन मृग्यम्, सिद्धान्ते तु विशदम्॥५॥

( गायत्र्यधिकरणम्—६ )

## [1]गायत्रीषु प्राकृतीनामपच्छेदः प्रकृताधिकारात्संख्यात्वादग्निष्टोमवद्व्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥ (पू)

---

१ ... प्रकृताधिकारात्संख्यत्वात् ..." इति मातृकायाम्।

... मवच्छेदः प्रकृत्यधिकारात्संख्यात्वात ..." क.

... मवच्छेदः प्रकृत्याधिकारात्संख्यात्वात् ..." ख.

उपचयश्चिन्तितः। इदानीमपचयश्चिन्त्यते। इदमाम्नायते—"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति। तत्रेदमपरमाम्नातम्—"गायत्रमेतदहर्भवती"ति॥

तत्र संदिह्यते—किं प्राकृतीनां त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वा गायत्रं तदहः कर्तव्यम्? उत दाशतयीभ्यो गायत्रीणामागमं कृत्वा? इति।

"गायत्रमेतदहर्भवती"ति श्रूयमाणासु गायत्रीषु, चोदकप्राप्तानां प्राकृतीनां त्रिष्टुब्जगतीनां गायत्रीत्वसिद्ध्यर्थं चतुर्विंशत्यक्षरेषु [1]अपच्छेदः कर्तव्यः, नतु दाशतयीभ्यो गायत्रीणामागमः। कुतो हेतोः? प्रकृताधिकारात्—चोदकेन प्राकृतीनामेव त्रिष्टुब्जगतीनामधिकृतत्वात्। गायत्रीशब्दस्य च [2]संख्यात्वात् चतुर्विंशतिसंख्यापरत्वात्। अव्यतिरेकात् चतुर्विंशतिसंख्यानैयत्यात् गायत्रीशब्दस्य तदाख्यत्वम्—चतुर्विंशतिसंख्यानामत्वम्। अतस्त्रिष्टुब्जगतीषु गायत्रीत्वसिद्ध्यर्थमक्षरावलोपः कार्यः। तत्र दृष्टान्तः अग्निष्टोमवदिति। यथा शतानिष्टोममित्यादौ द्वादशाहिकानामह्नामुक्थ्यावलोपं कृत्वा अग्निष्टोमत्वं संपाद्यते, तद्वदत्राप्यवलोपः कार्यः॥ १२॥

## तन्नित्यवच्च पृथक्सतीषु [3]तद्वचनात्॥ १३॥

चकारो हेत्वन्तरसमुच्चयार्थः। तत्—[4]चतुर्विंशतीनां गायत्रीषु नित्यवत्—नित्यमेव—नित्यसंबद्धमेवेति मत्वेन श्रुतौ, (पृथक्सतीषु—गायत्रीभ्यः पृथग्भूतास्वगायत्रीषु त्रिष्टुब्जगतीषु तद्वचनम्—चतुर्विंशतिसंख्यापरगायत्रीवचनम्। 'ये हि द्वे गायत्र्यौ (सैका जगतीति। इदञ्च वचनं गायत्रीशब्दस्य चतुर्विंशतिसंख्यापरत्व एवोपपद्यते नान्यथा। अतस्त्रिष्टुब्जगतीष्वक्षरावलोपेनैव गायत्रीत्वं संपाद(यितव्यमिति॥ १३॥

---

१ अवच्छेदः क. ख.

२ अत्रापि "संख्यत्वात" इत्येव मातृकायां दृश्यते.

३ "... तद्वचनम् क. ख. अत्रापि व्याख्या तथैव।

४ चतुर्विंशतित्वं इति स्यात्।

न विंशतौ दशेति चेत् ॥ १४ ॥

इति चेत्पश्यसि, यथा विंशतौ संख्यायां दशेति संख्याया-स्संख्यान्तरे ... ... ... नाद्वैतोनोंपपद्यते, तद्वदत्र संख्यापरत्वेऽपि, अष्टा-चत्वारिंशत्संख्यायां चतुर्विंशतिसंख्या नोपपद्यते – इत्यसूत्रितपक्षानुवादः ॥१४॥

ऐकसंख्यमेव स्यात् ॥ १५ ॥

न वयं संख्यायां संख्यान्तरं ब्रूमः। किन्तु ऐकसंख्यम् – एक-संख्यत्वमेव स्यात्। अयमभिप्रायः – अष्टाचत्वारिंशत्संख्यायां संख्यान्तरं समानजातीयं न वर्तते, यथा ऋचि ऋगन्तरं न वर्तते। किन्तु, अवयवभूते संभाविते द्वे चतुर्विंशतिसंख्ये उपपद्येते एवेत्यर्थः। अतस्त्वदुक्तं दूषणान्तरं न घटत इति। तस्मिन्नाक्षरावलोपः कार्यः त्रिष्टुब्जगतीषु तद्रूपस्य संभावितत्वादिति वा असूत्रितपक्षानुवादः॥

ऐकसंख्यमेव स्यात्

त्रिष्टुब्जगतीनामुपादानेऽपि गायत्रीणामुपात्तत्वात् नाक्षरावलोप इत्ययं पक्षो नोपपद्यते, किन्तु ऐकसंख्यमेव स्यात् – एकसंख्यावत्त्वं स्यात्। एकस्या एव संख्यायाः कर्माङ्गत्वं, न संख्यावयवसंख्याया अपीति। अतो-ऽवयवत्वेनानुवर्णनं नोपपद्यते। न त्रिष्टुबुपादानेन गायत्र्युपात्ता इति ॥ १५ ॥

[1]दर्शयति च ॥ १६ ॥

चकारो हेत्वन्तरार्थः। उत्तरसंख्योपादाने पूर्वसंख्या अनुपात्ता भवती-त्येतमर्थं, 'एका च शतञ्च सहस्रञ्च ... परार्धश्चे''ति पृथक्संख्योपादानमेव अधस्तनानां अनुत्तरान्तर्भावं दर्शयति। यद्युत्तरस्यां पूर्वसंख्योपात्तेत्यनुवर्ण्येत, उत्तरसंख्या परार्धमात्रमनुवर्ण्येत, न च तथोपपद्यत इत्यर्थः॥ १६ ॥

गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥ १७ ॥ (सि)

---

१ ग्रंथान्तरे इदं सूत्रं नास्ति। शाबरभाष्य वाक्यमिदम्।

वाकारः संख्यापरत्वं गायत्रीशब्दस्य व्यावर्तयति। गुणात्—चतुर्विंशति रूपात् द्रव्यशब्द एव स्यात्—ऋग्द्रव्यवाचक एव स्यात् (गायत्री) शब्दः। कुतः? असर्वविषयत्वात्—द्वादशविंशतिसंख्याकसकलद्रव्या-विषयत्वात् चतुर्विंशति संख्यापरिच्छिन्नगोयूथादौ अप्रयोगात् न संख्यामात्र (वाचित्वंगाय)त्रीशब्दस्य ॥ १७ ॥

## गोत्ववच्च समन्वयः ॥ १८ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। गायत्रीशब्दस्य कयापि विधया संख्या-मात्रपरत्वे आशं ... ... ऋग्द्रव्यवाचक एव गायत्रीशब्द इति, ऋचि समन्वयः स्यात्। तत्र दृष्टान्तः—गोत्ववत् इति। यथा गोशब्दस्य गमनक्रियायोगात् सर्वत्रानुप्रवेशे सति रूढ्या लब्धात्मिकया सास्नादिमति पिण्ड एव समन्वयो नान्यत्र ॥ १८ ॥

## [1]संख्यायाश्च शब्दवत्त्वात् ॥ १९ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। संख्यायाः—चतुर्विंशतिसंख्यायाः शब्द-वत्त्वात्—चतुर्विंशतिसंख्याशब्द वाच्यत्वात्, तद्वाचके चतुर्विंशतिसंख्याशब्दे सति, न तदर्थकेन गायत्रीशब्देन व्यवहारे प्रयोजनमस्ति। अतः ऋग्द्रव्यवाचक एवायं गायत्रीशब्द इति ॥ १९ ॥

## [2]इतरस्याश्रुतत्वाच्च ॥ २० ॥

गायत्रीशब्दस्य चतुर्विंशतिसंख्यावाचकत्वे सति इतरस्य—ऋग्द्रव्यस्य अश्रुतित्वात्—अशाब्दत्वात्—ऋग्द्रव्यवाचकशब्दान्तराभावात् गायत्रीशब्देन ऋग्द्रव्यव्यवहारो न सिद्ध्येत्। अतश्चतुर्विंशतिशब्देन संख्याया व्यवहारः, गायत्रीशब्देन च ऋग्द्रव्यस्य व्यवहारः कर्तव्यः। अतो दाशतयीनामागमः कार्य इत्यर्थः ॥ २० ॥

---

१ संख्यायाश्च शब्दत्वात् ख.

२ इतरस्याश्रुतित्वाच्च क. ख. अत्रापि व्याख्या तथैव।

## द्रव्यान्तरेऽनिवेशादुक्थ्यलोपैर्विशिष्टं स्यात् ॥ २१ ॥

यदुक्तं पञ्चाग्निष्टोम इत्यादौ उक्थ्यलोपवदत्राप्यक्षरावलोपेनैव गायत्रीत्वं संपादनीयमिति, तन्न। तत्र पञ्चाग्निष्टोमादौ उक्थ्यलोपैः—द्वादशाहिकाना-मुक्थ्यानां लोपेनैवाग्निष्टोमादिविशिष्टं कर्म स्यात्, अन्यथा अनुपपत्तेः। इह तु अक्षरावलोपे कृते चतुर्विंशतिसंख्यामात्र ... ... ... ... द्रव्यान्तरे—ऋगन्तरे अनिवेशात्—चतुर्विंशतिसंख्यामात्रस्य गायत्रीवाचकत्वाभावात् नाक्षरावलोपे-नापि गायत्रीत्वं संपादयितुं शक्यते। ... ... ... ... ... ... ... ... वाचक इत्यर्थः ॥ २१ ॥

## अशास्त्रलक्षणत्वाच्च ॥ २२ ॥

चकारः पुनर्हेत्वन्तरार्थः। शताग्निष्टोममित्यादौ उक्थ्यबाधां विना ... ... ... ... (अग्निष्टोमा)न्तता न शक्यते कर्तुमिति शास्त्रलक्षणया (उक्थ्यलोपः) ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... देशिकगायत्रीबाधनं आतिदेशिकीभिर्युक्तं कर्तुमित्यर्थः ॥ २२ ॥

## उत्पत्तिनामधेयत्वाद्भक्त्या पृथक्सतीषु स्यात् ॥ २३ ॥

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... "ये द्वे गायत्र्यौ सा एका जगती" इति श्रवणात् संख्यायां गायत्रीशब्द ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...न्ये गायत्री त्रिष्टुब्जगतीषु स्थितासु जगत्यां द्वे गायत्र्याविति वचन ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...व्यान्तरमुपपद्यत इति। अतो द्वाभ्यां गायत्रीभ्यां वै ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... चको गायत्रीशब्द इति ॥ २३ ॥

... ... .... ... ... ... .... ... ... ... ... ... ... ... ... ... .... ... ... यथा प्रकृति-
भूते कर्मणि ऋग्गुणप्रयोगोऽङ्गीकृतः तद्वदत्र ... ... ... ... ... ... ॥ २८ ॥

गुणावेशश्च सर्वत्र ॥ २९ ॥

... .... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... योगोऽङ्गीकृतो भवति । अतो दाशतयीभ्य एव गायत्रीणामागम
... ... ... .... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ख्यायां निवेशः स्यात्,
तर्हि चतुर्विंशतिसंख्यारूपगुणपरत्व ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... परत्वं गायत्रीशब्दस्य, किन्तु सर्वत्र प्रयोगस्स्यात् ।
तादृश ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ २९ ॥

निष्पन्नग्रहणान्नेति चेत् ॥ ३० ॥

इति चेत्पश्यसि, न सर्वत्र गायत्रीशब्दप्रयोगः क्रियते ... .... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ग्रहणमिति अनुवादपरमिदं सूत्रम् ॥ ३० ॥

तथेहापि स्यात् ॥ ३१ ॥

... ... ... ... ... ... ... ... गायत्रीशब्दो दृष्टः तथैव इहापि
बृहस्पतिसवे ऋच ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ ३१ ॥

यदि वाऽविशये नियमः प्रकृत्युपबन्धनात् शरेष्वपि (प्रसिद्ध-स्स्यात् ॥ ३२ ॥)

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... कृति संबद्धानां अनुग्रहात् अक्षरावलोपः कर्तव्य इति ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... प्रकृत्युपबन्धनात्—चोदकेन प्राकृतीनां त्रिष्टुबा ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... तद् त्रापि वैकृतोपदेशे सति कुशेषु ... ... ... ... ... ... ... ... ... ... ... ... ॥ ३२ ॥

दृष्टः प्रयोग इति चेत् ॥ ३३ ॥

इति चेत्पश्यसि, अक्षरगतायामेव चतुर्विंशतिसंख्यायां गायत्रीशब्दस्य दृष्टः प्रयोगः । कुशेषु तादृशप्रयोगाभावात् न तत्कल्पनेति ... ... ... ... ... ... ॥ ३३ ॥

तथा शरेष्वपि ॥ ३४ ॥

शरवणमेवेदं कुशवनमिति प्रयोगात् शरेष्वपि तथैव—तथैव कुशमयत्वं कल्पयितव्यं स्यादिति भावः । ३४ ॥

भक्त्येति चेत् ॥ ३५ ॥

इति चेत्पश्यसि दीर्घपत्रत्वादिसादृश्यात् [1]शरेषु कुशशब्दो भक्त्या—गौण्या वृत्त्या प्रवर्तत इति ... ... ... ... ॥ ३५ ॥

तथेतरास्मिन् ॥ ३६ ॥

इतरस्मिन्—ये द्वे गायत्र्यौ सैका जगतीत्यत्रापि तथैव गौण्या वृत्त्यैव स्यान्न मुख्यया । अतो गायत्रीशब्दरूढिः, न संख्यायाम् ॥ ३६ ॥

अर्थस्य चासमाप्तत्वान्न तासा[2]मेकदेशस्स्यात् ॥ ३७ ॥

चकारोऽक्षरावलोपविनिवृत्त्यर्थः । त्रिष्टुब्जगतीनां एकदेशत्वेन गायत्रीकल्पने सति, असमाप्तवाक्यत्वेन अर्थस्य असमाप्तत्वात्, मन्त्रस्य च

१ कुशेषु शरशब्दः इति स्यात् ।

२ मेकदेशे स्यात् क. ख.

देवताभिधानार्थत्वात्, अपरिपूर्णार्थेन वाक्येन च देवताभिधानायोगात् तासां—त्रिष्टुब्जगतीनां एकदेशो न कर्माङ्गम्। किन्तु दाशतयीनां गायत्रीणामागमेनैव "गायत्रमेतदहर्भवती"ति बृहस्पतिसवे उपपत्तिः कर्तव्या नान्यथा। तस्मात्सर्वमुपपन्नं भवति ॥ ३७ ॥

प्रयोजनन्त्वनुष्ठानरूपं—प्रसिद्धमेवमिति न विविच्य लिख्यते ॥ ६ ॥

इति श्रीजैमिनिसूत्रवृत्तौ फलवत्यां अष्टमाध्यायस्य तृतीयः पादः।

———

## अष्टमाध्यायस्य चतुर्थः पादः

———

(दर्विहोमाधिकरणम्—१)

### दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥ (सि)

"यदेकया जुहुयाद्दर्विहोमं कुर्यात्" इति श्रुतेऽस्मिन् (संदिह्यते)—किं गुणविधिर्दर्विहोमशब्दः? उत कर्मनामधेयम्? इति ॥

तत्र दर्विहोमः—दर्विहोमशब्दः, यज्ञाभिधानं—यागनाम। कुतः? होमसंयोगात्—प्रधानेन होमेन गुणभूतायाः दर्व्याःसंयोगात् होमप्राधान्याच्च कर्मनामधेयमेव, न गुणवचनमित्यर्थः* ॥ १ ॥

(दार्विहोमशब्दस्य स्मार्तानां वैदिकानाञ्च कर्मणां नामधेयताधिकरणम्—२)

### स लौकिकानां स्यात्कर्तुस्तदाख्यत्वात् ॥ २ ॥ (पू)

कर्मनामत्वे सिद्धे चिन्तान्तरम्—

किं लौकिकानां स्मार्तानामष्टकादीनां नामधेयं दर्विहोमशब्दः? उत सर्वेषां लौकिकानां वैदिकानाञ्च? इति ॥

---

*स्थितं तावत्—इति वाक्यमत्र विद्यते क.

सः—[1]दर्विशब्दः, लौकिकानां—स्मार्तानां कर्मणां नामधेयं स्यात्, न वैदिकानाम् । कुतो हेतोः? क्रतुस्तदाख्यत्वात्—क्रतुः—दर्विहोमकर्तुः पुरुषस्य तदाख्यत्वात्—"शिनीनां दार्विहोमिको ब्राह्मणः, अंबष्ठानां दार्विहोमिको ब्राह्मणः" इति तदाख्यया—दर्वीहोमाख्यया संयोगात् । यश्च यत्करोति तेनैव कर्मणा स व्यवहार्यो नान्यथा । अतो लोकसिद्धत्वेन लौकिकानां कर्मणां नामधेयमित्यर्थः ॥ २ ॥

## सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥ (सि)

वाकारः पक्षव्यावर्तकः । सर्वेषां—लौकिकानां वैदिकानाञ्च कर्मणां इदं नामधेयं स्यात्, नतु लौकिकानामेव । कुतः? वैदिकवास्तुहोमे, "यदेकया जुहुयाद्दर्विहोमं कुर्यात्" इति दर्विहोमशब्ददर्शनात् । अस्माल्लिङ्गात् होमसामान्येन सर्वहोमेषु दर्विहोमत्वप्राप्तिः । अतश्च वैदिकानामपीदं नामधेयं, न तु लौकिकानामेवेति ॥ ३ ॥

प्रयोजनन्त्वनुष्ठानरूपं पक्षयोर्मृग्यम् ॥ २ ॥

(दर्विहोमशब्दस्य होमनामधेयत्वाधिकरणम्—३)

## जुहोतिचोदनानां वा तत्संयोगात् ॥ ४ ॥ (सि)

लौकिकवैदिकनामत्वे समधिगते सत्यपरं चिन्त्यते—

किं यजतिचोदनानां नामधेयम्? उत जुहोतिचोदनानामेव? इति ॥

जुहोतिचोदनानां वा—जुहोतिचोदनानामेवेदं नामधेयं, न यजतिचोदनानामपि । कुतो हेतोः? तत्संयोगात्—होमसंयोगात् । यजिहोमयोश्च भेदात् जुहोतिचोदनानामेव नामधेयमिति ॥ ४ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—नातीव गहनं पक्षयोरिति न विलिख्यते ॥ ३ ॥

---

१ दर्विहोमशब्दः इति स्यात् ।

(दर्विहोमशब्दस्य गुणविधित्वनिराकरणाधिकरणम् —४)

## द्रव्योपदेशाद्वा [1]गुणानामभिधानं स्यात् ॥ ५ ॥ (पू)

स्थितादुत्तरमुच्यते — यदुक्तं कर्मनामधेयं दर्विहोमशब्द इति, तन्न। किं तर्हि? गुणानां — दर्व्यादिगुणस्येत्यर्थः। तत् गुणस्याभिधानं — विधिरित्यर्थः। कुतः? द्रव्योपदेशात् — दर्व्याख्यद्रव्यस्योपदेशात्, गुणविधिरेव न कर्मनामधेयम् ॥ ५ ॥

## न लौकिकानामाचारग्रहणत्वात् शब्दवताञ्चान्यार्थविधानात् ॥ ६ ॥ (सि)

न लौकिकानां होमानां दर्व्या जुहोतीति गुणविधित्वमुपपद्यते। कुतः? लौकिकानां "अर्वाग्बिलया मूलदण्डया दर्व्या जुहोति" इति दर्वीरूपसाधनस्य आचारग्रहणत्वात् — शिष्टाचारमात्रेण परिगृहीतत्वात् नास्मादपि गुणविधिरित्यर्थः। न वैदिकानामपि गुणविधिरुपपद्यत इत्याह — शब्दवतां — स्रुवेण जुहोति" "चमसेन जुहोति" इति शब्दवतां श्रौतशब्दवताञ्च पात्राणां अन्यार्थविधानात् — वैदिकहोमार्थत्वेन विधानात् न तत्रापि दर्व्याख्यगुणविधिरिति ॥ ६ ॥

## दर्शनाच्चान्यपात्रस्य ॥ ७ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। "भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति" इति दर्विहोमे स्रुचः पात्रस्य दर्शनाच्च न तस्मिन् होमे वैदिकेऽपि गुणविधिरुपपद्यत-इत्यर्थः ॥ ७ ॥

## तथाग्निहविषोः ॥ ८ ॥

यद्युच्येत, उक्तप्रकारेण गुणविधित्वानुपपत्तावपि, दर्व्यामाधारे होमो दर्विहोमः। दर्व्या — दर्व्याख्यहविषा होमो दर्विहोमः इति गुणपरत्वं स्यादिति; तत्रोत्तरम् — तथाग्निहविषोरर्थेऽपि न दर्विविधानं, "यदाहवनीये जुहोति" "पुरोडाशेन जुहोति" इत्याधारहविषोर्विहितत्वादित्यर्थः ॥ ८ ॥

---

१ ... गुणाभिधानं स्यात् क. ख.

[1]उक्तश्च स्वार्थसंबन्धः ॥ ९ ॥

इतश्च न गुणविधिः, नाग्न्यर्थे दर्व्युपादानम्। कुतः? स्वार्थसंबन्धः—स्वेन—स्वीयेन प्रकाशनपचनरूपेणार्थेन संबन्धोऽग्नेरेव, न द्रव्यान्तरस्य इत्ययमर्थः उक्त एवास्माभिरिति ॥ ९ ॥

प्रयोजनन्त्वनुष्ठानरूपम् -- आन्तशलिकहोमचिन्तयोरनतिगहनमिति न विलिखितम् ॥ ४ ॥

( सोमप्रवृत्त्यधिकरणम्—५ )

तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥ १० ॥ (पू)

किमेते दर्विहोमाः कुतश्चित्कर्मविशेषाद् धर्मग्राहिणः? उतापूर्वाः? इति संदेहे सति :—

तत्र—तस्मिन्—दर्विहोमे सोमः प्रवर्तेत—सौमिकविध्यन्तः प्रवर्तेत, नान्यविध्यन्तः। कुतः? अव्यक्तत्वात्—अव्यक्तचोदनासामान्यादित्यर्थः ॥

न वा स्वाहाकारेण संयोगा[2]द्वषट्कारस्य निर्देशात्तत्र तेन विप्रतिषेधात् ॥ ११ ॥ (सि)

अव्यक्तत्वेन सौमिकविध्यन्तप्राप्तिरिति नैवोपपद्यते। कुतः? दर्विहोमानां स्वाहाकारेणान्ते संयोगात्। तत्र—सोमे च वषट्कारस्य निर्देशात्। तत्र सौमिकविध्यन्तप्राप्तौ, तेन—स्वाहाकारेण वषट्कारस्य विप्रतिषेधात्—विरोधात्, न सौमिकविध्यन्तप्राप्तिरुपपद्यते। तस्मादपूर्वा दर्विहोमा इति ॥ ११ ॥

[3]शब्दान्तरत्वाच्च ॥ १२ ॥

---

१ उक्तश्चार्थसंबन्धः क. ख.

२ ... द्वषट्कारस्य च निर्देशात्तन्त्रे तेन विप्रतिषेधात् क. ख.

३ शब्दान्तरत्वाम् क. ख.

चकारो हेत्वन्तरार्थः। यजतिचोदनातो जुहोतिचोदनायाश्शब्दान्तरत्वाच्च हेतोः, न सौमिकविध्यन्तप्राप्तिः। अयमभिप्रायः—अव्यक्तचोदनासामान्ये सत्यपि जुहोतिचोदनारूपविशेषलिङ्गात् न सौमिकविध्यन्तप्राप्तिः। अव्यक्तत्वे सति यजतिचोदना यत्र, तत्रैव सौमिकविध्यन्तप्राप्तिः नात्र। अतोऽपूर्वा दर्विहोमा इति ॥ १२ ॥

## लिङ्गदर्शनाच्च ॥ १३ ॥

इतश्च न सौमिकविध्यन्तप्राप्तिः। "घृतेन द्यावापृथिवी आपृणेथामित्यन्तरा कर्णे जुहोति, आमुखादन्ववस्रावयति, भूमिगते स्वाहाकारं करोति" इति होमलिङ्गस्वाहाकारस्य दर्शनाच्च न ततो विध्यन्तप्राप्तिरित्यर्थः। १३ ॥

## उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं [1]तत्र विप्रतिषिद्धा पुनः प्रवृत्तिः पशुवत् ॥ १४ ॥

यदुक्तं—औदुम्बरीहोमे "भूमिगते स्वाहाकारं करोती"ति, तल्लिङ्गपरिहारः। तुना पक्षो व्यावर्त्यते। "स्वाहाकारेण वै देवेभ्यो हविः प्रदीयते" इत्यनारभ्याधीतः स्वाहाकारः, प्रकृतिभूतदर्शपूर्णमाससोमार्थत्वेऽपि तत्र वषट्कारावरुद्धत्वात् उत्तरार्थः—तदितरक्रत्वर्थः। इतरार्थ—इति वा पाठः। तदा—तदितरक्रत्वर्थो भवेत्। तत्र दृष्टान्तः—यथा साप्तदश्यम् अनारभ्याधीतं प्रकृत्यर्थमपि, पाञ्चदश्यावरुद्धप्रकृतौ निवेशमलभमानं तदितरविकृत्यर्थं जातं, तद्वदिहापि स्वाहाकारः सोमं प्रविविक्षुः तत्रत्यवषट्कारेण बाधितस्सन् तदितरार्थः। तत्र पुनः प्रवृत्तिः—सोमधर्मस्य पुनः प्राप्तिः अविप्रतिषिद्धा—स्वाहाकारव्यतिरिक्त धर्म (प्रवृत्ति) स्सौमिकी दर्विहोमे अविप्रतिषिद्धा। तथा च स्वाहाकारलिङ्गदर्शनात् स्वाहाकारव्यतिरिक्तास्सौमिकधर्माः प्राप्नुयुः। कुतः? लिङ्गदर्शनात्—औदुम्बरीहोमगत ... ... ... ... ... ... कौ ... ... ... ... ... ... कारस्सौमिको व्यावर्त्यते। तत्र दृष्टान्तः—पशुवत्—यथा पशौ

---

१ .... तत्राविप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात्पशुवत् क. ख. पाठः उचितः। अत्रापि व्याख्या तथैव।

सामिधेनीसाम्रदश्यं वाचनिकं, प्राकृतदार्शपूर्णमासिको ... ... ... ... विप्रतिषिद्ध्यते, वाचनिकत्वात् तद्वदिहापीति । [1]पुनस्त्वर्थकश्शब्दः ॥ १४ ॥

## अनुत्तरार्थौ वार्थवत्त्वात् आनर्थक्याद्धि प्राकृतस्योपरोधस्यात् ॥ १५ ॥

वाकारः पक्षव्यावर्तकः । स्वाहाकारोऽनुत्तरार्थ एव – प्रकृत्यर्थ एव – प्राकृतनारिष्ठपार्वणहोमार्थ एव । कुतः ? अर्थवत्त्वात् – नारिष्ठादिनिवेशेनार्थवत्त्वात् । (प्राकृ)तस्य धर्मस्योपरोध(कारणं) स्यात् – विकृतावौपदेशिके सति आनर्थक्यात् स्यात् सौमिकवषट्कारस्य विकृतौ दर्विहोमेऽनुप्रवेशे उच्यमाने, स्वाहाकारावरुद्धत्वादानर्थक्यं स्यात् । दार्शपूर्णमासिक स्वाहाकारप्राप्तौ तु न किञ्चिदपि विप्रतिषिद्ध्यते । तदा सिद्धवदौदुम्बरीगतस्वाहाकारोऽपि लिङ्गं भवतीति ॥ १५ ॥

## [2]प्रकृतावपीति चेत् ॥ १६ ॥

इति चेत्पश्यसि प्रकृतौ नारिष्ठहोम (योः) पार्वणहोमयोश्च स्वाहाकारस्य निवेश इति, तर्हि प्रकृतावपि स्वाहाकारस्याननुप्रवेशः । वषट्करोतीति विधिगतेन पाठगत स्वाहाकारात् बलीयसा वषट्कारेणावरुद्धत्वेन स्वाहाकारस्याननुप्रवेशः प्रकृतावपि । तत इमे दर्विहोमाः सोमप्रकृतिका इति ॥ १६ ॥

## उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥

यदुक्तं वषट्कारेण विधिगतेन प्राकरणिकः स्वाहाकारो बाध्यत इति; तन्नोपपद्यते । उक्तं किल समवाये पारदौर्बल्यमर्थविप्रकर्षादिति । अत्र च वाक्यप्रकरणयोरसंनिपातः । तथा सति वषट्कारस्य प्राकरणिकत्वात् अत्र पदैकवाक्यत्वेन स्वाहाकारस्य वाक्यीयत्वात्, प्रकरणाच्च वाक्यस्य बलीयस्त्वात् स्वाहाकारस्यैव निवेश इत्यसोमप्रकृतिका दर्विहोमा इति ॥ १७ ॥

---

१ सूत्रे विद्यमानः "पुनः" इति शब्दः वाक्यालङ्कार इत्यर्थः ।

२ न प्रकृतावपीति चेत् क. ख. अत्रापि व्याख्या तथैव ।

## तच्चोदनावेष्टेः [1]प्रकृतित्वात्तद्विधिः स्यात् ॥ १८ ॥

वाकारः पक्षान्तरपरिग्रहे । तच्चोदना–तस्य दर्विहोमस्य चोदनेव–जुहोतिचोदनेव चोदना येषान्ते तच्चोदनाः नारिष्ठहोमादयः, त एव दर्विहोमानां प्रकृतिः, इष्टेः प्रकृतित्वाद्धेतोः तद्विधिस्स्यात् ... ... ... स्यात्–दार्शपूर्णमासिकनारिष्ठहोमादेः प्रवृत्तिस्स्यात्, न त्वनिर्णीतप्रकृतिका इत्यर्थः ॥१८॥

## शब्दसामर्थ्याच्च ॥ १९ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । दर्विहोमानां नारिष्ठहोमैस्सह जुहोतिशब्दसामर्थ्यात्–जुहोतिशब्दसामान्याच्च दार्शपूर्णमासिकनारिष्ठधर्मा एव प्राप्नुयुः ॥ १९ ॥

## लिङ्गदर्शनाच्च ॥ २० ॥

चकारो हेत्वन्तरार्थः । अग्निहोत्रप्रकरणे, "यदि कीटोऽवपद्येत अन्तःपरिधि निनयेत्" इति परिधिलिङ्गदर्शनात्, "अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति" इति वेदिदर्शनाच्च दार्शपूर्णमासिकनारिष्ठपार्वणहोमविध्यन्त एवाग्निहोत्रादिषु दर्विहोमेषु । अतो दार्शपूर्णमासिकनारिष्ठादिप्रकृतिका इतरे दर्विहोमा इति ॥ २० ॥

## तत्राभावस्य हेतुत्वाद् गुणार्थे स्याददर्शनम् ॥ २१ ॥

यदुक्तं नारिष्ठहोमप्रवृत्तिरूपगुणार्थे परिध्यादिलिङ्गदर्शनं, तत् लिङ्गदर्शनमदर्शनम्–असाधकं स्यात् इत्यर्थः । कथमसाधकत्वम्? तत्र–त्रैयम्बकहोमे दर्विहोमे "अप्रतिष्ठिता वै त्र्यम्बका इत्याहुः, नेध्मावर्हिस्सन्नह्येत, न प्रयाजा इज्यन्ते नानुयाजाः, न सामिधेनीरनुब्रूयात्" इत्यप्रति(ष्ठितत्वं प्र)तिज्ञाय, इध्मादीनामभाव एवाप्रतिष्ठितत्वहेतुत्वेन निर्दिश्यते । यदि नारिष्ठ-

---

१ प्रवृत्तित्वात्तद्विधिस्स्यात्–क.

,,, ,,, प्रवृत्तित्वाद्विधिस्स्यात्–ख.

होमधर्मप्राप्तिस्स्यात्, इध्मबर्हिरादिसंबन्ध एव स्यात्, न तद(भावः । अतो ना)रिष्टहोमानामप्रवृत्तिर्जुहोतिचोदनेषु कर्मस्वित्यर्थः ।' २१ ॥

## विधिरिति चेत् ॥ २२ ॥

इति चेत्पश्यसि इध्माबर्हिर्दा... नमसाधकम् । त्र्यम्बकेष्विध्माबर्हिरभावस्य हेतुत्वेन निर्देशादिति, तर्हि त्र्यम्बकहोमेषु इध्माबर्हिषोर्निषेधविधिरेवास्तु ... ... ... ... ... ... ... ... ... ... ... ... दार्थं सूत्रम् ॥ २२ ॥

## न वाक्यशेषत्वाद् [1]गुणार्थेऽर्थसमापनं नानार्थे नोपपद्यते ॥ २३ ॥

... ... ... ... पपद्यते (इध्माबर्हिर्निषेधि)रिति । कस्माद्धेतोः? वाक्यशेषत्वात्—आदित्यचरुविधिशेषत्वात् । इध्माद्यभावपरवाक्यस्य तद्वाक्यशेषत्वेन अविधिपरत्वादित्यर्थः । अर्थसमापनम्—इध्माद्यभावरूपार्थसमापनम् । इध्माद्यभावोप ... ... ... ... ... गुणार्थे—चरौ अदितिरूपगुणार्थे । ततोऽप्रतिष्ठितत्वपरिहारादिति । नानार्थे—नानाविधविधिनिषेधरूपेऽर्थे वर्ण्यमाने एकवाक्यता नोपपद्यते—विधिभेदे सति वाक्यभेदरूपदोषः स्यात् । अतो न निषेधविधिरित्यर्थः ॥ २३ ॥

## येषां वापरयोर्होमस्तेषां स्यादविरोधात् ॥ २४ ॥

वाकारः पक्षान्तरपरिग्रहे । नारिष्टहोमानां दर्विहोमेषु प्रवृत्तिरित्येतन्नोपपद्यते । अपरयोः—गार्हपत्यदक्षिणाग्न्योः, येषां होमः, तेषामेव पत्नीसंयाजानां प्रवृत्तिर्दर्विहोमेषु स्यात्, नान्येषाम् । कुतो हेतोः? अविरोधात्—तत्प्रकृतिकत्वे नारिष्टहोमानामिध्माबर्हिरभावात् त्रैयम्बकादाविध्माबर्हिराद्यभावदर्शनादविरोधादित्यर्थः ॥ २४ ॥

---

१ ... ... गुणार्थे च समाधानं नानात्वेनोपपद्यते—क. ख.

तत्रौषधानि चोद्यन्ते तानि स्थानेन गम्येरन् ॥ २५ ॥

नैतदुपपद्यते, पत्नीसंयाजानां "सह पत्न्या जुहोति" इत्याम्नातानां दर्विहोमेषु प्रवृत्तिरिति। तत्र त्र्यम्बकादिषु होमेषु, पुरोडाशादीन्यौषधानि चोद्यन्ते। यदि पत्नीसंयाजधर्मस्स्यात, ततः स्थानेन—स्थानापत्तिप्रमाणेन आज्यधर्मा एव पुरोडाशादिष्वौषधेषु गम्येरन्, आज्यधर्मप्राप्तिश्चौषधेषु नेष्टा। अतो (न) पत्नीसंयाजप्रकृतिका इत्यर्थः ॥ २५ ॥

लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥

वाकारः पक्षान्तरपरिग्र(हार्थः)। शेषहोमयोः—फलीकरणहोमयोरेवौषधद्रव्यकयोः प्रवृत्तिस्स्यात्, न पत्नीसंयाजानाम्। कुतो हेतोः? लिङ्गात् (औषध) द्रव्यसामान्यलिङ्गात्। अतः प्रागुक्ताज्यधर्मप्राप्ति ... ... ... ... *निर्वापाननादिदोषो न प्र ... ... त इत्यर्थः ॥ २६ ॥

प्रतिपत्ती तु ते भवतस्तस्मादतद्विकारत्वम् ॥ २७ ॥

नैतदुपपद्यते शेषहोमधर्मप्रवृत्तिरिति। ते—पिष्टलेपफलीकरणहोमकर्मणी, प्रतिपत्ती—प्रतिपत्तिकर्मणी कृते भवतः। तस्मात्—प्रतिपत्तिकर्मत्वात् अप्रयोजकत्वेन अनौषधधर्मप्रयोजकत्वात् न तद्विध्यन्तेऽपि त्र्यंबकहोमादौ, औषधधर्मा निर्वापादयः प्राप्नुयुः। अतः अकृतश्चिद्धर्मग्राहित्वेनापूर्वा एव दर्विहोमा इति ॥ २७ ॥

संनिपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानात् अर्थस्यापरिणेयत्वाद्वचनादतिदेशस्स्यात् ॥ २८ ॥

विरोधिनाम्—इतरेतरविरुद्धानां ऐष्टिकानां सौमिकानाञ्च संनिपाते सति, दर्विहोमेषु तद्धर्माणां अप्रवृत्तिरेव गम्येत—अननुष्ठानमेव भवेत्। कुतः? विध्युत्पत्तिव्यवस्थानात्—विधीनां—अङ्गविधीनां, उत्पत्तेः प्रतिकरणं दर्शादिषु सोमेषु च व्यवस्थानात्—व्यवस्थितत्वात्, अर्थस्य—दार्श-

---

* निर्वापावहननादि इति स्यात्।

पूर्णमासिकसौमिकाङ्गजातरूपस्यार्थस्य, अपरिणेयत्वात्—कर्मान्तरे (च) नेयत्वात्, व्यवस्थितत्वेनान्यत्राप्राप्तिरित्यर्थः। अन्यत्र धर्मप्राप्तौ वक्तव्यायां, राष्ट्रभृदादीनां विवाहादिष्विव वचनादतिदेशः स्यात्। असति च वचने, अपूर्वाः अकुतश्चिद्धर्मग्राहिण[1] एतादृशाश्चोदनास्स्युः। परिधिवेद्यादिलिङ्गन्तु, परिधिदेशवेदिदेशोपलक्षणार्थत्वेन नेयमिति परिहृतम्॥ २८॥

प्रयोजनन्त्वनुष्ठानरूपम्—कोटिभ्यां प्रद्योतितम्॥ ५॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां अष्टमस्याध्यायस्य चतुर्थः पादः।

समाप्तश्चाध्यायः।

श्रीहयग्रीवाय नमः। स्वप्नवाराह्यै नमः। अद्वैताश्रमिभ्योऽस्मद्गुरुभ्यो नमः।

ओम्।

---

१ ग्राहिण्यः इति साधु।

## नवमाध्याये प्रथमः पादः

---

(यज्ञकर्माधिकरणम् -१)

**यज्ञकर्मप्रधानं ताद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥ (सि)**

विशेषतोऽतिदेशलक्षणेऽष्टमेनुवर्णिते
... मन्त्रसामसंस्कृतिप्रभेदमूहचिन्तनम् ।
वितन्यते तथान्यदेत ... ... हरन्ति सङ्गतं
... तत्र चादितो भवेच्च मन्त्रसामचिन्तनम् ॥

अग्निहोत्रं दर्शपूर्णमासौ ज्योतिष्टोमश्च इहोदाहरणम् ॥

किं अग्निहोत्रादिधर्माः अग्निहोत्रादियजिप्रयुक्ताः? उत अपूर्वप्रयुक्ताः? इति सन्देहे—

यजिप्रयुक्तत्वे तूहासिद्धिः धर्मसाङ्कर्यात्। अपूर्वप्रयुक्तत्वे तु प्रतिप्रकरणं अपूर्वपृथक्त्वात् व्यवस्थितत्वं इति कृत्वा ऊहाध्यायारम्भ उपपद्यते ॥

सप्तमे प्रतिपदधिकरणसाधितस्य अपूर्वप्रयुक्तत्वस्य पुनस्साधनं विशेष साधनार्थमिति न पुनरुक्तिः । भाष्यवार्तिकयोश्च नानासंदेहाः प्रदर्शिता अपि विस्तरभयान्नेह लिख्यन्ते ॥

तत्र यज्ञकर्म – यजतिकर्म-यजतेः कर्मभूतं साध्यभूतं अपूर्वमित्यर्थः। तदेव प्रधानं – न यजिः। हिर्हेतौ। तत् – तदेव – अपूर्वमेव चोदनाभूतं – कर्तव्यचोदनाविषयभूतम् । अतः कर्तव्यत्वेन तस्यैव प्राधान्यम्। अतः तस्य द्रव्येषु व्रीह्यादिषु यजतौ च यः संस्कारः – संबन्ध इत्यर्थः । स संबन्धः तत्प्रयुक्तः। कुतो हेतोः? द्रव्यादीनां तदर्थत्वात् – फलवदपूर्वार्थत्वात्। अतः फलवदपूर्वप्रयुक्तत्वेन द्रव्यादीनां, नाफलयजिप्रयुक्तत्वम्। अतोऽपूर्वान्तरे तत्कार्यापन्ने अतिदेशसिद्धेरूहस्सिद्ध्यतीति ॥ १ ॥

प्रयोजनन्त्वनुष्ठानरूपं—सप्तमप्रतिपदधिकरणे अनुवर्णितमेवानुसंधेयम् ॥१॥

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कार-स्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥ (सि)**

एतेष्वेवोदाहरणेषु संदिह्यते— किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ताः? उत अपूर्वमेव प्रयोजकं निमित्तश्च? इति ॥

तत्र यज्ञकर्म प्रधानं—अपूर्वमेव साङ्गानुष्ठाने निमित्तं प्रयोजकश्च। नतु यजिर्निमित्तमनुष्ठाने, अपूर्वं प्रयोजकमिति। तद्धि—अपूर्वमेव हि फलवत्त्वेन चोदनाभूतं—कर्तव्यचोदनाविषयीभूतम्। तस्य—अपूर्वस्य, द्रव्येषु—पुरोडाशादिषु यजतौ च, यः संस्कारः—संबन्धः, सः तत्प्रयुक्तः—निमित्तप्रयोजकापूर्वप्रयुक्तः, नतु यजिनिमित्तकत्वेन अपूर्वप्रयुक्तत्वम्। तदर्थत्वात्—द्रव्यादीनां फलवदपूर्वार्थत्वादिति। इतरत्प्रागुक्तमेवानुसंधेयम् ॥ २ ॥

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कार-स्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥ (सि)**

एवं वा:—

दर्शादिष्वेव[1] ॥ ३ ॥

(संस्कारे युज्यमानाधिकरणम्—४)

**संस्कारे युज्यमानानां तादर्थ्यात्त[2]त्प्रयुक्तता स्यात् ॥ २ ॥ (पू)**

दर्शपूर्णमासयोः श्रूयते — "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति" "प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि" इति ॥

---

१ अत्र तालपत्रे वामभागे किञ्चिल्लिखितं दृश्यते। तस्य छिन्नत्वात् उद्धारोऽशक्यः। इदं वर्णकान्तरं संक्षेपेण तत्र लिखितं स्यात्।

२ .... तत्प्रयुक्तं स्यात्—क. ख.

तत्र संदिह्यते – किं प्रोक्षणं हन्तिपिषिप्रयुक्तं? उत अपूर्वप्रयुक्तं? इति ॥

तत्र संस्कारे – हन्तिपिष्याख्ये, युज्यमानानां – संबध्यमानानां प्रोक्षणादीनां, तत्प्रयुक्तता – हन्तिपिष्यादिप्रयुक्तता, न त्वपूर्वीयसाधनत्व-प्रयुक्तता स्यात्, किन्तु हन्तिपिषिप्रभृतिप्रयुक्ततैव स्यात्। कुतो हेतोः? तादर्थ्यात् – हन्तिपिष्यर्थं प्रोक्षणादीनामनुष्ठेयत्वेन तादर्थ्यात् तत्प्रयुक्तं प्रोक्षणादि। यदर्थञ्च यदनुष्ठीयते तत्तदर्थम्। अतो हन्तिपिषिप्रयुक्तता प्रोक्षणादीनाम् ॥ २ ॥

[1]तेन त्वर्थेन यज्ञसंयोगात् धर्मसंबन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥ (सि)

तुना प्रागुक्तपक्षो व्यावर्त्यते। नैतदुपपद्यते – हन्तिपिषिप्रयुक्तं प्रोक्षणमिति। तेनार्थेन - हन्तिरूपेण पिषिरूपेण च यज्ञसंयोगात् – यज्ञस्य – यज्ञसाध्यापूर्वस्य, संयोगात्, धर्मसंबन्धः – प्रोक्षणरूपधर्मसंबन्धः अपूर्वस्यैव, नतु हन्तिपिष्योर्विवक्षितस्वरूपयोः। तस्मात् – फलवदपूर्वसंबन्धाद्धेतोः, यज्ञ-प्रयुक्तं – परमापूर्वप्रयुक्तमेव प्रोक्षणादि। कुतः? संस्कारस्य – प्रोक्षणस्य तदर्थत्वात् – परमापूर्वसाधनरूपद्रव्यार्थत्वात्।

अतो व्रीहित्वाकारस्याविवक्षितत्वात्, कर्मान्तरे नैर्ऋते चरौ "कृष्णानां व्रीहीणां नखनिर्भिन्नं" इति श्रुते नखेषु प्रोक्षणं स्यात्सिद्धान्ते, पूर्वपक्षे तु न इति प्रयोजनमनुवर्णितम् ॥ ३ ॥

एवं वा :–

संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तता स्यात् ॥ २ ॥ (पू)

ज्योतिष्टोमे श्रूयते – "यावत्या वाचा कामयते तावत्या दीक्षणीयाया-मनुब्रूयात्, मन्द्रं प्रायणीयायां, मन्द्रतरमातिथ्यायां, उपांशूपसत्सु" इति ॥

---

१ तेन त्वर्थेन यज्ञस्य संयोगात् – क. ख.

तत्र संदिह्यते – किं परमापूर्वप्रयुक्त एष धर्मः? उत दीक्षणीयाद्यपूर्वप्रयुक्तः? इति ॥

तत्र संस्कारे–(परमापूर्व) संस्काररूपे दीक्षणीयाद्यपूर्वे, युज्यमानानां ईदृशानां धर्माणां, तादर्थ्यात्–ज्योतिष्टौमिकपरमापूर्वार्थत्वात्, तत्फलेन फलवत्त्वाच्च, तत्प्रयुक्तता–परमापूर्वप्रयुक्तता मन्द्रादीनां स्वरविशेषाणाम्। अतोऽश्वमेधे "त्रैधातवीया दीक्षणीया भवति" इत्युक्तत्वात्, तत्रापि वर्णितप्रकारेण स्वरविशेषः स्यात् ॥ २ ॥

## तेन त्वर्थेन यज्ञसंयोगाद्धर्मसंबन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥ (सि)

तुना पक्षो व्यावर्त्यते। तेन–दीक्षणीयादिरूपेणार्थेन, यज्ञसंयोगात् ज्योतिष्टोमिकपरमापूर्वसंबन्धात्, परमापूर्वोपकारकदीक्षणीयाद्यपूर्वेणैव ईदृश धर्मसंबन्धो भवेत्; न परमापूर्वेण। तस्मात् यज्ञप्रयुक्तं–अङ्गयज्ञदीक्षणीयादिप्रयुक्तम्। कुतो हेतोः? संस्कारस्य – दीक्षणीयाद्यपूर्वसंस्कारमन्द्रादिस्वरविशेषस्य, तदर्थत्वात्–दीक्षणीयाशब्दलक्षितदीक्षणीयापूर्वार्थत्वात्। अतो न लक्षितदीक्षणीयापूर्वलक्षितपरमापूर्वार्थता मन्द्रादीनाम्। अतोऽश्वमेधे [1]प्रायणीयास्थानीयत्रैधातवीयायां न मन्द्रादिस्वरविशेषप्राप्तिरिति प्रयोजनं पक्षयोरनुवर्णितमेव ॥

(फलदेवताधिकरणम्–१)

## फलदेवतयोश्च ॥ ४ ॥ (पू)

दर्शपूर्णमासयोः श्रूयते–"अगन्म सुवस्सुवरगन्म .... संज्योतिषाऽभूवं" इति स्वर्गाख्यं फलं, "अग्नेरहमुज्जितिमनूज्जेषं ..." इत्यग्न्याद्या देवताः ॥

तयोस्संदिह्यते – किं स्वर्ग[2]संबन्धस्य कर्मणः स्वर्ग एव प्रयोजकः, अग्न्यादि[3]संबन्धस्याग्न्यादय एव? उत उभयत्र फले देवतायाश्चापूर्वमेव प्रयोजकं? इति ॥

---

१ दीक्षणीया – इति साधु। २–३ संबद्धस्य इति साधु।

फलदेवतयोश्च केवलयोरकर्मान्वितयोरेव तयोस्तत्तन्मन्त्रप्रयोजकत्वम्। न तु दार्शपूर्णमासिकस्वर्ग ... ... प्रयुक्तत्वं अग(न्मेत्यादेः), अपूर्वीयदेवता-प्रयुक्तत्वं अग्नेरहमित्यादेः। अतः अकर्मसमवेतदेवताप्रकाशकत्वेन मन्त्रस्या-दृष्टार्थत्वात् तदाकारेणैव विकृतावपि चोदकप्राप्तेर्नास्त्यूहः इति ॥ ४ ॥

[1]चोदनातो हि तादुगुण्यम् ॥ ५ ॥ (सि)

हिः एवकारार्थः पक्षान्तरव्यावृत्तिद्योतकः। चोदनातः – फलवदपूर्व- ... ... कर्तव्यत्वेन चोदनात् फलदेवतयोश्च – फलदेवताप्रकाशकमन्त्रयोश्च, तादुगुण्यं–फलवदपूर्वगुण ... ... ... ... वदपूर्वेतिकर्तव्यतात्वम्। न चाफलयोः फलदेवतयोः फलवदपूर्ववत् मन्त्रप्रयोजकत्वम्। अतः दार्शपूर्णमासिकस्य स्वर्गाख्यफलस्य च दर्शपूर्णमासापूर्वीयदेवतायाश्च मन्त्रद्वयप्रकाश्यत्वेन अपूर्वा-न्तरेऽपि तयोः प्राप्तौ, विकृतौ तादृशापूर्वीयदेवतायाः, स्वर्गाख्यफलस्य चाभावात् सौर्यादौ, "अगन्म ब्रह्मवर्चसं" "सूर्यस्याहमुज्जितिमनूज्जेषम्" इति विकारेणैव प्रयोगः स्यात् ॥ ५ ॥

प्रयोजनन्तु पक्षयोरनुवर्णितमेव, अतो न विलिख्यते ॥ ५ ॥

(देवताधिकरणम्–६)

देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥ (पू)

यदुक्तं प्राक्तनाधिकरणे "अप्रयोजिका देवता" इति, तन्नोपपद्यते। किन्तु, देवता – अग्न्यादिदेवता, फलं प्रयोजयेत्, देवतैव फलं दद्यात् न कर्म। कुतः? भोजनस्य – पुरोडाशादि भोज्यद्रव्यभोजनस्य – भक्षणस्य, तदर्थत्वात्–देवतार्थत्वात्। पुरोडाशादिद्रव्यस्य कर्मणश्च तादर्थ्ये सति देवताया एव प्राधान्यात् सैव फलदात्री, न कर्म। तत्र दृष्टान्तः – अतिथिवत् इति। यथा अतिथये क्रियमाणं सर्वं परिचरणादि अतिथ्यर्थमेव सत् तत्प्रीतिहेतुः, एवं द्रव्यादीनामपि देवतार्थत्वात् तत्परिचरणप्रीता देवतैव फलं प्रयच्छतीति ॥

---

१ न चोदनातो हि ताद्गुण्यम् क. ख.

## [1]स्मृतेरुपचारादन्यार्थदर्शनाच्च ॥ ७ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । फलदानसमर्थचेतनधर्मविग्रहवत्येव देवता, न निरवयवा । कुतो हेतोः? स्मृतेः – विग्रहवती देवतेति स्मरणात् । उपचाराच्च – "यमो दण्डहस्तः," "वरुणः पाशहस्तः," इति चित्र लेखनात् कथनाच्च ।

"[2]जगृभ्माते दक्षिणमिन्द्रहस्तं" इति च,

"[3]इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन् काशिरित्ते" इति च,

"[4]तुविग्रीवो वपोदरस्सुबाहुरंधसो मदे । इन्द्रो वृत्राणि जिघ्नते ।"

इति च मन्त्रेषु, अन्यार्थानां – विग्रहित्वद्योतकानां दक्षिण हस्तशब्द मुष्टय-परपर्यायकाशिशब्द ग्रीवादीनाञ्च अन्यार्थानां दर्शनाच्च हेतोः विग्रहवती देवता, न निरवयवा, सैव फलदात्रीति ॥

## स्मृतेरुपचारादन्यार्थदर्शनात् ॥ ७ ॥

इदमेव सूत्रं देवतायाः भोक्तृत्वप्रतिपादनपरम् । स्मृतेः – "भुङ्क्ते देवता" इति स्मरणात् । उपचारात् – देवतायै प रिचारो)पहारोपचरणाच्च । अन्यार्थ-दर्शनात् –

"[5]अद्धीन्द्र पिब च प्रस्थितस्य" इति च,

"[6]विश्वासनानि जठरेषु धत्ते" इति च,

---

१ शाबरभाष्यवाक्यमिदं, अस्यां मातृकायां सूत्रवल्लिखितम् ।

२ ऋग्वेद संहिता – ८–१–३

३ ,, ,, – ३–२–१

४ ,, ,, – ६–१–३

५ ,, ,, – ८–४–२१

६ ,, ,, – १–५–२

"[1]एकया प्रतिधापिबत् साकं सरांसि त्रिशतं" इति च,

भोक्तृत्वरूपान्यार्थद्योतकानां लिङ्गानां दर्शनाच्च, देवता भोक्त्री, सैव च फलदात्रीति। सा इन्द्रादिदेवता अन्नरसमात्रं स्वीकरोति, न हविः। अतो न हविःप्रक्षयरूपानिष्टापादनं प्रभवति ॥ ७ ॥

[2]आर्थपत्याच्च ॥ ८ ॥

चकारो विग्रहित्वद्योतकहेत्वन्तरार्थः। देवतायाः आर्थपत्यात्–अर्थपतित्वात्–अर्थस्वामित्वाच्च हेतोः ईशाना देवतेति गम्यते। तदेवोपपादयति–

स्मृतेरुपचारादन्यार्थदर्शनाच्च ॥

"सर्वेषामर्थानामीष्टे देवता" इति स्मरणम्। देवग्रामः–देवक्षेत्रं–इत्युपचारात्,

"[3]इन्द्रो दिव इन्द्र ईशे पृथिव्याः इन्द्रो अपामिन्द्र इत्पर्वतानाम्"

इत्यार्थपत्यान्यार्थदर्शनाच्च सर्वार्थानामीष्टे देवता। अतस्सर्वेशित्वात् फलदात्री सैव, न कर्म ॥

स्मृतेरुपचारादन्यार्थदर्शनाच्च ॥

देवतैव फलोन्मुखा प्रसीदति च, न कर्म। कुतो हेतोः? "परिचर्यया प्रसीदति देवता" इति स्मरणात्, "प्रसन्नोऽस्य पशुपतिः, अत एवास्य पुत्रो जातः" इत्युपचारात्, "तस्मै प्रीता इषमूर्जं प्रयच्छति" इति प्रसादरूपान्यार्थदर्शनाच्च, देवतैव प्रसीदति–फलं ददाति च, न तु कर्मणोऽचेतनस्य प्रसादेन संबन्धः, यस्मात्फलं तद्द्यादिति ॥ ८ ॥

---

१ ऋग्वेदसंहिता – ६–५–२९

२ अर्थापत्याच. ख.

३ ऋग्वेदसंहिता – ८–३–१६.

ततश्च तेन संबन्धः ॥ ९ ॥

चकारः फलदातृत्वद्योतनार्थः। यतः कारणात् परिचर्याराधिता देवता फलं प्रयच्छति, ततः कारणात् देवताया एव — देवतात एव — देवतासकाशादेव परिचरितुर्जनस्य, तेन — फलेन संबन्धः भवति, न कर्मणः। तदेवोपपादयति —

स्मृतेरुपचारादन्यार्थदर्शनाच्च ॥

यष्टुर्यजमानस्य देवतैव फलं ददातीति स्मरणात्, "पशुपतिरनेनोपचरितः, पुत्रोऽनेन लब्धः" इत्युपचारात्,

"[1]सइज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः।
देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥"

इति च,

[2]तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इति च,

अन्यार्थदर्शनात् हेतोः देवतैव फलदात्री, विग्रहहविस्स्वीकारतद्भोजनतृप्तिप्रसादादीनां चेतनधर्मत्वात्, कर्मणश्चाचेतनत्वात् चेतना देवतैव कर्मफलदात्री, न कर्म। देवतायाः प्रयोजकत्वे सति, अग्न्यादिकानां देवतानां ये ये धर्मा नियताः, ते धर्मा विभक्तस्वरूपदेवताधर्मत्वेन हेतुना सौर्यादावतिदेशतो न सङ्क्रामन्ति। कुत ऊहचिन्तापीत्यर्थः ॥ ९ ॥

अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गु[3]णत्वेन देवताश्रुतिः ॥ १० ॥ (सि)

अपि वेति देवतायाः प्रयोजकत्वं व्यावर्त्यते। यज्ञकर्म — यजति-

---

१ तैत्तिरीयसंहिता — २-३-१४.

२ तैत्तिरीयसंहिता — २-५-४.

३ ... ... द्गुणत्वे देवताश्रुतिः — क. ख.

साध्यमपूर्वमेव, प्रधानं स्यात्—न देवता। कुतः? शब्दपूर्वत्वात्—धात्वर्थभाव्ययोस्समभिव्याहारस्य, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, इत्येवमादिषु यज्यर्थभाव्यसंबन्धस्य च शब्दत्वात्, यजेर्भाव्येन संबन्धश्शाब्दः। तस्यैव फलत्वेन कर्मसंबन्धो न देवतायाः। कर्मरूपोपपादकत्वेन देवताश्रुतिः—देवताश्रवणं, गुणत्वेन—कर्मगुणत्वेन, नतु स्वतः प्राधान्येन। अतो भाव्यमेव प्रयोजकं फलस्य न देवता प्रयोजिका॥ १०॥

[1]स्मृतेर्मन्त्रार्थवादमूलत्वात्॥ ११॥

विग्रहवत्त्वादिद्योतकत्वेन बहुधा व्याख्यातस्य "स्मृतेरुपचारादन्यार्थदर्शनाच्च" इत्यस्य सूत्रस्य उत्तरत्वेन नेयम्। या विग्रहादिमत्त्वप्रतिपादिका स्मृतिरुपन्यस्ता, तस्याः स्मृतेः मन्त्रार्थवादमूलत्वात्—अविधिगतत्वात् न स्वार्थे प्रामाण्यमस्ति। प्रागुदाहृतानाञ्च श्रुतीनां अन्यादृशोऽर्थः स्तुतिरूपोऽन्यविध्येकवाक्यत्वरूपोऽर्थश्च वर्णयितव्यः। न तु तासां विग्रहादिमत्त्वप्रतिपादनपरतेति॥ ११॥

[2]अतिथौ तत्प्रयुक्तं प्रधानत्वादभावः कर्मणि स्यात् तस्य प्रीतिविधानत्वात्॥ १२॥

यदुक्तं (अतिथि)वदेव देवतातः फलमिति, तत्रोत्तरम्—अतिथौ प्रयोजकत्वमुपपद्यते। कुतो हेतोः? तत्प्रधानत्वात्—अतिथिशुश्रूषारूप(स्य कर्मणः) अतिथिप्रधानत्वात्—अतिथ्युपसर्जनत्वात्। अथवा—अतिथौ—प्राधान्यं पूज्यत्वेन वर्तते—इति तद्वारिकस्याकर्म तत्प्रयुक्तं—अतिथिप्रयुक्तं—स्यात्। कुतो हेतोः? तस्य प्रीतिविधानत्वात्—तस्य अतिथ्यर्थस्य कर्मणः अतिथिप्रीतिविधानार्थत्वात् तत्प्रयुक्तत्वम्। इह तु कर्मण्यचेतने प्रीतिविधानस्य अभाव एव स्यात्। ततोऽतिथ्युदाहरणं न संघटते। तत्प्रधानत्वादिति

---

१ इदमपि भाष्यवाक्यमेव, न सूत्रं ग्रन्थान्तरेषु।

२ अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात्—क. ख.

पाठो नात्यन्तरमणीयः। तस्मिन्पाठे उत्तरावयवनिर्देशस्सम्यङ्नान्वेति। अतस्त-त्प्रयुक्तमित्येव पाठः ॥ १२ ॥

प्रयोजनन्त्वनुष्ठानरूपं – ऊहासिद्धिसिद्धिभ्यां प्रद्योतितम् ॥ ७ ॥

(द्रव्यसंख्याधिकरणम् –७)

द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ १३ ॥ (५)

दर्शपूर्णमासयोः श्रूयते – 'व्रीहीन्प्रोक्षति' इति। तथा 'त्रीन्परिधीन् तिस्रस्समिधः' इति मन्त्रः। 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्या'मिति। तथा चातुर्मास्यानां द्वितीये पर्वणि वरुणप्रघासेष्वाम्नायते – 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इति ॥

तत्र संदिह्यते – किं द्रव्यादिप्रयुक्ताः प्रोक्षणादयो धर्माः? उत अपूर्व-प्रयुक्ताः? इति ॥

तत्र द्रव्यं – व्रीह्यादि, संख्या – त्रीन् परिधीन् तिस्रः इति, तेन ह्यन्नं क्रियते – इति हेतुः, चतुर्होत्रा पौर्णमासीमित्यादि समुदायश्च – इत्येकवद्भावः, तत् द्रव्यसंख्याहेतुसमुदायं विवक्षितस्वरूपं सत्, प्रोक्षणस्य च, त्रीन्परिधी-नित्यस्य च, अन्नकरणस्य च, चतुर्होत्रभिमर्शनस्य च प्रयोजकम्। कुतो हेतोः? श्रुतिसंयोगात् – व्रीहीन् इत्यादौ द्वितीयाश्रुत्या अभिहितानां द्रव्यादीनां प्रोक्षणादिभिस्संस्कारैस्संयोगात्। अतो विवक्षितरूपत्वेन अवान्तरा-पूर्वप्रयुक्तत्वेन परमापूर्वप्रयुक्तत्वाभावात्, यत्र विकृतिविशेषे द्रव्यान्तरं विहितं तत्र प्रोक्षणं न स्यात्। यत्रापि महापितृयज्ञादौ परिधिद्वयं, तत्राप्यविकृत एव त्रीन्परिधीनीति मन्त्रः प्रयोक्तव्यः। अभिमर्शनस्य समुदायप्रयुक्तत्वे विकृतिषु समुदायाभावात् अभिमर्शनमेव न सिद्ध्येत्। वैकृतवारुणप्रघासिकहेतूदाहरणस्य तु प्रयोजनमन्वेषणीयम्। [1] एवकारो निर्धारणे। अपूर्वप्रयुक्त(त्वे) लक्षणा स्यात्। अतस्तत्परिहारेण विवक्षितस्वस्वरूपव्रीह्यादिप्रयुक्ताः प्रोक्षणादयो धर्मा इति ॥१३॥

---

१ वाकारः इति साधु, तस्यैव सौत्रत्वात्।

अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १४ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। एवंजातीयके संस्कारे अर्थकारिते—अपूर्वप्रयुक्ते वर्ण्यमाने, "पयसा मैत्रावरुणं श्रीणाति" "सक्तुभिर्मंथिनं" इत्यादौ द्रव्येण—मैत्रावरुणादिद्रव्येण पयआदिश्रयणरूपधर्मव्यवस्था न स्यात्। अयमर्थः—अपूर्वप्रयुक्तत्वे सत्यविवक्षितस्वरूपत्वेन धर्मव्यवस्थाभावात् धर्माः पारिप्लवास्स्युः। अतो विवक्षितस्वरूपाणां व्रीह्याद्यवान्तरापूर्वप्रयुक्तत्वमेव प्रोक्षणादीनामिति ॥ १४ ॥

अर्थो वा स्यात्प्रयोजनमितरेषा[1]मचोदनार्थस्य गुणभूतत्वात् ॥ १५ ॥ (सि)

वाशब्दः प्रागुक्तपक्षव्यावर्तकः। अर्थः—अपूर्वमेव प्रोक्षणादीनां धर्माणां प्रयोजनं—प्रयोजकं, न द्रव्यादीनि प्रयोजकानि। कुतो हेतोः? अपूर्वस्य कर्तव्यतया चोदितत्वात्, तस्यैवेतिकर्तव्यतया संबन्धात्। इतरेषां—द्रव्यादीनां सिद्धत्वेन अचोदना—इतिकर्तव्यताक ... ... त्वेन अविधानमित्यर्थः। द्रव्यादीनां अर्थस्य— अर्थं प्रतीत्यर्थः। गुणभूतत्वात्—सिद्धं साध्यायोपदिश्यत इति तदर्थत्वात्—अपूर्वार्थत्वात्। अतो न द्रव्यादिप्रयुक्ताः प्रोक्षणादयः, किन्त्वपूर्वप्रयुक्ता एवेति ॥ १५ ॥

[2]अपूर्वत्वाद्वा व्यवस्था स्यात् ॥ १६ ॥

यदुक्तं, अपूर्वप्रयुक्ते त्वेवंजातीयके, द्रव्येण धर्मव्यवस्था न स्यादिति—तत्रोत्तरम्—व्यवस्था स्यात् कर्मणाम्। कुतः? अपूर्वत्वात्—अपूर्वसाधनविशेषकारितत्वात् अपूर्वसाधनविशेषरूपस्य सर्वत्वाभावात् न पारिप्लवा धर्मा भवन्तीत्यर्थः ॥ १६ ॥

---

१ .... .... मचोदनात्तस्य च गुणभूतत्वात्—क. ख.

२ अपूर्वत्वाद्व्यवस्था स्यात्—क. ख.

## [1]तत्प्रयुक्ते च धर्मस्य सर्वविषयत्वम् ॥ १७ ॥

पुनरपि पूर्वपक्षिशङ्का । चाकारः पक्षव्यावृत्त्यर्थः । एवंजातीयके द्रव्यादौ तत्प्रयुक्ते—तदपूर्वसाधनविशेषप्रयुक्ते वर्ण्यमाने, व्रीहिरूपसाधन-विशेषस्य लोकवेदसाधारणत्वेन धर्मस्य प्रोक्षणादिधर्मस्य सर्वविषयत्वम्—(लौकिकवैदिकसाधारणव्रीह्यादिद्रव्य)विषयत्वम् । अतो नापूर्वसाधनविशेष-प्रयुक्ततेति ॥ १७ ॥

## तद्युक्तस्येति चेत् ॥ १८ ॥

इति चेत् ... ... ... ... ... ... ... ... स्यादिति । तन्नित्य तद्युक्तस्य—प्रकरणयुक्तस्य व्रीहिद्रव्यस्यैव प्रोक्षणादिधर्मस्स्यात्, न सर्वेषाम् । अतः प्रकरणगृहीतानामेव व्रीह्यादीनां प्रोक्षणमिति न (तत्रदुक्तातिप्रसङ्ग इत्यर्थः) ॥ १८ ॥

## [1]नाश्रुतत्वात् ॥ १९ ॥

नैतदुपपद्यते—प्रकरणयुक्ता एव व्रीहयः प्रोक्षितव्या इति । कुतः? अश्रुतत्वात्—प्रकरणयुक्ता निर्वप्तव्याः प्रोक्षितव्याश्च इत्येवंरूपायाः श्रुते-रश्रवणात् । अतो न प्रकरणं विशिष्य विनियोजकमिति ॥ १९ ॥

## अधिकारादिति चेत् ॥ २० ॥

इति चेत् पश्यसि अश्रुतत्वादिति, तन्न । कुतः? अधिकारात्—वैदिककर्माधिकारादेवाध्वर्युः वैदिकानेव व्रीहीन् निर्वप्तव्यान् प्रोक्षणीयांश्च जानाति अतो न सर्वव्रीहिविषयत्वं प्रोक्षणादीनामिति ॥ २० ॥

---

१ तत्प्रयुक्त्वे च ... ... ... विषयत्वम्—क. ख.

१ नाश्रुतित्वात् क ख.

[1]तुल्येषु नाधिकारस्स्यादचोदितश्च संबन्धोऽपृथक्सतां यज्ञार्थेन संबन्धस्तस्माद्यज्ञः प्रयोजनम् ॥ २१ ॥

तुल्येषु—लोकवेदसाधारणेषु, अधिकारः—अर्थस्याधिकारो न नियामकस्स्यात्—प्राकरणिका एव निर्वप्तव्याः प्रोक्षितव्याश्चेति प्राकरणिकानां संबन्धश्च अचोदितः। किन्तु अपृथक्सतां—अपृथग्भूतानां व्रीहीणां यज्ञार्थेन निर्वापेण संबन्धः, नतु पृथक्सताम्। तस्मात् यज्ञः—अपूर्वमेव प्रयोजकं प्रोक्षणादीनां, नतु व्रीह्यादयः ॥ २१ ॥

प्रयोजनन्त्वनुष्ठानरूपम् ॥ ७ ॥

(देशबद्धाधिकरणम्—८)

देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २२ ॥ (सि)

ज्योतिष्टोमे समाम्नायते—'त्सरा वा एषा यज्ञस्य, तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु प्रचरन्ति" इति ॥

तत्र संदिह्यते—किं प्रागग्नीषोमीयाद्यानि कर्माणि तत्प्रयुक्तमुपांशुत्वम्? उत परमापूर्वप्रयुक्तम्? इति ॥

तत्र प्राप्ते देशबद्धमुपांशुत्वं तेषां—अग्नीषोमीयात्प्राग्भवानां पदार्थानां दृष्टादृष्टार्थानां धर्मः स्यात्—प्राग्भवपदार्थावान्तरापूर्वप्रयुक्त (मुपांशुत्वम्।) तस्मात् न परमापूर्वप्रयुक्तमित्यर्थः। प्रधानद्रव्यसंस्कारकस्य दृष्टार्थस्य सोमप्रवहणीयादिसूक्तरूपस्य पदार्थस्य तत्र—प्राग्देशे, पूर्वं (भावात्—तदवा)न्तरापूर्वप्रयुक्तमेवोपांशुत्वम्। न यज्ञभागप्रयुक्तम्। अतो 'यज्ञस्य यत्प्राचीन'मिति

---

१ तुल्येषु नाधिकारस्स्यादचोदितश्च संबन्धः पृथक्सतां यज्ञार्थेनाभिसंबन्धस्तस्माद्यज्ञप्रयोजनम्—क, ख.

नान्वयः, किन्तु अग्नीषपोमीयाद्यत्प्राचीनं इत्येवान्वयः। यज्ञशब्दस्य त्सराशब्दे-नार्थ(बादिकेन सम)न्वयः। किन्तु प्राग्भवपदार्थावान्तरापूर्वप्रयुक्तमित्यर्थः। तस्य च तत्र भावात् इति सूत्रावयवो वार्तिककारेण हेतुनिर्देशपरतया व्याख्यातः, स तत्रैवावगन्तव्य इति नेह प्रतन्यते ॥ २२ ॥

## यज्ञस्य वा तत्संयोगात् ॥ २३ ॥ (पू)

वाकारात् सिद्धान्तिपक्षो व्यावर्त्यते। नैतदुपपद्यते अग्नीषोमीयात्प्राग्भव-पदार्थावान्तरापूर्वस्य उपांशुत्वप्रयोजकत्वमिति। कस्य तर्हि? यज्ञस्य—परमा-पूर्वस्यैवोपांशुत्वप्रयोजकत्वं स्यात्। कुतो हेतोः? तत्संयोगात्—त्सरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयाव इति यज्ञशब्देन समन्वयात् यज्ञस्यैवायमुपांशुत्वधर्मः, अत एवमभिसंबन्धः—यज्ञस्य यत्किञ्चित्प्राचीनं तेनोपांशु चरन्तीत्येव। न त्वग्नीषोमीयपदेन प्राचीनपदसमन्वयः, अतो न प्राग्भवपदार्था-वान्तरापूर्वप्रयुक्तमुपांशुत्वमिति ॥ २३ ॥

## [1]अर्थवादश्च तदर्थवान् ॥ २४ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। "त्सरा वा एषा यज्ञस्य" इति छद्म-गत्यपरपर्यायत्सराशब्दार्थवादश्च तदर्थवान्—तदर्थत्वेन—यज्ञार्थत्वेनैवार्थवान्—प्रयोजनवान्, नत्वन्यथा। अयमर्थः—यथा शाकुनिकस्य शकुनिर्जिघृक्षितः; प्रच्छन्ना गतिः, शनैः पदन्यासः, दृष्टिप्रणिधानं, अशब्दकरणश्च—एतत्समस्तं शकुनिग्रहणार्थमेव भवति, न तु शाकुनिकाक्रान्तदेशार्थम्, तद्वदत्रापि प्राग्देश-संबद्धस्याप्युपांशुत्वस्य छद्मगतित्वेन स्तुत्यर्थस्य ग्राह्ययज्ञार्थत्वमेव। अतः परमा-पूर्वमेव प्रयोजकमुपांशुत्वस्य, न पदार्थावान्तरापूर्वमिति ॥ २४ ॥

## प्रणीतादि तथेति चेत् ॥ २५ ॥

यदुक्तं "प्रणीताः प्रणेष्य"न्नित्यत्र यथा वाङ्नियमस्य प्रणीतावान्तरा-पूर्वप्रयुक्तत्वं हेतुत्वेनोपन्यस्तं ... ... ... ... ... तस्यासिद्धस्य हेतुत्वायोगात्

---

१ अनुवादश्च तदर्थवत् क. ख.

हेत्व ... ... ... ... ... ... ... ... ... न्यायेनाधिकरणान्तरपरतया व्याख्यायते (इति चेत्पश्यसि) प्रणीतादि च तथा – "यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः" ... ... ... ... ... ... ... ... ... देव तथा – अग्नीषोमीय-प्राचीनपदार्थवदेवाप्रयोजकमिति प्रत्यनुभाषणपरं सूत्रम् ॥ २५ ॥

## न यज्ञस्याश्रुतित्वात् ॥ २६ ॥

नैतदेवं प्रणी ... ... ... परमापूर्वप्रयुक्ता इति। कथम्? यज्ञस्या-श्रुतित्वात् – यज्ञं तनिष्यन्तौ – विस्तारयिष्यन्तौ इति विस्तारान्वयित्वेन वाग्यमस्य श्रवणात्। यज्ञस्य तत्संबन्धित्वेनाश्रवणान्न परमापूर्वप्रयुक्तत्वं वाग्यमस्य। किन्तु प्रणीतावान्तरापूर्वप्रयुक्तत्वमित्यर्थः। अतो हेतुत्वमुपपन्नं प्रणीतावाग्यमस्य सिद्धान्तिमते ॥ २६ ॥

## तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥ २७ ॥ (सि)

स्थितादुत्तरमुच्यते। वाकारः पूर्वपक्षव्यावर्तकः। तद्देशानां – प्राग्देशानां प्राग्देशसंबद्धानां पदार्थानामेवाङ्गमुपांशुत्वधर्मस्स्यात्, न यज्ञस्य। कुतो हेतोः? सङ्घातस्याचोदितत्वात् – ग्रहयज्यभ्यासरूपसंघातात्मकस्य जोतिष्टोमस्योपांशुत्वसंबन्धित्वेनाचोदितत्वात्। अयमर्थः – यज्ञप्राग्देशस्य यद्यय-मुपांशुत्वधर्मस्स्यात्, देशस्य चैकत्वात्, यत्किञ्चिदिति प्रयोगस्य वीप्सार्थ-त्वेन बहुपदार्थगोचरत्वात्, न यज्ञप्राग्देशेनोपांशुत्वस्य समन्वयः प्राप्नोति। तद्देशलक्षितपदार्थधर्मत्वे तु न काचित्क्षतिः ॥ २७ ॥

भाष्ये कुण्डपायिनामयने प्रयोजनमुपन्यस्तम्। न तदुपपद्यते। नामाति-देशस्य प्रत्यक्षस्य बलीयस्त्वादिति संदृष्य वार्तिककारेण राजसूये, "पुरस्तादुप-सदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद्वैष्णवेन" इत्युपन्यस्य प्रयोजनश्च – परमापूर्वप्रयुक्तत्वे सौम्यादिष्वप्युपांशुत्वं प्राप्नोति, अवान्तरापूर्व-प्रयुक्तत्वे तु न सौम्यादिषूपांशुत्वमिति प्रदर्शितम् ॥ ८ ॥

( अग्निधर्माधिकरणम्-९ )

## अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥ २८ ॥ (पू)

अस्त्यग्निः—"य एवं विद्वानग्निं चिनुते—इष्टकाभिरग्निं चिनुते" इति। तत्रेदमाम्नायते—"हिरण्यशकलसहस्रेणाग्निं प्रोक्षति—दध्ना मधुमिश्रेण प्रोक्षति—वेतसशाखया अवकाभिश्चाग्निं विकर्षति—मण्डूकेनाग्निं विकर्षति" इति ॥

तत्र संदिह्यते—किं प्रतीष्टकं प्रोक्षणं विकर्षणञ्च कर्तव्यम्? उत सकृदेव? इति ॥

तत्रापरमपि विचार्यते—किमिष्टकासमुदायेऽग्निशब्दः? उत ताभ्यो व्यतिरिक्ते द्रव्यान्तरे? इति ॥

इष्टकासमुदाय (वाचित्वे) प्रतीष्टकं प्रोक्षणं, द्रव्यान्तरत्वे तु सकृदेवेति ॥

तत्र अग्निधर्मः—प्रोक्षणादिः प्रतीष्टकं—इष्टकामिष्टकां प्रति स्यात्, न सकृत्। कुतः? संघातात्—समुदायात्—इष्टकासमुदायरूपत्वात्—समुदायस्य चामूर्तत्वेन प्रोक्षितुमशक्यत्वात् प्रतीष्टकं प्रोक्षणादि धर्मास्स्युः, न समुदाये। तत्र दृष्टान्तः—पौर्णमासीवत् इति। यथा "य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते" इति। अत्र त्रिकद्वय-समुदायस्यानुष्ठातुमशक्यत्वात् आग्नेयादय एवानुष्ठीयन्ते, नान्यद्द्रव्यम्, तद्वदत्रापि इष्टकासमुदायात्मकेऽग्नौ प्रोक्षणाद्यसंभवात्, द्रव्यान्तरत्वद्योतकसंहतावयवत्वाद्यभावाच्च प्रतीष्टकमेव प्रोक्षणमिति ॥ २८ ॥

## अग्नेर्वा स्याद्द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २९ ॥(सि)

वाकारः पक्षव्यावर्तकः। अग्निशब्दः अग्नेः—इष्टकानिर्मितस्थण्डिलस्यैवाग्न्याधारस्य द्रव्यान्तरस्य वाचकः स्यात्, न तु समुदायस्य अमूर्तत्वेनाप्रोक्षणीयत्वात् प्रतीष्टकं प्रोक्षणमिति। कुतो हेतोः? द्रव्यैकत्वात्—अग्निरूपद्रव्यस्यैकत्वात्, इतरासां—इष्टकानाञ्च तदर्थत्वात्—अग्न्यर्थत्वात्—अग्नि-

शेषत्वात् अग्नेरेव प्रोक्षणादिभिस्संस्कार्यत्वात्, इष्टकानान्तूपसर्जनीभूताना-मप्राधान्येनासंस्कार्यत्वात् न प्रतीष्टकं प्रोक्षणम् । इष्टकानान्तु संस्कार्यत्वेन प्राधान्ये वर्ण्यमाने, द्वितीयाविभक्तिस्स्यात्, न तृतीयेत्यर्थः । अतोऽग्न्याख्यं द्रव्यान्तरं, यत्र लौकिकानां द्रव्यान्तरमिति प्रसिद्धिः, तत्रैव द्रव्यान्तरत्वम् । नतु पूर्वपक्ष्युक्तद्रव्यान्तरलक्षणं प्रभवतीत्यर्थः । अतो विकर्षणादि सकृदेव कर्तव्यं नासकृदिति ॥ २९ ॥

## चोदनासमुदायात्तु पौर्णमास्यां तथा स्यात् ॥ ३० ॥

यदुक्तं पौर्णमासीवत् सामुदायिकत्वात् समुदायव्यतिरेकेण द्रव्यान्तराभावात् न द्रव्यान्तरप्रोक्षणमिति, तद्व्यावर्तकस्तुः । पौर्णमास्यां त्वदुक्तायां तथा स्यात्—त्वदुक्तप्रकारस्स्यात् । कुतो हेतोः? चोदनासमुदायात्—चोदनायास्समुदायात्—समुदायस्यैवाग्नेयादेश्चोदनादित्यर्थः ॥ ३० ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पक्षयोर्विशदम् । अतोऽत्र विविच्य न लिख्यते ॥

(पत्नीसंयाजाधिकरणम्—१०)

## पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ ३१ ॥ (पू)

अस्त्यहर्गणो द्वादशाहः—"द्वादशाहेन प्रजाकामं याजयेत्" इति । तत्र श्रूयते "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते" इति ॥

तत्र संदिह्यते—किं सर्वेषामह्नां पत्नीसंयाजान्तत्वम्? उत प्रागुत्तमात् दशमं वर्जयित्वा? इति ॥

तत् पत्नीसंयाजान्तत्वं सर्वेषां—द्वादशानामप्यह्नां भवितुमर्हति । कुतो हेतोः? अविशेषात्—सर्वेषामिति पदस्याविशेषितस्वार्थत्वादित्यर्थः ॥

## लिङ्गाद्वा प्रागुत्तमात् ॥ ३२ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः । "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते, न बर्हि-

रनुप्रहरति असंस्थितो हि तर्हि यज्ञः" इत्युत्तमादन्होऽर्वाचीनानामह्नां असंस्थितत्व-दर्शनात्, अन्त्येऽहनि च क्रतोरसंस्थितत्वात् उत्तमादह्नः प्रागेव पत्नीसंयाजान्तत्वं न त्वविशेषेण द्वादशानामपीति ॥ ३२ ॥

[1]अर्थवादो वा दीक्षा यथा नक्तं संस्थापनस्य ॥ ३३ ॥

वाकारः प्रागुक्तपक्षं व्यावर्तयति। "असंस्थितो हि तर्हि यज्ञः" इति अर्थवादः पत्नीसंयाजान्ततास्तुत्यर्थः। विलंब्य समापनमपेक्ष्य असंस्थितत्व-स्तुतेः अवभृथान्तानां तदहश्शेषाहानामनुष्ठीयमानत्वात्, पत्नीसंयाजान्तता-मात्रस्याननुष्ठीयमानत्वात् संस्थावचनमर्थवाद एव। तत्र दृष्टान्तः -- क्रतोर्नक्तं संस्थापनस्य इति। नक्तं संस्थापनस्य, 'वरुणपाशाभ्यां वा एषोऽभिधीयते यो दीक्षितः, अहोरात्रे वै वरुणपाशौ, यद्दिवा संस्थापयेत् अनुन्मुक्तो वरुणपाशाभ्या' मिति। दीक्षा -दीक्षोन्मोचनं यथा संस्थापनस्यार्थवादः, तत्रान्येषामपि दीक्षितव्रतानामुत्सृज्यमानत्वात्, तद्वदिहापि पत्नीसंयाजान्तता तु सर्वेषामेवाह्नां प्राप्नोति, न प्रागुत्तमादिति ॥ ३३ ॥

स्याद्वाऽनारभ्य विधाना[2]दन्त्ये लिङ्गविरोधात् ॥ ३४ ॥

वाकारः प्रागुक्त प्रक्षव्यावर्तकः। प्रागुत्तमादह्न एव पत्नीसंयाजान्तता स्यात्। कुतो हेतोः? अनारभ्य -अन्त्यमहरनुपक्रम्य पत्नीसंयाजान्तत्व-विधानात्। अन्त्ये चाहनि पत्नीसंयाजाद्यवभृथान्तानां क्रियमाणत्वात् प्राचीनेषु च कर्तृव्यापारमात्रोपरतेः अन्त्येऽहनि संस्थितत्वरूपलिङ्गविरोधात् प्रागुत्तमादेव पत्नीसंयाजान्तता। "असंस्थितो हि तर्हि यज्ञः इति लिङ्गं न्यायप्राप्ते विनिगमकम् ॥ ३४ ॥

प्रयोजनन्त्वनुष्ठानरूपम् विशदमेव ॥ १० ॥

---

१ अनुवादो वा ... क. ख.

२ ... दन्ते लिङ्गवि क. ख.

( सामिधेन्यधिकरणम्–११ )

## अभ्यासस्सामिधेनीनां प्राथम्यात् स्थानधर्मस्स्यात् ॥ ३५ ॥
(सि)

दर्शपूर्णमासयोः सामिधेनीः प्रकृत्य श्रूयते–"त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति ॥

तत्र संदिह्यते–किमयमभ्यासः ऋग्धर्मः–यत्रतत्रस्था प्रवोवाजा त्रिरभ्यसितव्या? उत स्थानधर्मः, या अन्यापि प्रथममुच्यते सापि त्रिरभ्यसितव्या? इति ॥

तत्र सामिधेनीनां मध्ये यः अभ्यासः श्रुतः, सः स्थानधर्म एव स्यात्–प्रथमस्थानापन्नाया ऋचः एव धर्मस्स्यात्, नतु यत्रतत्रस्थायाः प्रवोवाजीयाया इति । कुतो हेतोः? प्राथम्यात्–प्रथमस्थानापन्नस्यैवाभ्यासविधानादित्यर्थः । यदि ऋग्धर्मस्स्यात्, ऋग्वेदे यत्रतत्रस्थायाः प्रवोवाजीयाया अभ्यासस्स्यात्, स चानिष्टः, प्रकृतासंबन्धात् । अतः स्थानधर्म एव । प्रथमस्थानापन्नाया ऋच एव धर्मस्स्यात् ॥ ३५ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–विचारसुगमम् ॥ ११ ॥

(आरंभणीयाधिकरणम्–१२ )

## इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया ॥ ३६ ॥ (पू)

दर्शपूर्णमासयोरन्वारम्भणीयेष्टिस्समाम्नाता–"आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वत्यै चरुं सरस्वते द्वादशकपालं अग्नये भगिनेऽष्टाकपालं निर्वपेत् यः कामयेत भग्यन्नादस्स्यामिति" इति । नित्यवदेके भगिनमामनन्ति । आवृत्तिश्च दर्शपूर्णमासयोः श्रूयते–"यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति ॥

तत्रेष्ट्यावृत्तौ संदेहः–किमारम्भणीयाप्यावर्त्येत? उत नावर्त्येत? इति ॥

तत्र "आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमाणः" इति विहिता आरंभणीयेष्टिः इष्ट्यावृत्तौ–दर्शपूर्णमासावृत्तौ कर्तव्यायां

तत्तत्प्रयोगपृथक्त्वेन प्रयोगाङ्गत्वाच्चारंभणीयायाः, सापि तदावृत्तावावर्त्येत, अङ्गत्वात्। तत्र दृष्टान्तः—प्रयाजवत् इति। यथा प्रयाजानां दर्शपूर्णमासाङ्गानां प्रतिप्रयोगमावृत्तिः, न तु सकृदेवानुष्ठानम्, तद्वदित्यर्थः ॥ ३६ ॥

**सकृद्वाऽऽरंभसंयोगादेकः पुनरारंभो यावज्जीवप्रयोगात् ॥ ३७ ॥ (सि)**

वाकारः पूर्वपक्षं व्यावर्तयति। सकृदेवानुष्ठेयाऽऽरंभणीयाऽऽन्वारंभणीया, नासकृत्। कुतो हेतोः? आरंभसंयोगात्—दर्शपूर्णमासावारप्स्यमाणः इत्यारंभसंयोगात्—आरंभाङ्गत्वात्। तत्र हेतुमाह—यावज्जीव प्रयोगात्—यावज्जीवप्रयोगविधानात्, आवर्त्यमानानां दर्शादीनां आरंभः एक एवेति कृत्वा आरंभैक्यात्, आरंभाङ्गत्वाच्चान्वारंभणीयायाः सकृदेवादावनुष्ठानम्, न तदावृत्तावावृत्तिः ॥ ३७ ॥

प्रयोजनन्त्वनुष्ठानरूपम् विशदतरम् ॥ १२ ॥

**इष्ट्यावृत्तौ प्रयाजवदावर्तेतारंभणीया ॥ (पू)**

एवं वा:- (१३)

प्रथमपदार्थ आरंभ इति :—

तत्र संदिह्यते—किं दर्शपूर्णमासयोरारप्स्यमाणयोः आरंभणीया प्रथमपदार्थं सम्यञ्चं करोति? उत पुरुषस्यारभमाणस्य — प्रथमं दर्शपूर्णमासयोः प्रवर्तमानस्य आरंभणीया कर्तारमारंभयोग्यं करोति? इति।

तत्र अन्वारंभण्या दार्शपूर्णमासिकान्वाधानरूप प्रथमपदार्थस्यारंभवाच्यत्वे तदङ्गत्वे चारंभणीयायाः, इष्ट्यावृत्तौ-दर्शाद्यावृत्तौ क्रियमाणायां आरंभणीयापि प्रथमपदार्थान्वाधान सामीचीन्यायावर्त्येत, न तु सकृदेव। तत्र दृष्टान्तः- प्रयाजवदिति। अयश्च सूत्रावयवो व्याख्यात इति न पुनर्व्याख्यायते ॥

**सकृद्वारंभसंयोगादेकः पुनरारंभो यावज्जीवप्रयोगात् ॥ (सि)**

आरभमाणपुरुषसंस्कारार्थत्वेऽप्यारंभणीयायास्सकृदेवानुष्ठानम् । कुतो हेतोः? आरंभसंयोगात्–आरभमाणपुरुषसंयोगात् । आरंभणीयासंस्कृत पुरुषश्च सर्वयज्ञप्रयोगाणामेक एवेति कृत्वा सकृदेवानुष्ठानम् । पुनः शब्दो हेत्वर्थे । यावज्जीवप्रयोगात् – तत्संस्कृतपुरुषस्यैव यावज्जीवप्रयोगविधानाच्च, एक एव आरंभणीयासंस्कृतस्य पुरुषस्यारंभ इत्यर्थः ॥

प्रयोजनन्त्वनुष्ठानरूपम्-व्याख्यातप्रायमेव, अतो न पुनर्विलिख्यते ॥ (१३)

(अर्थाभिधानाधिकरणम्–१४)

## अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावस्स्यात्तत्राचोदितमप्राप्तं चोदिताभिधानात् ॥ ३८ ॥ (सि)

दर्शपूर्णमासयोरस्ति निर्वापमन्त्रः, 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति ॥

तत्र संदेहः–किं विकृतौ सवित्रश्विपूषशब्दानां (ऊहः? उत अनूहः?) इति ॥

अन्यच्च चिन्त्यते – किमेते अग्न्यादिशब्दा मन्त्रगताः कर्मसमवेतं देवतारूपमभिवदन्ति? उत असमवेतार्थाभिधायिनः? इति ॥

असमवेतार्थाभिधायित्वे विकृतावग्नि ... ... ... ... ... ... मन्त्रप्रयोगः इतरस्मिन्ननूहः इति ॥

तत्र निर्वापादिवाक्येषु, अग्निदेवतैव कर्मसमवेता प्रकाश्या, न सवित्रादयः । कुतः? सर्वत्र मन्त्रेषु अर्थाभिधानसंयोगात्–कर्मसमवेत देवतादिरूपार्थाभिधानसंबन्धाद्धेतोः, इतरेषां असमवेतार्थाभिधायिनां, समवेतदेवतादिरूपार्थशेषभावस्स्यात् । न तु तेषामपि (शेषित्वम् । तत्रानुष्ठेयकर्मणि) अचोदितं–अविधिचोदितं सवित्रादि अप्राप्तम्–कर्मसमवेतत्वेनाप्राप्तम् । मन्त्राणाञ्च चोदिताभिधानात्–चोदितद्रव्यदेवतादिप्रतिपादकत्वात् । चोदिताभिधानादेव च ऊहः प्राप्नोति नान्यथा । पृथग्वाक्यान्येतानि कृत्वा

कर्मसंबन्धमुत्कर्षश्च कर्तुमशक्यत्वादग्निपदमेव समवेताभिधायि, नान्यत्। अतस्सवित्रादयो न प्रकाशयन्ते स्वस्वप्रधानत्वेन। अतस्तेषां विकृतावनूहः॥

## ततश्चावचनं तेषामितरार्थं प्रयुज्यते॥ ३९॥

[1]यदुक्तमश्रुतानां सवित्रादिपदानां अप्रकाशनेन किञ्चिददृष्टं प्रयोजनमिति; तत्रोत्तरम्। चकारो हेत्वन्तरार्थः। तत एव कारणात् तेषां—सवित्रादीनां अवचनम्—समवेतत्वेन [2]अभिधानम्। कथम्? सवित्रादिपदं इतरार्थं—निर्वापस्तुत्यर्थं, नान्यथा। स्तुतिश्चेदृशी—देवस्य त्वा सवितुः प्रसवे, देवेन सवित्रा यजमानेन प्रसूत इत्यादि। देवाध्वर्य्वोर्वा अश्विनोरेतौ बाहू इत्यन्ता। अतो न कर्मसमवेतास्सवित्रादयः॥ ३९॥

प्रयोजनन्त्वनुष्ठानरूपम्—ऊहानूहभेदेन कोटिभ्यां प्रद्योतितम्॥ १४॥

(गुणशब्दाधिकरणम्—१५)

## गुणशब्दस्तथेति चेत्॥ ४०॥ (पू)

तस्मिन्नेव वाक्ये—'अग्नये जुष्टं निर्वपामि' इति समाम्नायते॥

किमग्निशब्दोऽप्यसमवेतवचनः? ततो विकृतौ नोह्यते? उत समवेतवचनो विकृता वूह्यते? इति संदेहे सति—

इति चेत् पश्यसि सवित्रादिशब्दानामसमवेतार्थत्वमिति, तर्हि गुणशब्दः—कर्मगुणभूताग्न्यादिशब्दोऽपि तथैव—सवित्रादिवदेव स्यात्, असमवेतत्वात्। कुतोऽसमवेतत्वम्? निर्वापोत्तरकाल ... .... जुष्टपदप्रयोगात्, तत्पूर्वं जोषणीयत्वेन जुष्टत्वाभावात् गुणशब्दोऽपि तथैव स्यात्। तस्यापि विकृतावनूहोऽसमवेतत्वादित्यर्थः॥ ४०॥

---

१ अत्र मातृकागताः पङ्क्तयः असङ्गता इव भान्ति। "यदुक्तमश्रुतानां सवित्रादीनां प्रकाशने, न किञ्चित् दृष्टं प्रयोजनमिति" इति विपरिणमयितव्यम्। भाष्यपङ्क्तिरियमस्मिन् ग्रन्थे अप्राप्तावसरापि सूत्रव्याख्यानोपयोगितया उपात्ता।

२ अनभिधानम्—इति साधु।

## न समवायात् ॥ ४१ ॥ (सि)

नैतदेवं असमवेतवचनोऽग्निशब्द इति। कुतः कारणात्? समवायात्—निर्वापेण जुष्टत्वकरणात्, निर्वापोत्तरकालश्च जुष्टद्रव्यसमवायित्वेन, असमवेतवचनत्वाभावात् निर्वापकर्मसमवायित्वेनाग्नेः प्रकाश्यत्वात्प्रकृतौ समवेतत्वम्। विकृतौ चातो हेतोरूह्यत्वमिति ॥ ४१ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—अनूहोहभेदेन विशदम्। १५ ॥

(धान्याधिकरणम्—१६)

## गुणशब्दस्तथेति चेत् ॥ (पू)

एवं वा—

दर्शपूर्णमासयोरिदमाम्नायते—"धान्यमसि धिनुहि देवान्" इति। "दृषदि तण्डुलानावपति" इति ॥

तत्र धान्यशब्दे संदेहः—किमयं धान्यशब्दस्समवेतवचनः? उत न? इति ॥

योऽयं गुणशब्द इव दृश्यते धान्यशब्दः, सोऽपि तण्डुलेष्वसमवेतत्वेन सवित्रादिपदवदेवासमवेतार्थाभिधायी स्यात् इति चेत् इति पदद्वयं व्याख्यातम् ॥

## न समवायात् ॥ (सि)

नैतदुपपद्यते—असमवेताभिधायित्वं धान्यशब्दस्य तण्डुलावाप इति। कुतः? "[1]इषीकेषु शालयो भुज्यन्ते" "अनूपेषु गावः पीयन्ते" इतिवत् धान्यविकारोपलक्षकत्वेन विकारे समवेतत्वात् ॥

अतो विकृतौ [2]शाक्यानामयने मांसमये पुरोडाशे "मांसमसि" इत्यूहः सिद्धान्ते। पूर्वपक्षे तु नेति ॥ १६ ॥

---

१ काशिकेषु क.

२ शाक्त्यानामयने क.

(यज्ञपत्यधिकरणम्–१७)

## चोदिते तु परार्थत्वाद्विधिवदविकारस्स्यात् ॥ ४२ ॥ (सि)

दर्शपूर्णमासयोः "इडोपहूता" इतीडानिगदे समाम्नायते–"दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः, य इमं यज्ञमवान् ये यज्ञपतिं वर्धान् इति ॥

तत्र संदिह्यते–किं बहुयजमानके यज्ञपतिशब्द ऊहितव्यः? उत अविकारेण प्रयोक्तव्यः? इति ॥

तत्र चोदिते–कर्माधिकारित्वेन विहिते यज्ञपतौ अविकारस्स्यात्–द्विबहुयजमानके कर्मणि इडोपाह्वाने अविकार एव स्यात्, नोहः। कुतो हेतोः? परार्थत्वात्–इडास्तुत्यर्थत्वात्। चोदितमपि यत्परार्थं तन्न विवक्षितस्वार्थमिति। तत्र दृष्टान्तः–विधिवत् इति। यथा (द्विबहु) यजमानके कर्मणि, यजमानसंमितौदुंबरी भवति' इति समाम्नातमौदुंबरीमानं येन केनापि यजमानेन(कर्तव्यं) भवति, न सर्वैर्मातव्यम्, तद्वदिहाप्यविवक्षितं सत् एकयज्ञपत्युपादानेऽपि चरितार्थं यज्ञपतिपदं न विकृतावूह्यत इत्यर्थः ॥ ४२ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–पक्षयोः प्रद्योतितम् ॥ १७ ॥

(आयुराशासनाधिकरणम्–१८)

## विकारस्तत्प्रधाने स्यात् ॥ ४३ ॥ (सि)

दर्शपूर्णमासयोः "सूक्तवाकेन प्रस्तरं प्रहरती"ति श्रुतम्। तत्रेदमाम्नायते–"यजमान आयुराशास्ते" इति ॥

तत्र संदिह्यते-किं बहुयजमानके यजमानशब्द ऊहितव्यः? उत न? इति ॥

तत्र तत्प्रधाने–यजमानायुराशासनप्रधाने–यजमानायुराशासनफलके प्रस्तरप्रहरणे, यजमानशब्दस्य द्विबहुयजमानके कर्मणि विकारः–ऊहः स्यात्, न तु पूर्वाधिकरणप्रसिद्ध[1]यजमानशब्दवदनूह इति ॥ ४३ ॥

---

१ यज्ञपति शब्दवदिति साधु।

प्रयोजनं पक्षयोः प्रद्योतितम् ॥ १८ ॥

( सुब्रह्मण्याधिकरणम्-१९ )

## असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४४ ॥ ( सि )

ज्योतिष्टोमे सुब्रह्मण्यानिगदस्समाम्नातः — इन्द्रागच्छ हरिव आगच्छ ... मेषवृषण" इत्यादिः ॥

अग्निष्टुति तु श्रूयते — "आग्नेयी सुब्रह्मण्या भवति" इति । तत्रेन्द्र-शब्दस्थाने अग्नयेवोहः ॥

किं हरिव आदिपदमूहितव्यम्? उत न? इति संदेहे —

तत्र तद्विशिष्टं — हरिवदादिविशिष्टमिन्द्रपदं, अनूहित हरिवदादिपदमेव प्रतीयेत। कुतः? तदर्थेषु — हरिवदाद्यर्थेषु इन्द्रस्य असंयोगात् — असंबन्धात्। हरिवदादीनां गुणानामिन्द्रासाधारणत्वप्रतिपादकश्रुत्यादिप्रमाणाभावात । अत इन्द्रशब्दे ऊहितेऽपि न हरिवदादीनामग्निष्टुत्यूह इति ॥ ४४ ॥

## [1]कर्मभावान्नेति चेत् ॥ ४५ ॥

इति चेत्पश्यसि, हरिवदादीनामिन्द्रे असमवेतत्वात् अनूह इति; नैतदेवम् । कुतो हेतोः? कर्मभावात् — हरिवदादीनां गुणानां कर्मनिमित्तत्वे-नेन्द्रे समवेतत्वादित्यर्थः । कर्मजत्वप्रतिपादकश्च वैदिकवाक्यसंदर्भः श्रूयते 'हरिव आगच्छेति' । 'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां ह्येष हरतीति । 'मेधातिथेर्मेष' इति — [2] मेधातिथिर्हि काण्वायनं मेषो भूत्वा जहार । वृषणश्वस्य मेने' इति वृषणश्वस्य मेनकानाम दुहिता बभूव, तामिन्द्रश्चकमे । 'गौरावस्कं-दिन्नि'ति। गौरमृगो भूत्वा अरण्याद्राजानं पिबतीति च। अनेन ( वाक्यसंद )र्भेण हरिवदादीनां इन्द्रे समवेतार्थत्वे कर्मैव निमित्तमिति, इन्द्रपदवदेव हरिवदादीना-मप्यग्निष्टुति ऊहः स्यात् ॥ ४५ ॥

---

१ कर्माभावादेवमिति चेत क. ख.

२ 'मेधातिथि'र्हि इति 'क' पाठस्साधुः ।

## न परार्थत्वात् ॥ ४६ ॥

नैतदेवम्, हरिवदादीनामप्यग्निष्टुत्यूह इति। कुतः? परार्थत्वात्–इन्द्रस्तुत्यर्थत्वात् हरिवदादीनां निगदपठितानाम्। स्तुतिश्चेन्द्रस्य ... ... नारूप ... ... तिपादनरूपा। तस्मादग्निष्टुति हरिवदादीनां नोहस्सिद्ध्यतीति ॥ ४६ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–पक्षयोः प्रद्योतितम् ॥ १९ ॥

( त्रिवत्साधिकरणम्–२० )

## असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ (सि)

साद्यस्क्रे श्रूयते–"साण्डस्त्रि[1]वर्षस्सोमक्रयणः" इति। अस्ति च प्रकृतावेकहायनी। तत्रेदमाम्नायते–इयं गौस्तया ते क्रीणामि, तस्यै शृतं, तस्यै शरः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनम्, तस्यै नवनीतम्, तस्या आमिक्षा, तस्यै वाजिनम्" इति। तदिह साद्यस्क्रे चोदकेन प्राप्तम् ॥

तत्र संदिह्यते–किं गोशब्दस्थाने ऊहं कृत्वा अवशिष्टानां पदानामविकारः? उत सर्वेषां पदानामूहः? इति ॥

तत्र तद्विशिष्टं–गोपदमेव प्राकृते ऊहे कर्तव्ये साण्डे प्रतीयेत। न तु "तस्यै शृतं" इत्यादीनामूहः। कुतः? तदर्थेषु–शृताद्यर्थेषु एकहायन्याः एकहायन्यवस्थायां असंयोगात्–असंबन्धात् गोपदमेवोह्यते, न तु "तस्यै शृतं" इत्यादीनामसमवेतानां साण्डे त्रिवर्षे ऊहस्सिद्ध्यति ॥

## [2]कर्मभावान्नेति चेत् ॥

इति चेत् पश्यसि नैकहायन्यामेतानि शृतादीनि समवेतानीति, नैतदेवम्। कर्मभावात्–भविष्यत्काले एकहायन्यामपि शृतादीनां दोहनादि कर्मभावात्। अतस्साण्डेऽपि 'तस्य शृतं' इत्येवमाकारेणोहितव्यमिति ॥

---

१ त्रिवत्सः क. ख.

२ कर्माभावान्नेति चेद् क. ख.

न परार्थत्वात् ॥

नैतदेवम् 'तस्ये'त्यादिना ऊह इति। कुतो हेतोः? परार्थत्वात्—एकहायनीस्तुत्यर्थत्वात्। स्तुतिश्चैतादृशी—यत इमानि शृनादीन्युत्पत्स्यन्ते अत इयमेव श्रेष्ठेति ॥

प्रयोजनन्तु प्रद्योतितम् ॥ २० ॥

(सारस्वत्यधिकरणम्—२१)

लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४७ ॥ (सि)

अग्निष्टोमे पशवस्समाम्नाताः—आग्नेयः पशुरग्निष्टोम आलभ्यते, ऐन्द्राग्नः पशुरुक्थ्ये, ऐन्द्रो वृष्णिष्षोडशिनि, सारस्वती मेष्यतिरात्रे इति ॥

अस्ति चाग्नीषोमीये पशावध्रिगुप्रैषः—"उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधम्" इति ॥

तत्र संदिह्यते—सारस्वत्यां मेष्यामध्रिगुवचनं कर्तव्यम्? नेति ॥

सर्वेषां पशूनां समानविधानत्वमभिप्रेत्य चिन्त्यते। तत्र समानविधानेषु—सर्वेषु पशुषु समानविध्यन्तेष्वाग्नेयादिषु, सारस्वती मेषी अध्रिगुवचनमप्राप्ता। कुतः? स्त्रीत्वात्। कथमननुप्रवेशः (सारस्वत्यामध्रिगुप्रैषस्येति; लिङ्गविशेषनिर्देशात्—"प्रास्मा अग्निमिति लिङ्गविशेषस्य पुंस्त्वस्य निर्देशात्, पुल्लिङ्गेन च शब्देन स्त्र्यभिधानस्य कर्तुमशक्यत्वात् अध्रिगुवचनं सारस्वत्यां न प्राप्नोति ॥ ४७ ॥

पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ॥ ४८ ॥ (पू)

वाकारः प्रागुक्तपक्षव्यावर्तकः। नैतदेवम्—सारस्वत्यामध्रिगुवचनाप्राप्तिरिति। कुतः? 'प्रास्मा अग्नि' मित्यत्र पश्वभिधानात्—पशुत्वस्य (लिङ्ग) सामर्थ्येन सन्निहितत्वात् तस्यैव च पशुत्वस्याभिधानम्। कुतः कारणात्? तद्धि—पशुत्वं हि 'पशुना यजेत' इति चोदनाभूतम्—चोदनायामुपादेयभूतम्। पुनश्शब्दोऽत इत्यर्थे। अतः कारणात् पशुत्वं पुंविषयः—अस्मा इति शब्दस्य विषयः। तस्मादध्रिगुवचनं मेष्यां प्राप्नोत्यविकृतमित्यर्थः ॥ ४८ ॥

## विशेषो वा तदर्थनिर्देशात् ॥ ४९ ॥

वाकार इममपि पक्षं व्यावर्तयति। नैतदस्त्यध्रिगुवचनप्राप्तिरिति। विशेष एव—पशुविशेष एवास्मा इति शब्देनोच्यते, न पशुमात्रम्। कुतः? तदर्थनिर्देशात्—तदर्थस्य-पशुरूपार्थस्यैव 'अस्मा' इति शब्देन निर्देशात्। अतस्सारस्वतीं मेषीं नालं भवति वक्तुं पुल्लिङ्ग 'इदं' शब्द इति परपक्षनिराकरणमात्रम् ॥ ४९ ॥

## पशुत्वञ्चैकशब्दात् ॥ ५० ॥

चकारोऽनुवादार्थः। एकशब्दात्—'प्रास्मा' इति शब्दात् पशुत्वं पशुश्चाभिधीयत इति यदुक्तम्, इति प्रागुक्तानुवादः ॥ ५० ॥

## यथोक्तं वा सन्निधानात् ॥ ५१ ॥

अनन्तरोक्तानुवादस्योत्तरम्। वाकारः प्रागुक्तपक्षव्यावर्तकः। पशुशब्दसन्निधानात् यथोक्तमेवा(धिकृत्य) अध्रिगुवचनं मेषी न प्राप्नुयात्। नात्र पशुशब्दः स ... ... ... ... ... ... ... ... णात् पशुत्वं सन्निहितमिति कृत्वा (सारस्व) त्यामपि पशुत्वस्य (सत्त्वात्) अविकृत एवाध्रिगुनिगदः प्राप्नुयात्। नात्र तादृशं पशुशब्दसन्निधान (मित्यप्राप्ता) सारस्वत्यध्रिगुवचनमिति ॥ ५१ ॥

प्रयोजनं विशदमेव कृत्वाचिन्तायामपि ॥ २१ ॥

(यज्ञायज्ञीये नित्यमिरापदस्य गिरापदबाधकत्वाधिकरणम्-२२)

आम्नातादन्यदधिकारे वचनात्तद्विकारस्स्यात् ॥ ५२ ॥ (सि)

ज्योतिष्टोमे यज्ञायज्ञियं साम प्रकृत्यामनन्ति-'न गिरा गिरेति ब्रूयादात्मानमेव तदुद्गातोद्गिरेत्, ऐरं कृत्वोद्गेयम्' इति ॥

तत्र संदिह्यते-किमिरापदं गिरापदं वा कर्तव्यम्? उत इरापदमेव? इति ॥

तत्र अधिकारे-ज्योतिष्टोमाधिकारे, आम्नातात्-यज्ञायज्ञीयप्राप्तगिरापदात् यत् अन्यत्-इरापदम्, 'ऐरं कृत्वोद्गेयं' इति, वचनात्-तदेव विकारस्स्यात्-विकारभूतं तदेवानुष्ठेयं स्यात्, न गिरापदं पाठलब्धबलमित्यर्थः ॥ ५२ ॥

द्वैधं वा तुल्यहेतुत्वा[1]त्समार्थाद्विकल्पस्स्यात् ॥ ५३ ॥ (पू)

वाकार इमं पक्षं व्यावर्तयति। न गिरापदं पाठप्राप्तं इरापदेन चोदितेन बाध्यत इति। किन्तर्हि? द्वैधं-द्विप्रकारौ स्यातामित्यर्थः। कुतः? तुल्यहेतुत्वात्-आम्नातेन गिरापदवता इरापदवता च यज्ञायज्ञीयेन ज्योतिष्टोमस्साधयितव्य इति हेतोस्तुल्यत्वादित्यर्थः। अतः समानार्थात्-एकार्थत्वात् उभयोरपि गिरापदेरापदयोः विकल्पस्स्यात्, न तु बाध्यबाधकभाव इत्यर्थः ॥५३॥

उपदेशाच्च साम्नः ॥ ५४ ॥

चकारेण तुल्यकल्पता व्यावर्त्यते। 'ऐरं कृत्वोद्गाये' दिति इरापदविशिष्टस्यैव यज्ञायज्ञीयान्त उपदेशात्-विधानात् नानेन बलवता इरापदेन दुर्बलपाठलब्धगिरापदस्य तुल्यतेति[2] ॥ ५४ ॥

नियमो वा श्रुतिविशेषादितरत् साप्तदश्यवत् ॥ ५५ ॥ (सि)

---

१ .... त्सामान्या ... क. ख.

२ असमासावृत्तिरत्र। सूत्रार्थस्याकरे अन्यथा व्याख्यातत्वात्।

यद्युच्येत, 'यज्ञायज्ञीयेन स्तुवीत' इति विहिते यज्ञायज्ञीये गिरापदस्यान्तः प्रविष्टत्वात् समाम्नातमुभयं तुल्यं, अतो विकल्प इति; तदनेन व्यावर्त्यते वाकारेण। प्रकृतावग्निष्टोमे नियम एवेरापदस्य। कुतः कारणात्? श्रुति-विशेषात् – गिरापदप्रमाणपाठापेक्षया इरा (पदप्रापकश्रुते) रेव बलवत्त्वा-दित्यर्थः। तर्हि कथं गिरापदं व्यर्थं स्यादिति, तन्न। इतरत् – गिरापदं व्यवतिष्ठते – विकृतिष्वनुप्रविशतीत्यर्थः। न तु प्र ... ... ... ... ... ... ... ... तत्र दृष्टान्तः – साप्तदश्यवत् – इति। यथा अनारभ्याधीतं साप्तदश्यं, प्रकृतेः पाञ्चदश्यावरुद्धत्वात् विकृतौ व्यवतिष्ठते, तद्वदेवेदमपीति ॥ ५५ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – अतिविशदतरम् ॥ २२ ॥ ओम्

*इति जैमिनिसूत्रवृत्तौ फलवत्यां नवमाध्यायस्य प्रथमः पादः

ओम् ओम् ओम् ... ... ओम् ओम् ओम्।

हयग्रीवाय नमः। रवमन्वाराही ननो ममः। श्रीमते कार्तवीर्यार्जुनाय नमः।

---

(गिरापदस्थानापन्नेरापदे गानकर्तव्यताधिकरणम् – २३)

**अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥ ५६ ॥ (पू)**

**यत्स्थाने वा तद्गीतिः स्यात्पदान्यत्वप्रधानत्वात् ॥ ५७ ॥ (सि)**

**गानसंयोगाच्च ॥ ५८ ॥**

---

*नवमाध्यायप्रथमपादे, इदमुपान्त्यमधिकरणम्। इतःपरं पञ्चसूत्रात्मकमन्त्य-मधिकरणं ग्रन्थान्तरेषु दृश्यते। अत्र तु नास्ति। न केवलमेतावदेव। नवमाध्यायस्य द्वितीयः पादः कृत्स्नोऽत्र परित्यक्तः। तृतीय एव पादः इत परं दृश्यते। तालपत्राणि 'नव' अत्र लुप्तानि। 181-तमात्पत्रादनन्तरं 191–तममेव पत्रं मातृकायां वर्तते। अतोऽस्माभिः छिद्रपूरणार्थं, प्रथमपादान्त्याधिकरणस्य, समग्रस्य द्वितीयपादस्य च सूत्राणि–परं, अविच्छेदाय, इत आरभ्य विलिखितानि ॥ (सं)

वचनमिति चेत् ॥ ५९ ॥

न तत्प्रधानत्वात् ॥ ६० ॥ (२३)

इति नवम ध्यायस्य प्रथमः पादः

श्रीः

## नवमाध्यायस्य द्वितीयः पादः

(सामादिशब्दानां गीतिवाचित्वाधिकरणम्–१)

सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥ (पू)

तदुक्तदोषम् ॥ २ ॥ (सि)

॥ १ ॥

एवं वा —

(ऊहग्रन्थस्य पौरुषेयत्वाधिकरणम्–२)

सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ (पू)

तदुक्तदोषम् ॥ (सि)

॥ २ ॥

(साम्नामृक्संस्कारकर्मत्वेन प्राधान्याधिकरणम्–३)

कर्म वा विधिलक्षणम् ॥ ३ ॥ (पू)

तादृग्द्रव्यं वचनात्पाकयज्ञवत् ॥ ४ ॥

तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥ ५ ॥

शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥ (सि)

परार्थत्वाच्च शब्दानाम् ॥ ७ ॥

असंबंधश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ८ ॥

संस्कारश्चाप्रकरणेऽग्निवत्स्यात् प्रयुक्तत्वात् ॥ ९ ॥

अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥

आश्रितत्वाच्च ॥ ११ ॥

प्रयुज्यत इति चेत् ॥ १२ ॥

ग्रहणार्थं प्रयुज्येत ॥ १३ ॥

॥ ३ ॥

(तृचे गेयस्य साम्नः प्रत्यृचं परिसमापनाधिकरणम्—४)

तृचे स्याच्छ्रुतिनिर्देशात् ॥ १४ ॥ (पू)

शब्दार्थत्वाद्विकारस्य ॥ १५ ॥

दर्शयति च ॥ १६ ॥

वाक्यानान्तु विभक्तत्वात्प्रतिशब्दं समाप्तिस्स्यात्संस्कारस्य तदर्थत्वात् ॥ १७ ॥ (सि)

तथा चान्यार्थदर्शनम् ॥ १८ ॥

अनवानोपदेशश्च तद्वत् ॥ १९ ॥

अभ्यासेनेतराश्रुतिः ॥ २० ॥

॥ ४ ॥

(समानच्छन्दस्कास्वेव तिसृषु ऋक्षु गानाधिकरणम्–५)

तदभ्यासस्समासु स्यात् ॥ २१ ॥ (सि)

लिङ्गदर्शनाच्च ॥ २२ ॥

॥ ५ ॥

(उत्तराशब्देन उत्तराग्रन्थपठितानामेव ऋचामुपादानाधिकरणम्–६)

नैमित्तिकन्तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ २३ ॥ (सि)

ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

॥ ६ ॥

एवं वा:–

(वैशोकसाम्नः उत्तराग्रन्थपठितयोर्बृहत्योरेव गानाधिकरणम्–७)

तदभ्यासस्समासु स्यात् ॥ (पू)

लिङ्गदर्शनाच्च ॥

नैमित्तिकन्तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ (सि)

ऐकार्थ्याच्च तदभ्यासः ॥

॥ ७ ॥

(बृहद्रथन्तरयोः स्वयोन्युत्तराप्रग्रथनेन संपादित ककुभोरेव गानाधिकरणम्–८)

प्रागाथिकन्तु ॥ २५ ॥ (सि)

स्वे च ॥ २६ ॥

प्रगाथे च ॥ २७ ॥

लिङ्गदर्शनाद्व्यतिरेकाच्च ॥ २८ ॥

॥ ८ ॥

एवं वाः—

( बृहतीत्रिष्टारपंक्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे रौरवयौधाजयसाम्नोर्गानाधिकरणम्—९ )

प्रागाथिकन्तु ॥ (सि)

स्वे च ॥

प्रगाथे च ॥

लिङ्गदर्शनाव्यतिरेकाच्च ॥

॥ ९ ॥

एवं वाः—

( अनुष्टुब्गायत्रीद्वयप्रग्रथनेन संपादिते आनुष्टुभे तृचे श्यावाश्वांधीगवसाम्नोर्गानाधिकरणम्—१० )

प्रागाथिकन्तु ॥ (सि)

स्वे च ॥

प्रगाथे च ॥

लिङ्गदर्शनाव्यतिरेकाच्च ॥

॥ १० ॥

एवं वाः—

( गवामयने द्वयोर्द्वयोः ऋचोः प्रग्रथनेन ब्रह्मसामगानाधिकरणम्—११ )

प्रागाथिकन्तु ॥ (सि)

स्वे च ॥

प्रगाथे च ॥

लिङ्गदर्शनाच्च्यतिरेकाच्च ॥

॥ ११ ॥

(गीत्युपायानां शाखाभेदेन समाम्नातानां विकल्पाधिकरणम्–१२)

अर्थैकत्वाद्विकल्पस्स्यात् ॥ २९ ॥ (सि)

॥ १२ ॥

(प्रगीताया एव ऋचो वैकृतापूर्वस्तोत्रसाधनत्वाधिकरणम्–१३)

अर्थैकत्वाद्विकल्पस्स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥ (पू)

वचनाद्विनियोगस्स्यात् ॥ ३१ ॥ (सि)

॥ १३ ॥

एवं वा :–

(विकृतिविशेषे प्रगीतयैव ऋचा आहवनीयोपस्थानाधिकरणम्–१४)

अर्थैकत्वाद्विकल्पस्स्यादृक्सामयोस्तदर्थत्वात् ॥ (पू)

वचनाद्विनियोगस्स्यात् ॥ (सि)

॥ १४ ॥

एवं वा :–

(ऋग्यजुर्मन्त्राणां तानस्वरेण कर्मणि प्रयोगाधिकरणम्–१५)

अर्थैकत्वाद्विकल्पस्स्यादृक्सामयोस्तदर्थत्वात् ॥ (पू)

वचनाद्विनियोगस्स्यात् ॥ (सि)

॥ १५ ॥

(योनिसाम्नः उत्तरावर्गवशेनोत्तरयोर्ऋचोर्गानाधिकरणम्–१६)

सामप्रदेशे विकारस्तदपेक्षस्स्याच्छास्त्रकृतत्वात् ॥ ३२ ॥ (पू)

वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात् ॥ ३३ ॥ (सि)

॥ १६ ॥

(उत्तरयोः स्तोभातिदेशाधिकरणम्—१७)

स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४ ॥ (पू)

सर्वातिदेशस्तु सामान्याल्लोकवद्विकारस्स्यात् ॥ ३५ ॥ (सि)

अन्वयश्चापि दर्शयति ॥ ३६ ॥

निवृत्तिर्वार्थलोपात् ॥ ३७ ॥

अन्वयो वार्थवादस्स्यात् ॥ ३८ ॥

॥ १७ ॥

(स्तोभानां लक्षणाधिकरणम्—१८)

अधिकञ्च विवर्णञ्च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥ (सि)

॥ १८ ॥

(प्राकृतव्रीह्यादिस्थानापन्नेषु नीवारादिषु व्रीह्यादिधर्माणामूहेनानुष्ठानाधिकरणम्—१९)

धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥ (सि)

॥ १९ ॥

(परिधौ यूपधर्माणामाक्षेपसमाधानाधिकरणम्—२०)

तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात् ॥ ४१ ॥ (पू)

आवेश्येरन्वार्थवत्त्वात्संस्कारस्य तदर्थत्वात् ॥ ४२ ॥ (सि)

आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥

॥ २० ॥

( अभ्युदयेष्टौ दधिपयसोः प्रणीताधर्मानुष्ठानाधिकरणम्–२१ )

परार्थे नत्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥ (पू)

क्रियेरन्वार्थनिर्वृत्तेः ॥ ४५ ॥ (सि)

॥ २१ ॥

( बृहद्रथन्तरधर्माणां व्यवस्थया तत्तःसामकालेऽनुष्ठानाधिकरणम्–२२ )

एकार्थत्वादविभागस्स्यात् ॥ ४६ ॥ (पू)

निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥ (सि)

॥ २२ ॥

( कण्वरथन्तरेऽविरुद्धानां बृहद्रथन्तरधर्माणां समुच्चयाधिकरणम्–२३ )

अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन् ॥ ४८ ॥ (सि)

॥ २३ ॥

( बृहद्रथन्तरोभयसामके क्रतौ रथान्तरादिधर्माणां प्रकृतिवत् व्यवस्थाधिकरणम्–२४ )

उभयसाम्निचैव मेकार्थापत्तेः ॥ ४९ ॥ (पू)

स्वार्थत्वाद्वा व्यवस्थास्यात्प्रकृतिवत् ॥ ५० ॥ (सि)

॥ २४ ॥

( पार्वणहोमयोर्विकृतावनतिदेशाधिकरणम्–२५ )

पार्वणहोमयोस्त्वप्रवृत्ति स्समुदायार्थसंयोगात्तदभीज्याहि ॥
॥ ५१ ॥ (सि)

कालस्येति चेत् ॥ ५२ ॥

नाप्रकरणत्वात् ॥ ५३ ॥

मन्त्रवर्णाच्च ॥ ५४ ॥

तदभावेऽग्निवदिति चेत् ॥ ५५ ॥

नाधिकारिकत्वात् ॥ ५६ ॥

॥ २५ ॥

(पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानाधिकरणम् – २६ )

उभयोरविशेषात् ॥ ५७ ॥ (पू)

यदभीज्या वा तद्विषयौ ॥ ५८ ॥ (सि)

॥ २६ ॥

( समिदादिपदानां नामधेयत्वेन प्रयाजानामारादुपकारकत्वाधिकरणम्–२७ )

प्रयाजेऽपीति चेत् ॥ ५९ ॥ (पू)

नाचोदितत्वात् ॥ ६० ॥ (सि)

॥ २७ ॥

इति श्रीजैमिनि महर्षिप्रणीते पूर्वमीमांसादर्शने नवमस्याध्यायस्य द्वितीयः पादः ।

---

इयदवधि सूत्राणि परं ग्रन्थान्तरेभ्य उद्धृत्य लिखितानि । समनन्तरपुटदारभ्य (नवमाध्यायतृतीयपादादारभ्य ) यथामातृकं लिख्यते ॥

## नवमाध्यायस्य तृतीयः पादः

( सौर्यादिविकृतावतिदिष्टमन्त्रे वैकृतद्रव्यादिवाचकपदोहाधिकरणम्—१ )

**प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वा दर्थेचाकार्यत्वात् ॥ १ ॥ (सि)**

वैकृतानि कर्माणि—"सौर्यं चरुं निर्वपेद्ब्रह्मवर्चस कामः" "ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" "वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः" इत्युदाहरणम् ॥

अस्ति तु प्रकृतौ निर्वापमन्त्रः—"अग्नये त्वा जुष्टं निर्वपामि" इति। तथा—"इन्द्राय मरुत्वते नैवारं [1]चरुं निर्वपे"दिति । अस्ति तु प्रकृतौ व्रीहिलिङ्गोमन्त्रः—"स्योनन्ते सदनं करोमि । घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्त्सीदामृते प्रतितिष्ठ । व्रीहीणां मेध सुमनस्यमानः" इति । [2]तच्च विकृतौ चोदकेन प्राप्तम् ॥

तत्र संदिह्यते—किमेतौ मन्त्रौ विकृतावविकारेण प्रयोक्तव्यौ? उत ऊहेन इति ॥

तत्र प्रकृतौ—दर्शपूर्णमासयोः, यथोत्पत्तिवचनं—उत्पत्तिवचनमनतिक्रम्यैव, अर्थानां—अग्निव्रीह्यादिरूपार्थानां कर्मसमवेतत्वेन मन्त्रेण प्रस्मरणं कृतम् । उत्तरस्यां ततौ—विकृतावपि सूर्यादिदेवतायां, नीवारादिषु च तथैव—अविकृतौ प्रयोज्यावग्निव्रीहिशब्दौ । कुतो हेतोः? तत्प्रकृतित्वात्—दर्शपूर्णमासप्रकृतित्वात् । यथा प्रकृतौ अविकृतेन मन्त्रेण प्रयोगः कृतः, तथैव विकृतावपि वक्तव्यः, चोदकानुग्रहात्—इति पश्यसि चेत्; इति सूत्रावयवेनानूद्य; अर्थेचाकार्यत्वात् इति सिद्धान्तयति ॥

---

१ ... एकादशकपालं ... इत्याकरे ।

२ पूर्वोक्तस्य मन्त्रस्य 'स च" ... प्राप्तः इत्यनुवादो युक्तः । सामान्याभिप्रायेणेदं नेतव्यम् ।

नैतदेवं अनूहो मन्त्रप्रयोग इति। अग्निव्रीहिशब्दयोः सूर्यनीवाररूपे अर्थे अकार्यत्वात्–अकृतकार्यत्वात्। अग्निव्रीहिशब्दाप्रकाश्यत्वात्सूर्यनीवारयोरर्थयोरित्यर्थः। अतोऽनुष्ठेयार्थप्रकाशकत्वनैयत्यान्मन्त्राणां तदेव कार्यं विकृतावित्यूह एव स्यात्, नत्वविकारेण प्रयोग इति ॥ १ ॥

## लिङ्गदर्शनाच्च ॥ २ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। "न भ्रातृशब्द ऊह्यते, न सखिशब्दः" इति तदितरेषामूह्यत्वप्रतिपादकलिङ्गदर्शनाच्च अग्निव्रीहिशब्दा ऊह्यन्ते। भ्रात्रादिशब्दव्यतिरिक्तत्वात्। यथा–न भवन्तस्समाजं गच्छन्ति, न भवन्तः प्रेक्षकाः" इत्युक्ते, समाजगामिनः प्रेक्षकाश्चान्य इति प्रत्ययो भवति तद्वत् ॥

एवं स्थिते अन्तरधिकरणं चिन्तान्तरं प्रस्तूयते:—

(मौद्गे चरौ प्राकृतबर्हिस्तरणमन्त्रे हरितपदस्थाने रक्तपदोहाधिकरणम्–२)

## जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥ (सि)

इदं समाम्नायते–'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इति। तत्रेदं विधीयते–'पौण्डरीकाणि बर्हींपि भवन्ति' इति ॥

अस्ति तु प्रकृतौ मन्त्रः–'स्तृणीत बर्हिः परिधत्त वेदिम्। जामि मा हिंसीरमुया शयाना। दर्भैस्तृणीत हरितैस्सुवर्णैः। निष्का इमे यजमानस्य ब्रध्ने' इति। स इह चोदकेन प्राप्तः। तत्र दर्भैरिति जातिशब्दः। हरितैरिति नैमित्तिको गुणशब्दः ॥

तत्र संदिह्यते–किं जातिशब्दो दर्भशब्द ऊहितव्यः? नैमित्तिको हरितशब्द (स्तु) विकारेण प्रयोक्तव्यः? उत उभावपि यथास्थानमूहितव्यौ, जातिशब्दः स्तरणे, नैमित्तिकशब्दः स्तरणसाधनद्रव्ये? इति ॥

तत्र जातिनैमित्तिकं–जातिपदं नैमित्तिकपदञ्च "पौण्डरीकाणि बर्हींपि भवन्ती"त्यत्र विकृतौ यथास्थानं–स्थानमनतिक्रम्य हरितगुणस्थाने

'अरुणैः पुण्डरीकैः स्तृणीत' इत्येवं प्रकारेण ऊहितव्यम्। न तु प्राकृतहरितपदस्याविकारेण प्रयोगः। नात्र हरितगुणविवक्षा, किन्तुस्तरणद्रव्यगुणविवक्षा। अन्यथा ऊहाभावादित्यर्थः ॥ ३ ॥

[1]लिङ्गदर्शनाच्च जातिनैमित्तिकं यथास्थानम् ॥

अन्तरागर्भिणीन्यायेन वर्ण्यमाने, एकवाक्यत्वसिद्ध्यर्थं सूत्रद्वयमेकीकृत्य, अन्यप्रकारेण व्याख्यायते—चकारो हेत्वन्तरसमुच्चयार्थः। जातिनैमित्तिकम्—जातिशब्दो नैमित्तिकगुणशब्दश्च, यथास्थानं ऊह्येत। कुतः? लिंगदर्शनात्—विश्वेषां देवानामुस्राणां छागानां मेषाणां वपानां मेदसोऽनुब्रूहि' इति जातिशब्दानां विकृतावूहितानां दृश्यमानत्वात् जातिशब्दो विकृतावूह्यत एव ॥

अविकार मेकेऽनार्षत्वात् ॥ ४ ॥

एके—पुनराचार्या जातिनैमित्तिकयोश्शब्दयोः अविकारं—अनूहं समामनन्ति। कुतः कारणात्? अनार्षत्वात्—विकारे क्रियमाणे, आर्षस्य प्रकृतिवद्वाक्यस्य मन्त्रवाक्यस्य वा अनार्ष (त्वाच्चोदकबाधो) भवेदित्यर्थः। अविकारे तु प्रकृतिवद्वाक्यमनुगृहीतं भवेदित्यर्थः ॥ ४ ॥

लिङ्गदर्शनाच्च ॥ ५ ॥

आग्नेये वैकृते पशौ—"अग्नये छागस्य वपायामेदसोऽनुब्रूहि" इति विधानात्; अग्नीषोमीये पशौ—"यद्येकं यूपमुपस्पृशेत्, 'एषते वायो!' यदि द्वौ 'एतौ ते वायू'! इति ब्रूयात्, यदि बहून्—'एते ते वायवः!' इति ब्रूयात्" इति विकारलिङ्गदर्शनाच्च नोह्यते जातिशब्दो गुणशब्दश्च ॥ ५ ॥

[2]विकारो वा तदुक्तहेतुत्वात् ॥ ६ ॥

---

१ इदं "ख" नास्ति।

२ विकारो वा तदुक्तहेतुः-क. ख.

वाकारः अनूहपक्षव्यावृत्त्यर्थः । विकार एव स्यात्–ऊह एव स्यात् जातिगुणशब्दयोः । कुतो हेतोः? तदुक्तहेतुत्वात्–अर्थे चाकार्यत्वादिति हेतोः प्रागेव वर्णितत्वादित्यर्थः । अत्र च प्रैषस्य मन्त्रत्वात् मन्त्रस्य च कर्मसमवेतार्थ-प्रकाशकत्वात् वैकृतकर्मसमवेतार्थप्रकाशनपरं शब्दरूपमेवोह्यं स्यात् ॥ ६ ॥

## लिङ्गं मन्त्राचिकीर्षार्थम् ॥ ७ ॥

यद्वर्णितं लिङ्गं, 'अग्नेश्छागस्य वपाया मेदसोऽनुब्रूहि' इति; 'एष ते वायो' इत्यादिरूपं च तत्परिहारार्थमिदं सूत्रम् । त्वदुक्तं लिङ्गं मन्त्रचिकीर्षार्थं–ऊहितस्यामन्त्रत्वाशङ्कायां, ऊहितमपि पदं मन्त्र एव स्यादित्येवमर्थं, न तु विध्यानर्थक्यादिशङ्कावकाशः । अत ऊह्यतेव जातिपदं गुणपदश्च । [1]अथवा प्रकृतावुभयमपि माभूदित्येवमर्थं मन्त्रान्तरोपदेशनं, नान्यथा ॥

ऊहश्च षड्विधः । तद्यथा–१ प्रकृत्यूहः २ लिङ्गोहः ३ वचनोहः ४ प्रकृतिवचनोहः ५ लिङ्गवचनोहः ६ प्रकृतिलिङ्गवचनोहश्च इति ॥

१ प्रकृत्यूहः–'सूर्याय जुष्ट' मिति यथा ॥

२ लिङ्गोहः–'वस्व्यसि रुद्रासि' इत्येकहायनीमन्त्रस्य साण्डे विवत्से–'वसुरसि रुद्रोऽसी'ति यथा ॥

३ वचनोहः–'छागस्य वपाया मेदसः' इत्यस्य विकृतौ प्राजापत्येषु 'छागाना' मित्येवमूहो यथा ॥

४ प्रकृतिवचनोहः–'अग्नये जुष्ट' मित्यस्य 'विश्वेभ्यो देवेभ्यो जुष्ट' मिति यथा ॥

५ लिङ्गवचनोहः–'प्रास्मा अग्निं भरत' इति प्राकृतस्य 'प्राऽऽभ्योऽग्नि' मित्येवं मल्हादिषु यथा ॥

---

१ नियमो वोभयभागित्वात्' इति सूत्रमेकमत्र ग्रन्थान्तरे वर्तते, तद्व्याख्यानरूप एवायं शाबरभाष्यभागोऽत्रापि दृश्यते, सूत्रन्तु नास्ति ।

६ प्रकृतिलिङ्गवचनानामूहः—'आपो देवीश्शुद्धास्स्थ' इति प्रोक्षणीमन्त्रस्य, 'घृतं प्रोक्षणं भवति' इति घृतप्रोक्षणे 'घृत! देव! शुद्धमसि' इत्येवमाकारेणोहः ॥

७ ऊहवदवभाससमानस्सप्तमः;—यथा—सकलस्यैव पदस्याभ्यासः 'एकधा' इति शब्दः कृत्स्नोऽभ्यस्यते ॥

एवं सप्तधा भिन्न ऊह इति ॥ ७ ॥

प्रयोजनन्त्वधिकरणे—अनुष्ठानरूपम्—कोटिभ्यां व्याकृतम् ॥ २ ॥

(यूपस्पर्शाधिकरणम्—३)

## लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन [1]प्रकृते न स्यादभागित्वात् ॥ ८ ॥ (सि)

अग्नीषोमीये [2]पश्चावाम्नायते 'यद्येकं यूपमुपस्पृशेत्' इत्यादि प्राक् लिङ्गत्वेनोपन्यस्तं वाक्यमिहोदाहरणम् ॥

तत्र संदिह्यते—किं लौकिके वैदिके च यूपोपस्पर्शने प्रायश्चित्तम्? उत वैदिके? अथवा लौकिके? इति ॥

तदिदं यूपस्पर्शननिमित्तकं प्रायश्चित्तं लौकिक एव स्पर्शे प्राप्तम्। कुतः कारणात्? दोषसंयोगात्—'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते, यद्यूपमुपस्पृशेत् दुरिष्टं यज्ञस्यामुञ्चते, तस्माद्यूपो नोपस्प्रष्टव्यः' इति दोषसंबन्धबोधक वाक्योपलंभात्। अपवृक्त एव कर्मणि। हिरेवकारार्थे। निमित्तेन—स्पर्शरूपेण निमित्तेन, इदं प्रायश्चित्तं चोद्यते। अथ प्रकृते—प्रक्रान्ते कर्मणि मध्ये यूपस्पर्शने इदं प्रायश्चित्तं न स्यात्। कुतः? अभागित्वात्—यूपोच्छयणाद्यर्थं उपस्पर्शने विहिते, दोषस्य अभागित्वात्, न—लौकिकवैदिकसाधारण्येन—वैदिके वा=इत्येतौ प्रकारौ उपपद्येते। अतो लौकिक एव यूपोपस्पर्शने प्रायश्चित्तम्॥ ८ ॥

---

१ ... ...प्रकृतौ ... ...क. ख. २ पशावाम्नातं इति साधु।

प्रयोजनन्त्वनुष्ठानरूपम्– कोटिभिः प्रख्यापितम् ॥ ३ ॥

(पाशाधिकरणम्–४)

[1]अन्याय्यस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ ९ ॥ (पू)

अग्नीषोमीये पशौ पाशैकत्वाभिधायी मन्त्रः, 'अदितिः पाशं प्रमुमोक्त्वेतं' इति। तथा पाशबहुत्वाभिधायी 'अदितिः पाशान्प्रमुमोक्त्वेतान्' इति। तयोश्च समुच्चयो वक्ष्यते। अस्ति च द्विपशुर्विकृतिविशेषः, 'मैत्रं श्वेतमालभेत वारुणं कृष्णमपाश्चौषधीनाञ्च संधावन्नकामः' इति। तत्र पाशाभिधायिनौ मन्त्रौ चोदकेन प्राप्तौ ॥

तत्र संदिह्यते–किं बहुवचनान्तोऽविकारेण प्रयोक्तव्यः–एकवचनान्तस्य निवृत्तिः? उत बहुवचनान्तो निवर्तेत–एकवचनान्त ऊहितव्यः? उत उभयोरपि प्रवृत्तिः–अभिधानविप्रतिपत्तिश्च? उत एकवचनान्त ऊहितव्यः–बहुवचनान्तो न निवर्तेत? इति ॥

तत्र प्राकृतपाशमन्त्रातिदेशे कर्तव्ये सति अन्याय्यः–प्रकृतौ एकस्मिन्पाशे अन्यायेन प्रवर्तमानः पाशबहुत्वाभिधायी मन्त्रः अविकारेण–अनूहेनैव प्रवर्तेत द्विपशुकेऽपि। तुः एवकारार्थे। कुतो हेतोः? अदृष्टप्रतिघातित्वात्–बहुवचनान्तस्य मन्त्रस्य एकस्मिन्नपि पाशे प्रवृत्तौ अदृष्टप्रतिघातित्वात्–तत्र प्रवृत्तौ व्याघातादर्शनादित्यर्थः। चकारो वक्ष्यमाणसमुच्चयार्थः। बहुवचनान्तस्य पाशमन्त्रस्य तेन ... .... ... ... ... ... ... ... मन्त्रेण अविशेषात्–प्रकृतौ प्रवृत्त्यविशेषादित्यर्थः। अतो बहुवचनान्तस्य अविकारेण प्रवृत्तिः, एकवचनान्तस्य द्विपशुके यागे निवृत्तिश्चोदकानुग्रहायेति ॥ ९ ॥

विकारो वा तदर्थत्वात् ॥ १० ॥

---

१ अन्याय्यस्त्वविकारे ... ... क. ख.

वाकार इमं पक्षं व्यावर्तयति। विकार एव स्यात्पाशैकत्वाभिधायिनः, नतु बहुवचनान्तस्य ... ... ... ... ... ... वचनान्तस्य निवृत्तिरिति। कुतो हेतोः? तदर्थत्वात्—एकवचनान्तस्य ऊहे कृते द्वित्वरूपार्थाभिधायित्वात्, ऊहाभावे यौगपद्यरूपप्रयोगवचनानुग्रहानुपपत्तेरित्यर्थः ॥ १० ॥

अपि त्वन्यायसंबन्धात्प्रकृतिवत्परेष्वपि [1]तथात्वं स्यात् ॥११॥

अपि तुभ्यां अनन्तरपक्षो व्यावर्त्यते। बहुवचनान्तस्य अन्यायसंबन्धात् प्रकृतौ, प्रकृतिवदेव परेष्वपि—द्विपश्वादिविकृतिष्वपि तथात्वं स्यात्—बहुवचनान्तस्याविकारेण प्रयोगः, प्रातिपदिकार्थमात्रस्य बहुवचनान्ते अविवक्षितत्वात्। एकवचनान्तस्य तु, द्वित्वाभिधानार्थं द्विवचनान्तेनोह इत्यर्थः ॥ ११ ॥

[2]यज्ञार्थन्त्वन्याय्यस्याचोदितत्वात् ॥ १२ ॥

तुना अयमपि पक्षो व्यावर्त्यते। यथार्थम्—यथाभिधेयमेव एकवचनान्तस्य विकृतौ द्विवचनान्तत्वेन ऊहः कर्तव्यः, न तु बहुवचनान्तस्य प्रवृत्तिरविकारेण। कुतो हेतोः? अन्याय्यस्य—एकस्मिन्पाशे बहुत्वस्य प्रकृतावार्थिकत्वेन अचोदितत्वात्, आर्थिकस्य चानतिदेशात्, चोदितस्यैवातिदेशात्, बहुवचनान्तस्य प्रकृतावार्थिकत्वात् तस्य बहुवचनान्तस्यानिवृत्तिः। एकवचनान्तस्य तु ऊहेन द्विपशुकविकृतौ प्राप्तिरित्यर्थः ॥ १२ ॥

*प्रयोजनन्त्वनुष्ठानरूपम्—विशदव्याख्यानम् ॥ ४ ॥

---

१ यथार्थं स्यात्। क. ख.

२ यथार्थन्त्वन्यायस्य ... क. ख. अत्रापि व्याख्या तथैव.

*छन्दसि तु यथा दृष्टम् इत्येकमधिकं सूत्रमत्र विद्यते क. ख.

(पाशविकल्पाधिकरणम्—५)

विप्रतिपत्तौ विकल्पस्स्यात् समत्वात् गुणेत्वन्याय कल्पनैकदेशत्वात् ॥ १३ ॥ (सि)

अग्नीषोमीये पशौ पाशमन्त्रयोरेव संदिह्यते—तयोः किमेकत्वाभिधायी प्रकरणे निविशते—बहुत्वाभिधायी प्रकरणादुत्कृष्यते? उत उभावपि प्रकरणमभिनिविशेते? इति ॥

तत्र उभयोर्मन्त्रयोरेकपाशकप्रकृतौ विप्रतिपत्तौ—अर्थविप्रतिपत्तौ सत्यां, उभयोरपि मन्त्रयोर्विकल्प एव स्यात्, नोत्कर्षः। कुतः? समत्वात्—उभयोरपि मन्त्रयोः पाशोन्मोचनरूपस्यार्थस्य समत्वात्। पाशबहुत्वाभिधायिनि मन्त्रे योयं गुणो वर्तते विभक्त्यर्थः, प्रातिपदिकापेक्षया गुणभूते तस्मिन् विभक्त्यर्थे अन्यायकल्पना—अविवक्षितविभक्त्यर्थ कल्पना। कुतः? विभक्त्यर्थस्य प्रातिपदिकार्थैकदेशत्वात्। अतः प्रातिपदिकार्थस्य प्रकृतौ एकपाशे मन्त्रे विद्यमानत्वात्, विभक्त्यर्थस्य बहुत्वमात्रस्याभावात्, तत्राविवक्षा—न तूत्कर्षः, 'युवं हि स्थः स्वर्पती' इतिवत्, 'एते असृग्रमिन्दवः' इतिवच्च नोत्कर्ष इत्यर्थः ॥ १३ ॥

प्रकरणविशेषाच्च ॥ १४ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। अग्नीषोमीय प्रकरणमिति विशेषाच्च प्रातिपदिकानुसारेणैव बहुवचनं नीयते, न विभक्त्यर्थानुसारेण बहुवचनान्तस्य विकृतावुत्कर्ष इति। अनारभ्याधीतानामपि प्रकृत्यर्थत्वेन अनारभ्याधीतस्य मन्त्रस्य कथमविरोधे सति विकृतावुत्कर्ष इति ॥ १४ ॥

[1]उत्कर्षो वा द्वियज्ञवत् ॥ १५ ॥

१ ग्रन्थान्तरे इदं सूत्रं नास्ति। शाबरभाष्यस्थेयं पङ्क्तिः—अत्र सूत्रीकृता।

'युवं हि स्थः स्वर्पती' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' इतिवत् प्रकृतौ बहुवचनान्तस्य पाशमन्त्रस्याननुप्रवेश इति यदुक्तं पूर्वपक्षिणा, तदनुवादार्थमिदं सूत्रम् ॥ १५ ॥

## अर्थाभावात्तु नैवं स्यादगुणमात्रमितरत् ॥ १६ ॥

तुना अनन्तरोक्तं व्यावर्त्यते। युक्तं तत्र 'युवं हि स्थः' इति मन्त्रस्य, 'एते असृग्र' मित्यस्य च प्रकृतौ अर्थाभावात् विकृतावुत्कर्षनयनम्। इह तु नैवमुत्कर्षस्स्यात्; यतः कारणात् इतरत विभक्त्यर्थरूपं गुणमात्रम्। अतः प्रातिपदिकार्थस्य प्राधान्यात् विभक्त्यर्थस्य चाप्राधान्यात् तदनुसारेणैव विभक्त्यर्थो नीयते, न बहुवचनानुसारेण प्रातिपदिकस्य विकृतिविशेषेपूत्कर्ष इति ॥ १६ ॥

## [1]द्यावापृथिव्योस्तथेति चेत् ॥ १७ ॥

द्यावापृथिव्योः—पौष्ण सावित्र सारस्वत द्यावापृथिव्याद्यनुमन्त्रणानामित्यर्थः। दर्शपूर्णमासयोराम्नातान्यपि तत्रानन्वयात् विकृतिविशेषेष्वभिनिविशन्ते, तथा बहुवचनान्तस्यापि पाशमन्त्रस्य उत्कर्ष एव स्यात् इति तत्परिहारार्थं तदनुवादः ॥ १७ ॥

## नोत्पत्तिशब्दत्वात् ॥ १८ ॥

नैतदनुमन्त्रणतुल्यम्। उत्पत्तिशब्दात्—उत्पत्तिविधेरेव एवमादीनां प्रकृत्यनुप्रवेशो वक्तव्यः। दर्शपूर्णमासयोर्द्यावापृथिव्युत्पत्तिवचनाभावात्, तदभावे च प्रकृतावनन्वयात् युक्तः प्रकृतितोऽन्यत्रोत्कर्षः। इह तु न तथेत्यर्थः ॥ १८ ॥

प्रयोजनन्त्वनुष्ठानरूपम्— निर्णीतप्रायमिति कृत्वा न पुनर्लिख्यते ॥ ५ ॥

---

१ द्यावोस्तथेति चेत्। क. ख.

( दर्शपूर्णमासप्रयोर्द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्यानूहाधिकरणम्—पत्न्यधिकरणम्—६ )

## अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत ॥ १९ ॥ ( सि )

दर्शपूर्णमासयोरामनन्ति— 'प्रोक्षणीरासादय' 'इध्माबर्हिरुपसादय' 'स्रुवश्च स्रुचश्च संमृड्ढि' "पत्नीं संनह्य" 'आज्येनोदेहि' इति। सच, एकपत्नीक द्विपत्नीकबहुपत्नीकप्रयोगे चानुप्रवेशः पाशाधिकरणेनैव निर्णीतः ॥

इदमिदानीं संदिह्यते— किं द्विपत्नीक प्रयोगे पत्नीशब्द ऊहितव्यः? उत नोहितव्यः? इति ॥

तत्र पत्न्येकत्वप्रतिपादके पत्नीशब्दे अपूर्वे— अप्रकृतिपूर्वे [1]कर्मणि यदा द्विबहुपत्नीको यजमानो भवति, तदानीमपि अविकार एव मन्त्रस्य, न तूहः 'पत्न्यौ' 'पत्नीः' इति। कुतः? अप्रदेशात्— एकपत्नीक प्रयोगात् द्विपत्नीक प्रयोगे धर्मातिदेशाभावात, पाशाधिकरणवदेव प्रातिपदिकार्थमात्रस्य विवक्षितत्वात् द्विबहुपत्नीकेऽपि प्रयोगे अविकृत एव मन्त्रः प्रतीयेत, नान्यथा ॥१९॥

प्रयोजनन्त्वनुष्ठानरूपम्— निरूपितप्रायम् ॥ ६ ॥

( विकृतावपि द्विबहुपत्नीक प्रयोगे पत्नीमन्त्रस्यानूहाधिकरणम्—७ )

## विकृतौ चापि तद्वचनात् ॥ २० ॥ ( सि )

किं द्विबहुपत्नीके विकृतिविशेषे पत्नीमन्त्र ऊहितव्यः? उत न? इति संदेहे सति:—

'पत्नीं' इति द्वितीयैकवचनान्तस्य पत्नीशब्दस्य, विकृतौ— द्विबहुपत्नीकाधिकारे कर्मणि अविकार एव स्यात्, नोह इत्यर्थः। कुतः कारणात्? तद्वचनात्— तद्वचनेन तादृशाकारस्य प्राकृतस्य मन्त्रस्य प्रापणात्। अतो विकृतावप्यनूहो मन्त्रस्य ॥ २० ॥

प्रयोजनन्त्वनुष्ठानरूपम्— विशदमिति न व्याख्यायते ॥ ७ ॥

---

१ 'मन्त्रे' इति मातृकायाम्। तद्भाष्यानुसारेण 'कर्मणि' इति लिखितमस्माभिः।

(पशुधर्मसामानविध्यपक्षे 'प्रास्मै' इत्यध्रिगुप्रैषस्य अविकाराधिकरणम् - ८)

## अध्रिगुस्सवनीयेषु तद्वत्समानविधानाश्चेत ॥ २१ ॥

अग्नीषोमीये पशौ अध्रिगुप्रैषे समाम्नायते – 'प्रास्मा अग्निं भरत, स्तृणीत वर्हिः' इत्यादि। अग्नीषोमीय सवनीयादीनां पशूनां समानविधानत्वे चिन्त्यते –

किमध्रिगौ 'अस्मै' इत्यादिपदमूहितव्यम्? उत नोहितव्यम्? इति।

सवनीयादिपशुः अग्नीषोमीयसमानविधानश्चेत् इति कृत्वा चिन्त्यते।

सवनीयेषु वहुपशुषु अध्रिगुः अविकृत एव 'प्रास्मै' इति प्रयोक्तव्यः, नतु 'प्रैम्य' इति। तत्र दृष्टान्तः – तद्वदिति – पत्न्यधिकरणवदिति। यथा पत्न्यधिकरणे पूर्वपक्षे ऊहो द्विवहुपत्नीक प्रयोगे, यथा च सिद्धान्ते अनूहः, तद्वदिति ॥ २१ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – कृत्वा चिन्तायामपि प्राग्वदनुसंधेयम् ॥ ८ ॥

(प्रतिनिध्यधिकरणम् – ९)

## प्रतिनिधौ चाविकारात् ॥ २२ ॥ (सि)

प्रतिनिधौ संदिह्यते – यदा व्रीहिष्वपचरत्सु नीवाराः प्रतिनिधीयन्ते, तदा किं नीवारेषु 'स्योनन्ते' इति मन्त्रगतव्रीहिशब्दस्य ऊहेन प्रयोगः? उत अविकारेण प्रयोगः? इति ॥

तत्र श्रुतव्रीहिद्रव्ये अपचरति नीवारागमे प्रतिनिधौ कर्तव्ये सति, नीवारेष्वपि व्रीह्यवयव .... ... ... ... ... क्तत्वात् अविकारात् – अनूहितात् व्रीहिपदयुक्तादेव मन्त्रात् विकृतौ प्रयोगः। अयमर्थः – नीवारोपादानेऽपि नीवारेष्वपि व्रीह्यवयवानां त्वगादीनां विद्यमानत्वात् ... ... ... ... ... व्रीहि पदस्य इति ॥ २२ ॥

## अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ॥ २३ ॥

न त्वेतदस्त्यनूह इति । एवमादिषु स्थलेष्वनूहो भवेत् प्रसिद्धद्रव्यस्य अनाम्नानाद्वा, आम्नानेऽपि इतरस्य द्रव्यस्य अभावाद्वा अशब्दत्वम्–अनूहः स्यात् । इह तु व्रीहिपदस्य व्रीहिवाचकस्य प्राकृतमन्त्रे विद्यमानत्वात् नीवाराणां प्रकाश ... ... मन्त्रेण ... ... ण नसंभवतीति कृत्वा ऊह्यत एव नीवारपदमिति ॥ २३ ॥

## तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् ॥ २४ ॥

वाकारेण ऊहपक्षो व्यावर्त्यते । नीवाराणां तादर्थ्यात्–व्रीह्यर्थत्वात्–व्रीहिकार्यापन्नत्वात्–तदाख्यं–व्रीह्याख्यं स्यात् नीवारद्रव्यम् । कुतो हेतोः ? संस्कारैः–प्रोक्षणादिभिः नीवाराणामपि अविशिष्टत्वात् । अतो नीवारेषु व्रीहिपदानूह इति ॥ २४ ॥

## उक्तञ्च तत्त्वमस्य ॥ २५ ॥

चकारो ह्युक्तसमुच्चयार्थः । अस्य–नीवारद्रव्यस्य तत्त्वम्–व्रीहिशब्दवाच्यत्वं [1]षष्ठ एव उक्तं इत्यर्थः ॥ २५ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–ऊहानूहभेदेन प्रयोगे स्पष्टम् ॥ ९ ॥

(पशुगणे अध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचक चक्षुरादिपदानामनूहाधिकरणम्–१०)

## संसर्गिषु चार्थस्यास्थित परिमाणत्वात् ॥ २६ ॥ (सि)

अध्रिगुप्रैषगताः 'सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतात्' इत्यादयः चक्षुरादिशब्दाः, किं द्विपश्वादिषु पशुगणेषु ऊहितव्याः ? उत न ? इति संदेहे–

तत्र अग्नीषोमीये पश्वैक्यादिन्द्रियैक्याद्वा अविकारेण चक्षुरादिशब्दानामनुष्ठानं कृतम् । द्विपश्वादिषु चक्षुरादीन्द्रियभेदात् ऊहाशङ्कायाम्, संसर्गिषु च गोलकसंसर्गिषु इन्द्रियेषु च, इन्द्रियवाचकपदेषु अनूहस्स्यात् । कुतो हेतोः ? अर्थस्य–निष्क्रान्तेन्द्रियसंसर्गादिरूपस्यार्थस्य संज्ञपनानन्तरं नानादेशभिन्न-

---

१ 'सामान्यं तच्चिकीर्षा' पू. मी. द. ६-३-११ ।

पानीयघृततैलस्तोकमेलनवत् आस्थितपरिमाणत्वात्–आस्थितं सिद्धं, परिमाणं एकेन्द्रिय ... रूपं येषां तानि आस्थितपरिमाणानि, तत्त्वात्। यथा ए.का पवर-(काव)स्थितनानादीपानां प्रभा एकैव भवति, एवं पशुभेदेन भिन्नानां च (क्षुगदीनां ... .... ...) नात् प्रागूर्ध्वश्च ए ... तैवेत्यर्थः। अतो ... ... ... ... ... .. ... ... ... नां द्विबहुवचनान्तत्वेनोहः ॥ २६ ॥

लिङ्गदर्शनाच्च ॥ २७ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। 'न माता वर्धते न पिता, न नाभिः प्राणो हि सः ... ... ... ... शब्दवाच्येन्द्रियाणां सिद्धानूहरूप लिङ्गदर्शनाच्च तत्प्राणस्यापीन्द्रियत्वेन संसर्गित्वेन चक्षुराद्यनूहः ॥ २७ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–प्रद्योतितं भेदेन ॥ १० ॥

(एकधाधिकरणम्–११)

एकधेत्येकसंयोगादभ्यासेनाभिधानं स्या[1]दसर्वविषयत्वात् ॥ २८ ॥ (सि)

अग्नीषोमीये पशौ अध्रिगुप्रैषे समाम्नायते–'एकधास्य त्वचमाच्छयतात्' इति। तद्विकृतिषु द्विपश्वादिषु चोदकेन प्राप्तम् ॥

तत्र संदिह्यते– किं विकारेण प्रयोक्तव्यः? उत अभ्यसितव्यः? इति ॥

तत्र एकधेत्यस्य प्रकृतौ एकसंयोगात्–एकपशुसंबन्धात्, विकृतौ अनभ्यस्तस्य एकधा शब्दस्य असर्वविषयत्वात्, विकृतावनेकप्रयत्नसाध्यत्वेन त्वक्छेदस्यासर्वप्रतिपादकत्वात् अभ्यासेनैव बहुपशुषु अभिधानं एकधाशब्दस्येति। अतः 'एकधा एकधा एकधा' इत्यूह्यम् ॥ २८ ॥

अविकारो वा बहूनामे[2]ककर्मत्वात् ॥ २९ ॥

---

१ असर्वविषयत्वात् इतीदं नास्ति क. ख.

२ ... ... मेककर्मवत् क. ख.

वाकारः पक्षं व्यावर्तयति प्रागुक्तमूहरूपम्। अविकार एव—अनूह्यस्स्यात्। कुतः? विकृतिषु बहूनां त्वचां एककर्मत्वात्—एकप्रयत्नसाध्यत्वात्। यथा 'एकधा गाः पाययति' इत्यत्र एकप्रयत्नेनैव गवां जलपानं प्रतीयते व्यक्तिभेदेऽपि, तद्वदत्रापि पशुभेदेऽपि एकधेत्यस्य अध्रिगावनूह एव बहुपशुकेऽपि कर्मणि ॥ २९ ॥

[1]सहत्वञ्चैककर्म्ये तदेकत्वात् त्वचोऽनभिप्रेतं तत्प्रकृतित्वात् परेष्वभ्यासेन विवृद्धावभिधानं स्यात् ॥ ३० ॥

तुना अनूहपक्षो व्यावर्त्यते। ऐककर्म्ये—एककालीन कर्मानुष्ठाने कर्तव्ये सति अनुष्ठेयानां सहत्वं आवश्यकम्। तदेकधाशब्दवाच्यं त्वच एकत्वात्, एकस्यां त्वचि सहत्वासम्भवात् अनभिप्रेतं—अविवक्षितम्, उत्तरासां ततीनान्तु तत्प्रकृतित्वात्—तत्प्रकृतिकत्वात्—परेषु पशुषु विवृद्धौ—पशुवृद्धौ सत्यां, एकधाशब्दस्य अभ्यासेनैवाभिधानं स्यात्, न अनभ्यासे—इत्यर्थः ॥ ३० ॥

प्रयोजनन्त्वनुष्ठानरूपम्—व्याख्यातप्रायम् ॥ ११ ॥

(मेधपत्यधिकरणम्—१२)

मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् [2]तस्यान्याय्यनिगदत्वात् सर्वत्रैवाविकारस्स्यात् ॥ ३१ ॥ (पू)

ज्योतिष्टोमे अग्नीषोमीये पशौ अध्रिगुप्रैषे (मेधपतिशब्दः श्रूयते)। सच ऐतरेयिणां शाखायां द्विवचनान्तः, इतरेषान्तु एकवन्निगदः ॥

तयोर्मन्त्रयोः विकृतिप्राप्तौ संदिह्यते—द्विपश्वादिषु वैकृतेषु किमविकारेणेतरश्चेतरश्च प्रयोक्तव्यः? उत स्वामिपर ऊहः कर्तव्यः? उत देवपरः? इति ॥

१ सहत्वन्त्वैकध्यं स्यादेकत्वात ... ... स्यात् क. सहत्वञ्चैकध्यं स्यादेकत्वात् ... ... स्यात् ख. अत्रापि व्याख्यायां 'तुः' दृश्यते सूत्रेतु न।

२ ... ... तस्य चान्याय ... ... क. ख.

तत्र मेधपतित्वं—पशुपतित्वम्, स्वामिदेवतस्य—स्वामिनो यजमानस्य अग्नीषोमदेवता … … … … … संप्रदानत्वेन देवतायाः पशुं प्रति प्राधान्यम्। तद्दातृत्वेन च यजमानस्य प्राधान्यम्। कुतः? अनयोः स्वामिदेवतयोः पशुं प्रति पतित्वसमवायात्, पतिशब्दस्य च सर्वत्र आधिपत्ययोगे प्रयुक्तत्वात्। एवं प्रकृतौ स्थिते सति, प्रकृतावुभयोरपि मन्त्रयोरविवक्षितैकत्वेन विवक्षितद्वित्वेन च अन्यायत्वनिगदत्वात्, सर्वत्र विकृतिषु द्विपश्वादिकासु द्वयोरपि मन्त्रयोरतिदिष्टयोः अविकार एव स्यात्, न तु बहुयजमानके बहुदेवत्ये चोह इत्युभयोरपि मन्त्रयोर्देवतापरत्वे यजमानपरत्वे च विकृतिविशेषेष्वनूह इति। ३१॥

## अपि वा [1]द्विसमवायेऽर्थान्यत्वे यथासंख्यं प्रयोगस्स्यात् ॥ ३२ ॥

अपिवेत्यनेन, उभयोरप्युभयार्थत्वमित्ययं पक्षो व्यावर्त्यते। द्विसमवाये—द्वयोः एकवन्निगदद्विवन्निगदयोः समवाये—संसर्गे सति विकृतौ अर्थान्यत्वे—बहुत्वादिरूपार्थान्यत्वे सति, उभयोर्मन्त्रयोः यथासंख्यम्—यथाक्रमं—बहुदेवत्ये पशौ द्विवन्निगदस्य बहुवचनान्तत्वेनोहः, एकवन्निगदस्य तु बहुयजमानके कर्मणि बहुवचनान्तत्वेनोहः इति व्यवस्थितौ मन्त्रौ। न तु द्वावप्युभयार्थावित्यर्थः॥ ३२॥

## स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् [2]द्वित्वे पत्न्यां द्वितीयशब्दः स्यात् ॥ ३३ ॥

वाकारः स्वामिदेवतयोरुभयोर्वाचको मेधपतिशब्द इत्येतं पक्षं व्यावर्तयति। स्वामिनः—यजमानस्यैव वाचको मेधपतिशब्दः। कुतः? ऐकशब्द्यात्—मेधपतिशब्दस्य एकद्विवचनान्तस्य एकत्वेन एकार्थत्वात्। देवतापरतायां एकवचनान्ते मन्त्रे वर्ण्यमानायां एकपशुदेवताकं क्रतुं प्रति तस्योत्कर्ष एव स्यात्।

---

१ अपि वा द्विसमवायोऽर्थान्यत्वे … क. ख.

२ इदं क. ख. नास्ति।

उभयपरत्वे च 'मेधपतये योमेध' इत्यादिवचनव्यक्तिरूपवाक्यभेदप्रसङ्गात्, द्विवचनान्ते मेधपतिभ्यामिति द्वित्वे वर्णयितव्ये पत्न्या सह द्वितीयशब्दः स्यात् । अतः प्रकृतौ द्विवचनान्तस्यापि समवेतार्थत्वात् विकृतौ स्वामिपरत्वेन बहुत्वे ... ... ... .... .... ... ॥ ३३ ॥

## देवता तु तदाशीष्ट्वात्संप्राप्तत्वात्स्वामिन्यनर्थिका स्यात् ॥ ३४ ॥ (सि)

तुः एतमपि पक्षं व्यावर्तयति । देवतैव मेधपतिशब्दवाच्या, न स्वामी। कुतो हेतोः? तदाशीष्ट्वात्—तत्र पशौ आशी ... ... ... ... ... ... देवतासम्बन्धस्यैव आशासनीयत्वात् । तत्र पशौ देवतासम्बन्धस्याश्रुतित्वात् तदाशासनमुचितम्। स्वामिनि तु, मेधसंबन्धस्य प्राप्तत्वात् तत्परं वचनमप्रयोजनोपदर्शकत्वेनादृष्टार्थत्वा दनर्थकं स्यात्—अप्रवृत्तिविशेषकरं स्यात्। अतो देवतापर एव मेधपतिशब्दः। विकृतिषु द्विबहुपशुदेवतासूह्यते देवतापरत्वेन मेधपतिशब्द इत्यर्थः। ३४ ॥

## उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् ॥ ३५ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। तस्मिन्—यजमाने, पतित्वम्—मेधपतित्वम्—पशुपतित्वम्, भक्त्या स्यात्—भाक्तमेव स्यात्—गौणं स्यादित्यर्थः। कुतः कारणात्? उत्सर्गात्—पशोर्यजमानकर्तृकोत्सर्गात्। उत्सृज्यमानं द्रव्यं प्रति उत्स्रष्टुः प्राधान्यमिति कृत्वा यजमाने मेधपतित्वं भाक्तं, नतु शाक्तम्॥ ३५ ॥

## उत्कृष्येतैकसंयुक्तो द्विदेवतेऽसंभवात् ॥ ३६ ॥

यदुक्तं देवतापरत्वे एकवचनान्तस्योत्कर्षो विकृतावेकपशुके स्यात्, द्विदेवते प्रकृतावेकवचनान्तस्यानन्वयादिति, तदनुभाषणार्थम्॥ ३६ ॥

## [1]एकार्थसमवायात्तल्लक्षणत्वात् ॥ ३७ ॥

एकवचनान्तमपि मेधपतिपदं प्रकृतावेवान्वेति । कथम्? एकार्थसमवायात्—देवतारूपे एकस्मिन्नर्थे एकवचनान्तस्य समवायात् । कुतः? अग्नीषोमयोस्समुदायरूपदेवतालक्षणार्थत्वात्, समुदायस्यैव प्राधान्यात्, तस्य चैकत्वात् तत्परमेकवचनान्तं मेधपतिपदमिति न स्वामिपरमित्यर्थः ॥ ३७ ॥

## संसर्गित्वाच्च तस्मात्तेन विकल्पस्स्यात् ॥ ३८ ॥

चकारः परिहारान्तरार्थः । उभयोरप्यग्नीषोमयोः संसृष्टत्वेन संसृष्टयोरेव हविर्भोक्तृत्वेन देवतात्वात् । तस्य चैकत्वम् । तस्मात्तेन—एकवचनान्तेन मेधपतिपदेन द्विवचनान्तस्य मेधपतिशब्दस्य प्रकृतौ विकल्प एव स्यात् । यदा द्वयं प्रकृतौ देवता, तदा द्वित्वोपपत्तिः । यदा समुदायः, तदा एकत्वोपपत्तिरिति, एवं विकल्पो भविष्यति ॥ ३८ ॥

## एकत्वेऽपि गुणानपायात् ॥ ३९ ॥

अपिः अभ्युपगमवादे । मेधपतिपदे एकवचनान्ते एकत्वे प्रतीयमानेऽपि गुणानपायात्—प्रधानरूपप्रातिपदिकार्थमात्रस्य विवक्षितत्वेऽपि, एकत्वादिरूपस्य गुणस्य अनपायात्—अनपक्रमणात् । प्रातिपदिकार्थप्राधान्येऽपि वचनं प्रतीयते परं, न तु विवक्षितमित्यर्थः । तस्माद्देवतापरमेव मेधपतिपदम् । तच्च विकृतिषूह्यत इत्यर्थः ॥ ३९ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—प्रद्योतितं युक्तिभिरिति ॥ १२ ॥

(बहुदेवताधिकरणम्—१३)

## [2]नियमो वा बहुदेवते विकारस्स्यात् ॥ ४० ॥ (१)

---

१ एकस्तु समवायात्तस्य तल्लक्षणत्वात्—क. ख.

२ नियमो बहुदेवते विकारस्स्यात् क. ख. अत्रापि व्याख्या तथैव ।

अस्ति बहुदेवतः पशुः। 'स एतामविं वशामादित्येभ्यः कामायालभेत' इति। तथा वैश्वदेवं [1]धूम्रललाममालभेत' इति। अस्ति च प्रकृतौ एकवन्निगदो द्विवन्निगदश्च मेधपतिशब्दः, अत्र च बहुदेवत्ये चोदकेन प्राप्तः॥

तत्र संदिह्यते—किं द्विवन्निगद ऊहितव्यः, एकवन्निगदो निवर्तते? उत उभावपि विकल्प्यमानौ परस्परेण निविशेयाताम्? इति॥

तत्र ईदृशे बहुदेवते पशौ द्विवचनान्तस्य मेधपतिशब्दस्य बहुवचनान्तत्वेन विकारः—ऊहः स्यात्। प्रकृतौ द्वित्वस्य देवतागतस्य विद्यमानत्वेन समवेतार्थत्वात्। एकवचनान्तन्तु मेधपतिपदं निवर्तेत इति नियमः प्रकृतावसमवेतत्वादिति। अतो बहुवचनान्ते ऊहः। ४०॥

## विकल्पो वा प्रकृतिवत्॥ ४१ (सि)

वाकारः पूर्वपक्षं व्यावर्तयति। विकल्प एव स्यात् उभयोरेकवचनान्त द्विवचनान्तयोर्मन्त्रयोः, नत्वेकवन्निगदस्य निवृत्तिरितरस्य प्रवृत्तिरिति। प्रकृतिवत् इति। यथा प्रकृतौ द्विवन्निगदैकवन्निगदयोः गणाद्यभिप्रायेण समवेतत्वात्, गणस्यैव देवतात्वेन तयोर्विकल्पेनानुष्ठानम्, एवमत्रापि. नान्यतरनिवृत्तिरित्यर्थः। अतो विकल्पेनोभयोर्विकृतावनुष्ठानमिति॥ ४१॥

प्रयोजनन्त्वनुष्ठानरूपम्—विशदतरं पक्षयोः।' १३॥

(अर्थान्तराधिकरणम्—१४)

## अर्थान्तरे विकारस्स्याद्देवतापृथक्त्वा[2]देकस्य समवायात् स्यात्॥ ४२॥ (सि)

अस्त्येकादशिनी, 'प्रैवाग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतस्सौम्येन दधाति प्रजनयति पौष्णेन बार्हस्पत्यो भवति' इत्यादिः। अस्ति च

१ ... धूम्रमालभेत क. ख. २ .... एकाभिसमवायात्स्यात् क. ख.

प्रकृतावग्नीषोमीये एकवन्निगदो द्विवन्निगदश्च मेधपतिशब्दः । स इह चोदकेन प्राप्तः ॥

तत्र संदिह्यते — किमनयोर्विकल्पेनानुष्ठानं मन्त्रयोः ? उत ऊहेन ? इति ॥

तत्र अर्थान्तरे — पृथग्भिन्नदेवत्ये कर्मणि, द्विवन्निगदस्य विकृतौ ऊहः स्यात्, न तु प्राग्वदुभयोरविकृतयोर्विकल्पेनानुष्ठानमिति । कुतः कारणात् ? देवतापृथक्त्वात् — एकादशिन्यां गणसंसर्गित्वाद्यभावेन देवताना(मपि) पृथक्त्वात् । एकवचनान्तस्य तु निवृत्तिस्स्यात् । कुतः ? एकधा समवायात् — गणसंसर्गित्वाद्यभावेन एकवन्निगदस्य विकृतावनन्वयात् । प्रभिन्नदेवताविषयस्य द्विवन्निगदस्यैव ऊहेन बहुदेवत्येषु प्रवृत्तिरिति ॥ ४२ ॥

प्रयोजनं कण्ठरवेणैवोक्तम् ॥ १४ ॥

इति श्रीजैमिनिसूत्रवृत्तौ फलवत्यां नवमस्याध्यायस्य तृतीयः पादः

---

## नवमस्याध्यायस्य चतुर्थः पादः

(वङ्क्रयधिकरणम् — १)

### षड्विंशति रभ्यासेन पशुगणे [१]तत्प्रकृतित्वाद्गणस्य विभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसंबन्धोऽविकारान्न समासस्स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥ (पू)

ज्योतिष्टोमे अग्नीषोमीये पशौ अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इति श्रुतम् । तच्च चोदकेन द्विपश्वादिपशुगणेषु प्राप्तम् ॥

तत्र संदिह्यते — किं षड्विंशतिशब्दोऽभ्यसितव्यः ? किमविकारेण

---

१ ... ... तत्प्रकृतित्वाद्गुणस्य प्रविभक्तत्वात् ... क. ... ... ... द्गणस्य ... ... ... ख.

प्रयोक्तव्यः? किं वचनमात्रमूहितव्यम्? अथास्य पदाभ्यासः? उत समस्य वचनम्? इति ॥

तत्र पशुगणे – मैत्रं श्वेतमालभेत वारुणं कृष्णमपाञ्चौषधीनाञ्च संधावन्नकामः' इत्यादिके पशुगणे, षड्विंशतिः – षड्विंशतिशब्दः अभ्यासेन–आवृत्त्यैव, द्विपशुके द्विरावृत्तिः – त्रिपशुके त्रिरावृत्तिः–चतुष्पशुके चतुरावृत्तिः इत्येवंरूपाभ्यासेनैव प्रवर्तेत । कुतः? तत्प्रकृतित्वात् – अग्नीषोमीय प्रकृतिकत्वात् द्विपश्वादिगणस्य, गुणस्य–षड्विंशतिसंख्यारूपस्य च प्रतिपशु विभक्तत्वात् । अतोऽभ्यासेनैवानुष्ठानम् । अविकारे हि क्रियमाणे, वङ्क्रीणां प्रतिपशु प्रभिन्नत्वेन प्रतीयमानानां अकात्स्न्येनाभिसंबन्धो भवेत् । कृत्स्नवङ्क्रयभिधानं न स्यात् । अतोऽभ्यासे क्रियमाणे, आर्षस्य अविकारात्–आवृत्तिमात्रत्वेन स्वरूपप्रच्युत्यभावात्, समस्य वङ्क्रिकात्स्न्याभिधाने च आर्षबाधात् न समासस्स्यात् । कुतो हेतोः? समस्य वचनेऽपि कृते सर्वाभिः वङ्क्रीभिः एकैकस्य असंयोगात्, कृत्स्नसंबन्धे च प्रतिपशु असमांशस्यापि कदाचित्संभवात् असंबन्ध एव स्यात्, तस्मान्न समस्य वचनम् । किन्तु षड्विंशतिपदाभ्यास एव ॥ १ ॥

## अभ्यासेऽपि तथेति चेत् ॥ २ ॥

इति चेत् पश्यसि, समस्य वचने अप्राकृतं कृतं भवति, आर्षस्य बाधा चेति, तर्हि अभ्यासेऽपि क्रियमाणे अप्राकृतमेव कृतं स्यात्, प्रकृतावनभ्यस्तत्वात्षड्विंशतिपदस्येति । अतो नाभ्यास इत्यर्थः ॥ २ ॥

## न गुणत्वादकृतत्वाच्च ॥ ३ ॥

नैतदेवमभ्यासेऽप्यप्राकृतं प्रसज्येतेति । कुतः? अभ्यासरूपस्य विकारस्य गुणत्वात् – षड्विंशतिपदं प्रति गुणविकारो न दोषाय । त्वत्पक्षे पुनः समस्य वचने प्रधानषड्विंशतिबाधेन आर्षस्य अकृतत्वात् चोदकबाधेनाप्राकृतं कृतं स्यात्, न तादृशो मत्पक्षे दोष इति ॥ ३ ॥

## समासेऽपि तथेति चेत् ॥ ४ ॥

इति चेत् पश्यसि, अभ्यासे सति चोदकानुग्रह इति, तर्हि समासेऽपि—(समस्यवच)नेऽपि वङ्क्रिकात्स्न्याभिधानात्, वङ्क्रिकात्स्न्याभिधानस्य च प्राकृतत्वात् समस्यैव ब्रूयान्नाभ्यासेन। तस्मात्समस्य वचनम् ॥ ४ ॥

[1]न संभवात् ॥ ५ ॥

नैतदेवं समस्य वचनमिति। कुतः? अभ्यासे सति प्राप्तपात्रप्रापकात् प्रयोगवचनात् बलवतः धर्मोत्पादकस्य धर्मप्रापकस्य च चोदकस्य समस्यवचनेऽसंभवात् अभ्यासे च संभवात् अभ्यसितव्यषड्विंशतिशब्द इति ॥ ५ ॥

स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। प्रकृतौ स्वाभिरेव वङ्क्रीभिः षड्विंशतिसंख्याकाभिः वचनं कृतम्। तदविकारार्थं इह पशुगणेऽपि तथैव स्यात्—अविकृतषड्विंशतिपदाभ्यास एव स्यात्, आर्पानुग्रहात् इत्यर्थः ॥ ६ ॥

वङ्क्रीणान्तु प्रधानत्वात्समासेनाभिधानं स्यात्प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥ (सि)

तुना अभ्यासपक्षो व्यावर्त्यते। समासेन—समस्यैव अभिधानं वङ्क्रीणां स्यात्, प्रधानत्वाद्वङ्क्रीणाम्, षड्विंशतिर्वङ्क्रय इति वङ्क्रीणामुद्धरिष्यमाणानां प्राधान्यात्, पशुवङ्क्रिसंबन्धे च अदृष्टप्रयोजनत्वात् प्राधान्यं वङ्क्रीणाम्। कुतः कारणात्? अध्रिगोः—अध्रिगुसंप्रेषस्य तदर्थत्वात्, 'ता अनुष्ठ्योच्च्यावयतात्' इति आनुपूर्व्युद्धरणप्रतिपादनपरस्य तदर्थत्वात्—वङ्क्र्यर्थत्वात्, पशुवङ्क्रिसंबन्धे च आनुपूर्व्युद्धरणस्य वङ्क्रिविषयकस्य पशावभावात्। इयत्तामात्रस्य प्राकृतत्वात् वङ्क्रीयत्ता समस्य वक्तव्येत्यर्थः। एवमभ्यासपक्षसमासपक्षौ वर्णितौ ॥ ७ ॥

---

१ नासंभवात क ख.

[1]तासाञ्च कार्यवचनात् ॥ ८ ॥

चकारोऽयं उक्तार्थे समुच्चयार्थः । कात्स्न्यें वङ्क्रीणां, 'ता अनुष्ठ्योच्च्यावयतात्' इति प्रतिनिर्दिष्टत्वेन तासामेव कार्यसंबन्धात् । पशुसंबन्धे तु प्राग्वददृष्टप्रयोजनत्वात्समस्य वचनम् ॥ ८ ॥

अपि त्वसन्निपातित्वात्पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥

अपि त्विति समस्यवचनं व्यावर्तयति अध्रिगोर्मन्त्रान्त सन्निपातित्वाभावेन अकरणत्वात्, अकरणत्वे च अनुष्ठेयार्थप्रकाशनासमर्थत्वात्, अनुष्ठेयार्थाप्रकाशकत्वे च पत्नीवत्—दार्शपूर्णमासिकपत्नीशब्दवत् अनभिप्रेतस्वसंख्यत्वात् आम्नतेनैव षड्विंशतिशब्देन अविकृतेन अभिधानं वङ्क्रीणां स्यात् । न तु विकृतौ समस्यवचनं वङ्क्रीणाम् । समस्यवचने च वङ्क्रीणां प्रतिपशु विप्रतिपन्नरूपत्वात् न समासः, किन्त्वविकारेण ॥ ९ ॥

विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ १० ॥

तुना अनूहपक्षो व्यावर्त्यते । विकारः—वचनोहरूपो विकारः स्यात्, षट्विंशती—षट्विंशतयः—इति । कुतः? प्रदेशत्वात्—षट्विंशतिपदस्य एकवचनान्तस्य प्रकृतौ विवक्षितत्वेन बहुपशुषु अतिदेशप्रदेशत्वात् । अतो वङ्क्रीयत्तावाचकं वचनमूहितव्यम् । तत्र दृष्टान्तः—यजमानवत्—इति । यथा—'अयं यजमानः आयुराशास्ते' इत्यत्र दर्शपूर्णमासयोरेकयजमाने समवेतार्थत्वेन एकवचनस्य, द्विबहुयजमानकासु विकृतिषु ऊहेनैव यजमानशब्दः प्रयुज्यते, तद्वदिहापि वङ्क्रीयत्तायाः प्राकृतत्वात् विकृतावपि तदियत्ताया आवश्यकत्वात् वचनोहेनैव वङ्क्रीयत्ता वर्णनीया ॥ १० ॥

---

१ तासाञ्च कृत्स्नवचनात् क. ख.

## अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥

अव्यवहितपक्षे दूषणम् । यदुक्तं पत्न्यामिवाविकृतमेव षड्विंशतिपदं स्यादिति, तन्न । कुतः? पत्न्यां तथा स्यात्—पत्नीपदे तथा अविकारः स्यात् । कुतो हेतोः? अपूर्वत्वात्—द्विबहुपत्नीके दार्शपूर्णमासिके प्रयोगे पत्नीशब्दस्य अप्रकृतिपठितत्वात् युक्तस्तत्रानूहेन वचनम् । इह तु विवक्षितत्वात्संख्यायाः ऊहित्वैव वचनं प्रयोगो नान्यथा ॥ ११ ॥

## [1]आम्नातस्त्वविकारत्वात्संख्यासु सर्वगामित्वात् ॥ १२ ॥

तुना समस्यवचनपक्षो व्यावर्त्यते । आम्नातः षड्विंशतिशब्दः अविकृत एव प्रयोक्तव्यः, नतु समस्यवचनम् । अर्थबाधात् । षड्विंशतिसंख्याप्राधान्ये सति तस्य अविक्रियत्वेन अविकारित्वात् । यथा 'देवदत्तयज्ञदत्तमित्रदत्तविष्णुदत्ताः परिषत्' इत्यत्र परिषदो निरूपका मित्रदत्तादयः प्रधानम्; तत्र यथा अविकारः एवं वैकृतीषु पशुवङ्क्रीसंख्यासु षड्विंशतिशब्दस्य सर्वगामित्वात् सर्वपशुवङ्क्रीगामित्वात्—तदभिधायकत्वात् अविकृत एव षड्विंशतिशब्दः प्रयोक्तव्यो नतु वचनोह इति ॥ १२ ॥

## संख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥

तुना पक्षो व्यावर्त्यते । यदि संख्या प्रधानं स्यात्, त्वदुक्तमविकरणं स्यात् । अध्रिगुवाक्ये पुनर्वङ्क्रय एव प्रधानम् । तासामेवानुपूर्व्यं समुद्धरिष्यमाणत्वात् । [2]उक्तश्चाध्रिगोः (प्राधान्यं) तदर्थत्वादिति । अतस्समस्यैव वचनं द्विपञ्चाशदित्यादिरूपेण । न त्वावृत्तिः—अविकारः—वचनोहो वा "अस्य" पदाभ्यासो वा ॥ १३ ॥

---

१ आम्नातस्त्वविकारात् ... ... क.

अनाम्नात ... ... ख.

२ पू. मीं. द. ९-४-१-७ ।

[1]अनाम्नातवचन(श्चावच)ने हि वङ्क्रीणामनिर्देशः ॥ १४ ॥

चकार उक्तेऽर्थे हेत्वन्तरार्थः। समसितव्ये सति अनाम्नातवचनश्च–षड्विंशती षड्विंशतयः- इत्यप्राकृतश्च स्यात्। नतु सर्वमेव प्राकृतं कृतं भवति। हिर्हेतौ। यतः कारणादनाम्नातस्यावचने सति वङ्क्रीणां कात्स्न्र्ये–नानिर्देशः –अनभिधानमियत्तायास्स्यात्। अतः कारणात् समसितव्यमेव ।१४॥

[2]अभ्यासो वास्य कात्स्न्र्यात् ॥ १५ ॥

वाकारः समसितव्यपक्षं व्यावर्तयति । 'षड्विंशतिर्वङ्क्रयः' इत्यत्र 'अस्य' इति पदस्यैव अभ्यासस्स्यात्, नतु षड्विंशतिपदे समस्यवचनम्। कुतो हेतोः? द्विपश्वादिविकृतिषु 'अस्य' पदाभ्यासे सति वङ्क्री कात्स्न्र्यात्–वङ्क्रीयत्तासंभवात् इत्यर्थः अतः "अस्य" पदस्यैवाभ्यास इत्यर्थः ॥ १५ ॥

पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्तस्मात्समासशब्दः स्यात् ॥ १६ ॥

तुना अनन्तरोक्तः पक्षो व्यावर्त्यते। 'अस्य' पदाभ्यासे कर्तव्ये सति पशुरेव प्रधानं स्यात्, न वङ्क्रयः। कुतो हेतोः? अभ्यासस्य–'अस्य' पदाभ्यासस्य तन्निमित्तत्वात्–पशुप्राधान्यनिमित्तत्वात्। पशु प्राधान्ये सत्येव 'अस्य' पदाभ्यासः। नतु पशुः प्रधानम्। वङ्क्रय एव प्रधानम्। वङ्क्रीपशुसंबन्धस्य, प्रकृतावविवक्षितत्वेन वङ्क्रीयत्ताया एव विवक्षितत्वात्। तस्मात्समासशब्दः – समस्यवचनमेव स्यात् 'द्विपश्वाशद्वङ्क्रय' इत्याद्याकारमिति ॥ १६ ॥

प्रयोजनन्त्वनुष्ठानरूपम् –विशदप्रायं कोट्युपपादनेन ॥ १ ॥

---

१ अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः क. ख.

२ अभ्यासो वाऽविकारात्स्यात् क. ख.

(अश्ववङ्क्र्यधिकरणम्–२)

## अश्वस्य चतुस्त्रिंशद्वचनात्तस्य[1] वैशेषिकम् ॥ १७ ॥ (पू)

अश्वमेधेऽस्ति सवनीयः पशुः, अश्वः, तूपरगोमृगौ च। अस्ति च प्रकृतावग्नीषोमीये 'षड्विंशतिरस्य वङ्क्रयः' इति। तदिहाश्वादौ चोदकतः प्राप्तम्। तत्राश्वस्य चतुस्त्रिंशद्वङ्क्रयः। तूपरगोमृगयोस्तु षड्विंशतिष्षड्विंशतिः। अस्ति त्वृक्समाम्नाता – 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिस्समेति। अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्त ॥" इति।

तथा सति संदिह्यते — किमश्वस्य वैशेषिकमिदं वचनं कर्तव्यम्, तूपरगोमृगयोस्तु समासः? उत सर्वेषामेव समासवचनम्? इति।

तत्र अश्वस्य तु वैशेषिकं चतुस्त्रिंशत्पदं प्रयोक्तव्यमध्रिगौ। कुतः? 'चतुस्त्रिंशद्वाजिनो देवबन्धोः' इति वचनात्। यथावचनञ्च कर्तव्यम्। तूपरगोमृगयोस्तु वङ्क्रीयत्ता समस्य वक्तव्या, न तु सर्वेषां समस्य वचनम् ॥ १७ ॥

## तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ ॥ १८ ॥ (सि)

नैतदेवं–वैशेषिकमश्वस्य कर्तव्यम्, इतरयोस्तु समस्य वचनमिति। कुतः? 'न चतुस्त्रिंशदिति ब्रूयात षड्विंशतिरित्येव ब्रूयात्' इति तद्वैशेषिकं चतुस्त्रिंशद्वाच्यत्वात् – चतुस्त्रिंशत्पदवाच्यत्वात् प्रतिषिध्य – निषिद्ध्य, सा प्रकृतिरेव 'षड्विंशतिरस्य वङ्क्रयः' इत्येवमाकारेण नियुज्यते – लक्ष्यते, न तु प्रतिषेधः षड्विंशतिशब्दो वा विधीयते, वाक्यभेदप्रसङ्गात्। अतः 'षड्विंशतिरित्येव ब्रूया'दिति लक्षितप्राप्तषड्विंशतिपदेन वङ्क्रीयत्ता स्मार्यते प्राकृती, नान्यथा। तस्मादश्वतूपरगोमृगाणां सर्वेषामेव समस्यवचनं, नत्वश्वस्य चतुस्त्रिंशत् – इतरयोस्तु समस्यवचनमिति ॥ १८ ॥

---

१ अश्वस्य चतुस्त्रिंशत्तस्यवचनाद्वैशेषिकम्. क. ख.

## ऋग्वा स्यादाम्नातत्वा[1]द्विकल्पश्चान्याय्यः ॥ १९ ॥

वाकार एतं पक्षं व्यावर्तयति। अश्वमेधप्रकरणे समाम्नाता 'चतुस्त्रिंशद्वाजिनो देवबन्धो'रित्येवमाद्या ऋगेव प्रतिषिध्येत, न चतुस्त्रिंशदिति। कुतो हेतोः? ऋचः प्रकरणे समाम्नानत्वात् ऋक्प्रतिषेध एव न चतुस्त्रिंशत्पदप्रतिषेधः। एवञ्च सति प्रतिषेधविध्योरतुल्यविषयत्वेन अविकल्पश्च भविष्यति। अतश्चतुस्त्रिंशत्प्रतिषेधे 'चतुस्त्रिंशद्वाजिन' इति ऋच एव प्रतिषेधः—अश्वस्य चतुस्त्रिंशदिति पदं, इतरयोस्तु समस्य वचनमिति। प्रतिषेधस्य ऋग्विषयत्वे सति चतुस्त्रिंशत्पदप्रतिषेधाभावात्, षड्विंशतिपदस्य च प्राकृत वङ्क्रीयत्तालक्षकत्वात् अविकल्प एव भविष्यति ॥ १९ ॥

## तस्यान्तु वचनादैरवत्पदविकारस्स्यात् ॥ २० ॥

तुना ऋक्प्रतिषेध इत्ययं पक्षो निवार्यते। तस्याश्च चतुस्त्रिंशत्पदविकार एव स्यात्, न सर्वऋक्प्रतिषेधः। कुतः? वचनात् चतुस्त्रिंशत्पदप्रतिषेधवचनात्। अतः पदप्रतिषेध एव नर्क्प्रतिषेधः। तत्र दृष्टान्तः—ऐरवदिति। यथा 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गायेत्' इत्यत्र गिरापदमात्रं प्रतिषिध्यते, तद्वदत्रापि पदप्रतिषेध एव। ऋक्प्रतिषेधे लक्षणा स्यात्, पदप्रतिषेधे श्रुतिरेव स्यात्। अतो वैशेषिकमश्वस्य कर्तव्यमिति ॥ २० ॥

## [2]सर्वप्रतिषेधो वा संयोगात्पदं न स्यात् ॥ २१ ॥

वाकारः पक्षमिमं व्यावर्तयति। सर्वप्रतिषेधः—सर्वस्या ऋच एव प्रतिषेधो न तु चतुस्त्रिंशत्पदमात्रस्य। कुतः? संयोगात्—चतुस्त्रिंशत्पदस्य ऋगादौ संयोगात्। आदिसंयोगे च तदाद्याया ऋचः प्रतिषेधः स्यात्। न तु पदं प्रतिषेध्यम्। अतस्सर्वेषामश्वगोमृगतूपराणां वङ्क्रीयत्ता समस्य वक्तव्या। नत्वश्वस्य वैशेषिकं इतरयोस्समास इति। एवञ्च सति प्रतिषेधस्य ऋग्विषय-

१ ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः क. ख.

२ सर्वप्रतिषेधो वाऽसंयोगात्पदेन स्यात् क. ख.

त्वात् षड्विंशतिरित्येव ब्रूयादित्यस्य च प्राकृतवङ्क्रीयत्तालक्षकत्वात् प्रकरणे विध्यन्तरेण विहिताया ऋचः प्रतिपेदुधुं शक्यत्वाच्च सर्वं समञ्जसम् ॥ २१ ॥

प्रयोजनन्त्वनुष्ठानरूपं सुगमम् ॥ २ ॥

( वनिष्ठ्वधिकरणम्–३ )

## वनिष्ठुसंनिधानादुरुकेण वपाभिधानं [1]स्यात् ॥ २२ ॥ (सि)

अध्रिगुप्रैषे 'वनिष्ठु(मस्य मारा विष्टोरुकं मन्यमानाः' इत्याम्नातम् ॥

तत्र सन्दिह्यते–किमुरुकशब्देन वनिष्ठोरुपमाभिधानम्? उत वपाभिधानम्? इति ॥

तत्र उरुकेण–पदेन वपाया एवाभिधानं स्यात्। (न तु उलूक–रुपोपमायाअ)भिधानम्। कुतो हेतोः? वनिष्ठुसंनिधानात्–वनिष्ठुमांससान्निध्यात् मांसपर एवोरुकशब्दः स्यात्। उरुशब्दे उरुकशब्दः विस्तीर्णापरपर्याय ... ... ... ... ... पोपमानपर इत्यर्थः ॥ २२ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–अनूहः पूर्वपक्षे बहुपशुके उरुकशब्दस्य, सिद्धान्ते तु ऊह इति ॥ ३ ॥

( प्रशसाधिकरणम्–४ )

## प्रशसास्यभिधानम् ॥ २३ ॥ (पू)

अध्रिगुप्रैष एव 'प्रशसाबाहू' इत्याम्नातम् ॥

तत्र सन्दिह्यते–किं प्रशसेति पदेन अस्यभिधानम्? उत बाहुप्रशंसाभिधानम्? इति ॥

तत्र प्रशसा इति पदेन अस्यभिधानं–खड्गाभिधानम्। तदयमर्थः–प्रशसा–असिना बाहुं छिन्धीति। न तु प्रशसाशब्दः प्रशंसापरः। असिपर एव ॥ २३ ॥

---

१ इदं ग्रन्थान्तरे नास्ति।

बाहुप्रशंसा वा ॥ २४ ॥ (सि)

वाकारः पक्षव्यावर्तकः। प्रशसा प्रशस्तौ बाहू कृणुतात्—कृत्स्नौ बाहू उद्धरतात्, नात्र किञ्चिदप्यवशेषयतात् इत्यर्थः। अतः प्रशंसैव प्रशसाशब्देन क्रियते ॥ २४ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—अश्वमेधे शतं शजता हरितत्सरवोऽसयः। तत्र ऊहो भवति पूर्वपक्षे। सिद्धान्ते तु प्रशंसामात्रपरत्वादनूह इति ॥ ४ ॥

(श्येनाद्यधिकरणम्—५)

[1]श्येनशला कश्यपकवषोरुस्रेकपर्णेष्वाकृतिवचनं प्रसिद्ध-सन्निधानात् ॥ २५ ॥ (पू)

अध्रिगावेवेदमाम्नायते—'श्येनमस्य वक्षः कृणुतात्, शला दोषणी, कश्यपेवांसा, कवषोरू स्रेकपर्णा अष्ठीवन्ता' इति।

तत्र श्येनशला कश्यप [2]कवषोरू स्रेकपर्णेषु सन्दिह्यते—किमाकृतिवचनानीमानि? उत कृत्स्नोद्धरणार्थम्? इति ॥

तत्र एषु तदाकृतिवचनमेव। कुतो हेतोः? प्रसिद्धश्येनादिसंनिधानात्—श्येनाद्याकृतिकानि मांसानीत्यर्थः ॥ २५ ॥

[3]कात्स्न्येंन वा तथाभावात् ॥ २६ ॥ (सि)

वाकारः एतं पक्षं व्यावर्तयति। नैतदस्त्याकृतिवचनमिति। कृत्स्नोद्धरणार्थानि श्येनादीनि पदानि। कुतो हेतोः? कात्स्न्येंन उद्धृतेष्वङ्गेषु तथाभावात्—श्येनाद्याकारभावात्। कृत्स्नोद्धरण एव श्येनाद्याकारसंपत्तेः। अतश्श्येनाद्याकाराणि वक्ष आदीन्युद्धरतादिति ॥ २६ ॥

---

१ कवषोरु—इति सूत्रे निर्देशः न युक्तः अस्ति त्वयमत्र—क. ख. नैवम्।

२ कवष—इत्येव साधु।   ३ कात्स्न्यं वा स्यात्तथाभावात्. क. ख.

## अभिगोश्च तदर्थत्वात् ॥ २७ ॥

चकारो हेत्वन्तरार्थः। अध्रिगोश्च 'गात्रं गात्रमस्यानूनं कृणुतात्' इति वाक्यात् तदर्थत्वात्–कृत्स्नाङ्गोद्धरणार्थत्वात्। कृत्स्नाङ्गोद्धरण एव श्येनाद्याकारावाप्तिरङ्गानाम्। अतो नाकृतिवचनानीति ॥ २७ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – पक्षयोरन्वेषणीयम् ॥ ५ ॥

(प्रासङ्गिकाधिकरणम्–६)

## प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २८ ॥ (सि)

अग्निहोत्रप्रकरणे श्रूयते–'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वाये'दिति ॥

यदि दर्शार्थे पौर्णमासार्थे वा अग्निरुद्धृतः अहुते चाग्निहोत्र उद्वायेत्, तत्र किं ज्योतिष्मतीष्टिः कर्तव्या ? न ? इति सन्देहे सति–

तत्र प्रासङ्गिके–प्रसङ्गादागते–प्रसङ्गादुपकारिणि–दर्शार्थमुद्धृते प्रसङ्गादग्निहोत्रोपकारकेऽग्नौ दार्शपूर्णमासिकेऽनुगते आग्निहोत्रिकी ज्योतिष्मतीष्टिर्न प्राप्नोति। कुतः कारणात्? परार्थत्वात्–दार्शपूर्णमासिकस्य वह्नेर्दर्शार्थत्वात्। हिर्हेतौ। यतः कारणात् तदर्थे–अग्निहोत्रार्थेऽग्नावनुगते ज्योतिष्मतीष्टिर्विधीयते; अतः कारणात् दर्शार्थोद्धृतवह्नावनुगते न ज्योतिष्मतीष्टिः प्रायश्चित्तं; किन्त्वनुरूपा प्रायश्चित्तं भवतीति ॥ २८ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – अनूहलक्षणसङ्गतस्यापि स्पष्टभेदं इति न विलिख्यते ॥ ६ ॥

(धारणाधिकरणम्–७)

## धारणे च परार्थत्वात् ॥ २९ ॥ (सि)

इदमाम्नायते–'गतश्रियो नित्योऽग्निर्धार्यः' इति ॥

तदग्न्यनुगमे—किं ज्योतिष्मतीष्टिः प्रायश्चित्तं कर्तव्यम्? उत न? इति सन्देहे सति—

गतश्रीः—प्राप्तश्रीः—आढ्य इत्यर्थः। तत्र गतश्रीत्वनिमित्तके नित्येऽग्निधारणे क्रियमाणे; अकृतप्रयोजनेऽग्निहोत्रार्थे वह्नौ उद्वाते सति ज्योतिष्मतीष्टिः प्रायश्चित्तं न स्यात्। कुतो हेतोः? परार्थत्वात्?—उद्धरणस्यादौ क्रियमाणस्य एककर्मार्थत्वाद, धारणस्य तु सर्वकर्मसाधारणत्वात्—केवलमग्निहोत्रार्थत्वाभावाद परार्थ(ग्न्युद्वान) निमित्तमीदृशं अग्निहोत्रार्थमुद्धृतोऽकृत प्रयोजनो वह्निरुद्वातो निमित्तमित्येतादृशं नित्यधार्यवह्नय ... ... ... ... ... ... ... ... तिष्ठतीष्टिः ॥ २९ ॥

[1]क्रियार्थत्वादितरेषु कर्मसु स्यात् ॥ ३० ॥

यदुक्तं परि समूहन पर्युक्षण ... ... ... ... ... ... सर्वकर्मार्थत्वमित्र ज्योतिष्मत्या अप्यग्निमात्रोद्वानं निमित्तमिति; तत्परिहारार्थमिदं सूत्रम्। परिसमूहनादीनां अग्निहोत्रप्रकरणपठितानामपि क्रियार्थत्वात्—क्रियार्थवह्नि-संस्कारकत्वेन इतरेषु कर्मसु प्रवृत्तिः स्यात्। नात्र तादृश मित्यर्थः। ३० ॥

प्रयोजनन्त्वनुष्ठानरूपम्— ... ... ... तरं पक्षयोरुभयोरपि ॥ ७ ॥

(उत्पन्नाधिकरणम्—८)

न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ३२ ॥ (सि)

अस्त्यग्निहोत्रे उद्धरणमन्त्रः—'वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा' इत्येवमादिः ॥

तत्र सन्दिह्यते—किमयं मन्त्रो दर्शपूर्णमासार्थोद्धरणेऽपि स्याद्? उत न? इति ॥

तत्र उत्पन्ने—दर्शार्थमुत्पन्ने—दर्शार्थवह्नावुद्धृते यस्य—यजमानस्य अग्निहोत्रचोदना भवति, प्रसङ्गान्न तत्रोद्धरणमन्त्रः प्राप्नोति। कुतो हेतोः?

---

१ क्रियार्थत्वादितरेषु कर्म स्यात्—क. ख.

अप्राप्तकालत्वात्—निमित्तभूतत्वेन प्रधानस्य कालस्य अप्राप्तत्वेन प्रणयनस्याप्राप्तत्वात्। कालाप्राप्तौ च तदर्थं उद्धरणमन्त्रोऽपि दर्शार्थं प्रणीते, अग्निहोत्रहोमे प्रसङ्गादुपकारिणि वह्नौ न भवतीत्यर्थः ॥ ३२ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पक्षयोः पूर्वोत्तरयोर्विंशदमेव ॥ ८ ॥

(प्रदानदर्शनाधिकरणम्—९)

## प्रदानदर्शनं श्रपणे [1]तद्धर्मा भोजनार्थत्वात्संसर्गाच्च मधूदकवत् ॥ ३२ ॥ (पू)

ज्योतिष्टोमे प्रायणीयेष्टौ "आदित्यः पयसि चरुः" इति।

तत्र सन्दिह्यते—किं प्रदानार्थाः पयोधर्माः पयसि कर्तव्याः? उत न कर्तव्याः पयोधर्माः पयसि? इति।

तत्र श्रपणे—श्रपणार्थे पयसि तद्धर्माः—प्रदेयपयोधर्माः प्रकृतिवत् प्राप्नुयुः। कुतो हेतोः? भोजनार्थत्वात्—चरुसंसृष्टपयसोऽपि चरुवदेव देवतातृप्त्यर्थत्वात् इत्यर्थः। एवञ्च सति प्रदानदर्शनम्—चरुद्रव्ये त्यज्यमाने पयोऽपि नियतं त्यज्यते। अतस्तदपि प्रदेयमिति प्रदेयदर्शनञ्च उपपादकम्। एवञ्च सति संस्कृतयोश्चरुपयसोः "दधिमधुघृतमापोधाना स्तत्संसृष्टं प्राजापत्यं" इतिवत् युगपदेव देवतासंबद्धत्वात् न वाक्यभेदाद्याशङ्का। अतः प्रदेयधर्माः—दोहधर्मास्सर्वे प्राप्नुयुः, नोत्पवनादय इत्यर्थः ॥ ३२ ॥

## संस्कारप्रतिषेधश्च तद्वत् ॥ ३३ ॥

चकारः समुच्चयार्थो हेत्वन्तरस्य। 'न यजुषा वत्सा नपाकरोति, न पवित्रवति गां दोहयति' इति कतिपयसंस्कारप्रतिषेधश्च पयसः तद्वदेव—(प्रदेय) धर्मवदेव प्रतिपादयतीत्यत्र वतिः दृष्टान्तार्थे। प्रसक्तिमूलत्वान्निषेधस्य कतिपयसंस्कारप्रतिषेधः इतरसंस्कारसद्भावमेव बोधयति। अतः प्रदेयधर्माः पयसि कर्तव्या इत्यर्थः ॥ ३३ ॥

---

1 ... ... ... तद्धर्मभोजनार्थत्वाव ... क. ख.

## तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥

(चकारश्शङ्कान्त) रनिवृत्त्यर्थः। यदि पयःप्रतिषेध एव न संस्कारप्रतिषेधः तथा सति तत्प्रतिषेधे—पयःप्रतिषेधे वर्ण्यमाने तथाभूतस्य—पयसा संसृष्टस्य चरोरपि वर्जनात् 'प्रतिषेधात चरुरपि प्रतिषिद्ध्येत, यागश्च न सिद्ध्येत्। अतः कतिपयसंस्काराणां प्रतिषेधः अर्थादितरसंस्कारप्रवृत्तिरिति। ३४॥

## सामान्यतो दृष्टम् [1]अधर्मकन्त्वप्रदानात्प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३५ ॥ (सि)

तुः धर्मवत्पक्षव्यावर्तकः। अधर्मकं—अप्रदेयधर्मकमेव पयः स्यात्—प्रणीताधर्मकमित्यर्थः। कुतो हेतोः? [2]सामान्यतः समानत्वेन—चरुसमानत्वेन पयसोऽप्रदानात्—चरुवत् देवतायै अप्रदीयमानत्वात् प्रणीतार्थे—प्रणीताकार्ये पयसो विधानात्—आधाराधेयरूपत्वेन पयश्चर्वोः मधूदकातुल्यत्वादसंसर्गः—न संसृष्टस्य देवतया संबन्धः। अतः प्रणीताकार्यापन्ने पयसि स्थानापत्त्या उत्पवनादय एव प्राप्नुयुः, न दोहधर्माः वत्सापाकरणादय इत्यर्थः ॥ ३५ ॥

## परो नित्यानुवादः स्यात् ॥ ३६ ॥

यदुक्तं—'न यजुषा वत्सानपाकरोति' इत्यादि तत्रोत्तरम्—परः—न यजुषेत्यादिर्वाक्यसंदर्भः नित्यानुवादः—नान्तरिक्ष इत्यादिवत्, नित्यानुवादत्वञ्च—कदाचिदपि [3]चरौ प्रदेयधर्माभावेन प्रतिषेधो नित्यानुवाद इत्यर्थः ॥ ३६ ॥

## विहितप्रतिषेधो वा ॥ ३७ ॥

---

१ ... अधर्मत्वमप्रदाना ... ... क. ख.

२ सामान्यतो दृष्टं—इति ३५ शं सूत्रं उपक्रामति अत्र मातृकायां, तेन तत्पदमपि (सामान्यत इति पदमपि) व्याख्यायते।

३ पयसि इति साधु। अथवा उपरि पयोधर्माभावेन इति विपरिणमयितव्यम्। आद्य एव भाष्यसंमतः कल्पः।

वाकारः आनर्थक्यपरिहारमात्रार्थः । न तु तदनुग्रहार्थः । न यजुषेत्यादिः शाखान्तरविहित वत्सापाकरणशाखाप्रतिषेधार्थो वा । एवं सति सर्वात्मना निषेध्यार्थाभावात् नित्यानुवादे सर्वेषैव व्यर्थत्वात् तदनुग्राहकमात्रं, न तु प्रदेयधर्मप्रापकमित्यर्थः ॥ ३७ ॥

[1]वर्जने गुणभागित्वात्तद्युक्तप्रतिषेधात्कारणात्केवलाशनम् ॥ ३८ ॥

यदुक्तं पयःप्रतिषेधे तद्युक्तं द्रव्यमपि प्रतिषिध्येतेति, तत्रोत्तरम्—वर्जने—पयोवर्जने चर्वादीनां गुणभागित्वात्—गुणभूतपयस्संसृष्टत्वेन निषेधभागित्वात् तद्युक्तस्य—पयस्संसृष्टस्य चर्वादेर्वर्जनं प्रतिषेधस्स्यात् । नैतदैकान्तिकं कारणात्—व्याध्यादिकारणात् केवलाशनम्—केवलपयःप्राशनञ्च स्यात् । न तत्र चर्वादिनिषेधः, केवलस्य पयस एव निषेधः । अतः पयःप्रतिषेधे तत्संसृष्टस्य नियमेन प्रतिषेध इति नियमाभावात् न त्वदुक्तं दूषणम्—संस्कारप्रतिषेधे पयःप्रतिषेधः, तत्प्रतिषेधे च तत्संयुक्तचर्वादिप्रतिषेध इति ॥३८॥

[2]व्रतधर्माच्च लोकवत् ॥ ३९ ॥

चकारः परिहारान्तरार्थः । लोकवत्—लोक इव, यथा ब्रह्मचारिणो न मांसं भक्षयितव्यमित्युक्ताः व्रतधर्माः दर्वीगतमपि मांसलेपं निवारयन्ति, तद्वदेव । यथा लोके तथा वेदे इति । संसर्गिनिषेधे संसृष्टस्यापि निषेध एव स्यात् । अतस्त्वदुक्तः परिहार इति ॥ ३९ ॥

रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥

वाकारः परिहारान्तरव्यावृत्त्यर्थः । ब्रह्मचारिव्रतस्य पुरुषधर्मत्वात्—पुरुषसंस्कारार्थत्वात् मांस रसस्यापि प्रतिषेधो युक्तः—रसास्वादोऽपि मांसस्य न कर्तव्य इति । नात्र पयसि तादृश निषेधोऽस्ति अतः प्रयुक्त एव परिहार इति । प्रदेयधर्माः पयसि प्रणीतार्थे न भवन्ति, प्रणीताधर्मा एव प्रवर्तेरन् उत्पवनादयः ॥ ४० ॥

---

१ वर्जने गुणभावित्वा तदुक्तप्रतिषेधात्स्यात्कारणात्केवलाशनम्. क. ख.

२ व्रतधर्माच लेपवत् क. ख.

प्रयोजनन्त्वनुष्ठानरूपम् – पक्षयोर्विशदतरं दो(हधर्मा)द्युत्पवनादि प्रभेदेन ॥ ९ ॥

(दोहापनयाधिकरणम् –१०)

## अभ्युदये दोहापनयस्स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ४१ ॥ (सि)

इदं समाम्नायते – " विश्वा एतं प्रजया पशुभिर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुं येऽणिष्ठास्तान विष्णवे शिपिविष्टाय शृते चरम् " इति । शृते चरुं, दधनि चरुं, इत्येतावदेवात्रोदाहरणम् ।

अत्र संदिह्यते – किं शृते दधनि च पयोधर्माः कर्तव्याः ? उत न ? इति ।

तत्र अभ्युदये – पुरस्तात् चन्द्राभ्युदये निमित्ते यो दोहापनयः प्रकृतदेवतायाः ; प्रकृतदेवताया अपनीतो दोह इत्यर्थः । स दोहो दधिपयोरूपस्वधर्मा – स्वस्य प्रदेयस्य ये धर्माः वत्सापाकरणादयः तद्धर्मा दोहधर्मवानित्यर्थः । कुतो हेतोः ? प्रवृत्तत्वात् – दोहधर्माणां वत्सापाकरणादीनां (पूर्वेद्यु) रारभ्य प्रवृत्तत्वात् – अनुष्ठितत्वादित्यर्थः । अतः प्रदेयधर्मानुष्ठानं दधिपयसोरिति । ४१॥

## शृतोपदेशाच्च ॥ ४२ ॥

चकारो हेत्वन्तरप्रदर्शनार्थः । शृते चरुं इति सिद्धवच्छृते श्रवणाच्च प्रदेयधर्मा एव । अयमर्थः – जातश्रपणस्य क्वथितस्य पयस एव शृतसंज्ञा । दोहधर्मोत्तरकाल (कर्तव्यं) श्रपणं क्वाथः । तस्माच्च सिद्धवन्निर्देशात् (प्रदेय धर्मा एव) प्रवर्तेरन् । न प्रणीता धर्मा इत्यर्थः ॥ ४२ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – (अधर्मकत्व) सधर्मकत्वाभ्यां पक्षयोः प्रद्योतितम् ॥ १० ॥

(दधिपयोऽधिकरणम्–११)

## अपनयो वार्थान्तरे विधाना[1] दधिपयोवत् ॥ ४३ ॥ (सि)

अस्ति पशुकामेष्टिः–'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वावत्सानपाकुर्याद्ये क्षोदिष्ठास्तानग्नये सनिवतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय भृते चरुं, येस्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुम्' इति। तत्र भृते चरुं, दधनि चरुं इत्येतदुदाहरणम्।

किं भृते दधनि च इज्यार्थाः दधिपयोधर्माः कर्तव्याः? उत न? इति संदेहे सति–

दधिभृतयोः (प्रदेयधर्माणां) अपनयो वा–अपनय एव भवेत्, न तु प्रदेयधर्मानुष्ठानम्। कुतो हेतोः? प्रायणीयचरुपयोवत् अर्थान्तरे–श्रपणार्थ एव पय आदिविधानं न तु प्र(देयत्वेन) अर्थान्तरे–कर्मान्तरे विधानात् अभ्युदयार्थत्वाभावान्न प्रदेयधर्माः अप्रवृत्तत्वात् इति च हेतुरूह्यः ॥ ४३ ॥

## लक्षणार्था भृतश्रुतिः ॥ ४४ ॥

यदुक्तं सिद्धवच्छृतश्रवणात् प्रदेयधर्मा इति, तत्परिहारार्थमिदं सूत्रम्–अर्थप्राप्तत्वाच्छृते श्रपणस्य न तत्र विधिः, किन्तु शृतश्रुतिः श्रपणवद्द्रव्य-(लक्षणार्था) न तु तद्धर्मप्राप्त्यर्थेति सर्वं समञ्जसम् ॥ ४४ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–निगदव्याख्यातम् ॥ ११ ॥

(श्रयणाधिकरणम्–१२)

## श्रयणानान्त्व पूर्वत्वात्प्रदानार्थे विधानं स्यात् ॥ ४५ ॥ (पू)

ज्योतिष्टोमे समाम्नायते–"पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनं, धानाभिर्हारियोजनं, हिरण्येनशुक्रं, आज्येन पात्नीवतं" इति।

---

१ ... ... चरुपयोवत् क. ख. अत्रापि व्याख्या तथैव.

तत्र सन्दिह्यते—किं श्रपणानां प्रदेयधर्मा भवन्ति ? उत न भवन्ति ? इति ।

तत्र श्रयणानां—श्रयणसाधनानां पय आदीनां, अपूर्वत्वात्—अप्राप्तिपूर्वकत्वात्—शृते चरुमित्यादिष्विवाप्राप्तिपूर्वकत्वात् प्रदानार्थे—प्रदानायैव विधानं स्यात् । अतः प्रदेयधर्माः पूर्वाधिकरण इव भवेयुः । प्रदेयधर्मा अनुष्ठेया इत्यर्थः ॥ ४५ ॥

## गुणो वा श्रयणार्थत्वात् ॥ ४६ ॥ (सि)

वाकारः प्रागुक्तपक्षव्यावर्तकः । गुण एव पयआदि स्यात्, न प्रधानं प्रदेयत्वेन । कुतो हेतोः ? पयआदीनां प्रधानभूतसोम श्रयणार्थत्वात् । न च पयआदीनां सोमस्येव देवता संबन्धोऽस्ति, अप्रदेयत्वान्न पयआदीनां प्रदेयधर्मा भवेयुरित्यर्थः ॥ ४६ ॥

## [1]श्रुतेश्च तत्प्रधानत्वात् ॥ ४७ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । "पयसा मैत्रावरुणं श्रीणाति" इति श्रुतेश्च तत्प्रधानत्वात्—द्वितीयानिर्दिष्टसोमप्रधानत्वात्, गुणार्थे तृतीया-श्रवणाच्च न प्रदेयधर्मा अनुष्ठेया—इत्यर्थः ॥ ४७ ॥

## [2]संस्कारं प्रतिभावाच्च तस्मादेष्वप्रदानं स्यात् ॥ ४८ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । 'पयसा मैत्रावरुणं श्रीणाति' इत्यादौ, संस्कारं प्रति=संस्कार्यं सोमं प्रति पयआदीनां गुणभावात्—गुणत्वात्, न प्राधान्यम् । तस्मात् तेषु—पयआदिषु अप्रदानं स्यात्—अप्रदेयत्वेन (प्रदेयधर्मा) न प्रवर्तेरन् । संस्कारप्राये पाठात्संस्कारार्था एव पयआदय इत्यर्थः ॥ ४८ ॥

---

१ अस्मात्पूर्वं "अनिर्देशाच्च" इत्येकं सूत्रं. क. ख. उपलभ्यते, अत्र तु नास्ति ।

२ इतःपूर्वं 'अर्थवादश्च तदर्थत्वात्' इत्येकं सूत्रमधिकं क. ख. उपलभ्यते; अत्र तु नास्ति । अस्मिन्नपि सूत्रे अन्ते... तस्मादप्यप्रधानं स्यात्-इति पाठभेदः क. ख.

प्रयोजनन्त्वनुष्ठानरूपम्—पयआदिषु सोमधर्माः पूर्वपक्षे, सिद्धान्ते तु न तथेति ॥ १२ ॥

(पर्यग्निकृताधिकरणम्—१३)

## पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ४९ ॥ (पू)

अश्वमेधे समाम्नायते[1]—'ईशानाय परस्वत आलभेत' इति विधाय 'पर्यग्निकृता नारण्यानुत्सृजन्ति' इत्युत्सर्गो विहितः ॥

तत्र सन्देहः—किमारण्यानामालम्भ उत्सर्गार्थ एव। द्रव्योत्सर्गश्चायम्?। अथ कर्मशेषप्रतिषेधः—पर्यग्निकरणान्तं संस्कृत उत्स्रष्टव्यः? इति ॥

तत्र पर्यग्निकृतानां—परस्वतां उत्सर्गे कर्तव्ये सति, ईशानाय परस्वन्त आलभ्या इति आलम्भस्य तादर्थ्यं—उत्सर्गार्थत्वं, न तु यागार्थत्वम्। तदेतत् दृष्टान्तेन द्रढयति उपधानवत् इति। यथा '[2]तत् खलु वै साक्षादन्नं यदेष चरुर्यदेतं चरुमुपदधाति' इति अद ... ... ... ... ... चरोरुपधान वाक्येन अग्न्युपधानार्थत्वं; एवं आलंभस्यापि उत्सर्गार्थत्वमेव। तस्मादुत्सर्गविधिः पर्यवस्यति ॥ ४९ ॥

## [3]प्रतिषेधोवाऽर्थाभावात् ॥ ५० ॥ (सि)

वाकारः प्रागुक्तमुत्सर्गविधिं वारयति। उत्सर्गविधौ विवक्षिते सति, आदावेवाध्वर्युरीशनाय परस्वत ... ... ... ... ... प्रतिषेध एव पर्यग्निकरणादूर्ध्वभाविनां पदार्थानाम्। कुतो हेतोः? अर्थाभावात्—आलभतेरुत्सर्गार्थत्वे सति विधिवाक्यगतस्या (लभतेर्न किञ्चित्प्र)योजनं स्यात्। अत आलभतेरालंभ एवार्थः, उत्सृजतेरुत्सर्ग एवार्थ इति नव्यर्थता। अतः प्रतिषेध एवोत्तरेषामङ्गानामित्यर्थः ॥ ५० ॥

---

१ अत्र अनन्वितं वाक्यम्।

२ एतत् खलु वै इति साधु।

३ शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत्, क. ख.

[1]पूर्वत्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५१ ॥

चकारः प्रागुक्तेऽर्थे हेत्वन्तरार्थः। "आज्येन शेषं संस्थापयति" इति शब्दस्य पूर्वत्वात् - आरंभपूर्वत्वात्, आरब्धस्यैव शेषोपपत्तेरित्यर्थः। उत्तरेषामङ्गानां प्रतिषेध एव पर्यग्निकरणा(न्त वाक्येन)। अप्रवृत्ते तु कर्मणि संस्थापयति शब्दो नोपपद्यते। अतश्शेषाङ्गपरिलोपनार्थ मेवोत्सर्गविधान मित्यर्थः ॥ ५१ ॥

प्रवृत्ते यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्मस्यात्त[2]त्कारितत्वाद्यथाप्रयाजप्रतिषेधेऽग्रहणमाज्यस्य ॥ ५२ ॥

प्रतिषेधपक्षे प्रयोजनपरमिदं सूत्रं नान्यपरम्। प्रतिषेधे -पर्यग्निकरणोत्तरभाविनां प्रतिषेधे वर्णयितव्ये सति, प्राचां पशुसंस्काराणां अर्थलोपादकर्म- अननुष्ठानम्। कुतो हेतोः? प्रवृत्ते कर्मणि संस्काराणां यज्ञहेतुत्वात्। कुतः? संस्काराणां तत्कारितत्वात् —यागप्रयुक्तत्वात्, प्रयोजकस्य यागस्याभावे सति प्रयोज्यानां संस्काराणामप्यभावः। तत्र दृष्टान्तः - यथा अप्रयाजाः अननूयाजाः इत्यादिषु स्थलेषु प्रयाजप्रतिषेधे विहिते तदर्थाज्यस्य जुह्वां अग्रहणमेव, प्रयोजकप्रयाजाभावात्। तद्वदत्रापि प्रयोक्तुर्यागस्य परिलुप्तत्वात् तदर्थसंस्कारणामपि प्रतिषेध एव। अतस्त्यागमात्र विधिरित्यर्थः ॥ ५२ ॥

क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥ ५३ ॥

वाकारः प्रागुक्त सकलसंस्कारप्रतिषेध पक्षव्यावर्तकः। क्रिया- अनुष्ठानं स्यात् अर्वाचीनानां संस्काराणाम्। कुतः कारणात्? अवच्छेदात्- पर्यग्निकरणपर्यन्तस्य संस्कारस्य अवच्छेदात्-अविच्छिन्नत्वात्। यदि यागो न भवेत्, ततस्संस्काराणां अकर्म- अननुष्ठानं, तदेव व्याख्यायते सूत्रकारेण-

१ पूर्ववत्त्वाच्च शब्दस्य ... ... क.

२ प्रवृत्तेर्यज्ञ ... ... तत्कारित्वात् - क. प्रवृत्तेर्यज्ञ ... तत्कारितत्वात्. ख.

सर्वहानं स्यात् इति। सर्वसंस्कारपरिलोप एव प्राचामर्वाचीनानाञ्च। यागश्चात्र देवतोद्देशेन द्रव्यत्यागात्मको वर्तते आलम्भप्रत्यायितः। होमस्तु परं न वर्तते। अतो यागसद्भावेन पर्यग्निकरणपूर्वभाविनां पदार्थानां अनुष्ठानमस्त्येव। न तु तेषामपि यागलोपात्परिलोप इति, पर्यग्निकरणान्ताङ्गरीति विधानेनैव तत्परिसमाप्तमिति न शेषकर्मानुष्ठानमित्यर्थः॥ ५३॥

प्रयोजनन्त्वनुष्ठानरूपम् — विशदतरं पूर्वोत्तरयोः पक्षयोरिति न विलिख्यते॥ १३॥

(आज्यसंस्थाधिकरणम्—१४)

## आज्यसंस्था प्रतिनिधिः स्यात् द्रव्योत्सर्गात्॥ ५४॥ (पू)

'यत्पर्यग्निकृतं पात्नीवतमुत्सृजति' इति प्रकृत्य श्रूयते, आज्येन शेषं संस्थापयति' इति॥

(तत्र सन्देहः) किमाज्यं पूर्वस्मिन् कर्मणि प्रतिनिधीभूतम्? अथाज्यद्रव्यकं पूर्वस्मात्कर्मान्तरं विधीयते? इति।

तत्र आज्यसंस्था – आज्येन संस्थापनं प्रतिनिधिः स्यात् – पर्यग्निकरणानन्तरं पाशुककर्मणः परिशिष्टस्य द्रव्यान्तरसाध्यत्वात् द्रव्यान्तरं आज्यं प्रतिनिधीयते नत्वाज्यद्रव्यककर्मान्तरविधिः। कुतः? द्रव्योत्सर्गात् – द्रव्यस्य (पश्वाख्यस्य) पर्यग्निकरणोत्तरकालं, उत्सर्गात् – सन्त्यागात्॥ ५४॥

## [1]चोदना वा कर्मोत्सर्गादन्यैस्स्यादविशिष्टत्वात्॥५५॥ (सि)

वाकारः प्रतिनिधिपक्षव्यावर्तकः। चोदना – कर्मान्तरचोदना स्यात्, न प्रतिषेधपक्षः। कुतः? कर्मोत्सर्गात् – पर्यग्निकरणान्ताङ्गरीति विधानेन पूर्वकर्मणः परिसमाप्तत्वात्, अन्यैरप्यङ्गैरुपकृतप्रायमेव स्यात्कर्म। पर्यग्निकरणान्ताङ्गानुष्ठानेनैव उत्तराङ्गानामप्यनुग्रहादित्यर्थः। अविशिष्टत्वात्–

१ अत्र 'समाप्तिवचनात्'' इति सूत्रमधिकम् क. ख.

इत्यपि हेत्वन्तरम्। अन्यैः निर्वपत्यादिभिस्सह संस्थापयतिशब्दस्य अविशिष्टत्वात्, तद्वत् कर्मान्तरविधिपरत्वात् यागान्तरमेवाज्यद्रव्यकं विधीयते। तदयमर्थः – आज्येन संस्थापयतीत्यत्र आज्यगततृतीया (याः) संस्थापयतिगतधात्वर्थस्याप्यनुपपन्नत्वेनाविवक्षितत्वात् शुद्धप्रातिपदिक प्रत्यययोरवस्थाने सति "आज्यकृतिभ्यां आज्यं कुर्यात्" इति कल्प्यते। केवलमाज्यं (कुर्यादि) त्युक्ते अयागनिष्पत्तेः पात्नीवतसन्निधानात् आज्यद्रव्यकं पात्नीवतं यागान्तरं कुर्यादिति ॥ ५५ ॥

## अनिज्याञ्च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५६ ॥

चकारो हेत्वन्तर समुच्चयार्थः। अत्र पात्नीवते त्वाष्ट्रे 'यत्त्वष्टारं वनस्पतिश्चावाहयसि, अथेमौ यक्ष्यसि' इति; 'त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी' इति (प्रयाज) मध्य एवापवर्गे कर्तव्यस्य वनस्पतियागस्याभावात्। दशमेन प्रयाजेन वनस्पत्यनुग्रहं वनस्पत्यनिज्यां प्रसिद्धां तेन प्रयाजेन दर्शयति। शेषा (संस्थापन एव) वनस्पति यागानुग्रह उपपद्यते स्विष्टकृत्स्थानापन्नः। अतश्शेषकर्मणाः प्रकारान्तरेणानुग्रहात् पर्यग्निकरणान्ताङ्गरीतिविधाने सति तत्कर्मणि समाप्ते आज्यद्रव्यकमिदं कर्मान्तरम् ॥ ५६ ॥

## [1] संस्था तदेकत्वात् ॥ ५७ ॥

यदुक्तं संस्थापयतीति शब्दाच्छेषमाज्यप्रतिनिधिकमिति तत्परिहारार्थमिदं सूत्रं–संस्था–संस्थापयति शब्दः तदेकत्वात्–पत्नीदेवताकत्वात्। असंस्थायां संस्थापयति रौपचारिकः। अतः कर्मान्तरमाज्यद्रव्यकं विधीयते ॥ ५७ ॥

प्रयोजनन्त्वनुष्ठानम् – पक्षयोरनतिगहनम् ॥ १४ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां नवमस्याध्यायस्य चतुर्थः पादः।

ओम् – समाप्तश्चाध्यायः, ओम्

श्रीगुरुभ्यो नमः। हयग्रीवाय नमः। स्वप्नवाराह्यै नमः।

---

१ संस्था तद्देवतत्वात्स्यात् – क. अत्रापि व्याख्या तथैव.।

## दशमाध्याये प्रथमः पादः

—*—

(स्वयंकृताधिकरणम्–१)

### विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ॥ १ ॥ (पू)

(बाधार्थं) नयचिन्तनं हि दशमे सन्तन्यते लक्षणं
संवर्ण्येत तयो र्विलक्षण मिदं निर्णीत बद्धामृषम् ।
ज्ञानं बाधगतं हि लक्षण मिदं सिद्धाङ्गके कर्मणि
स्यादङ्गान्तरमेलनञ्च विहितं लक्ष्मद्वितीये भवेत् ॥

क्वचिच्छ्रूयते–"स्वयङ्कृतावेदिर्भवति, स्वयन्दिनं बर्हिः, स्वयङ्कृत इध्मः" इत्यादि ।

तत्र सन्दिह्यते–किं प्राकृतं सर्वं विकृतौ कर्तव्यं? उत किञ्चित् बाध्यम्? इति ।

तत्र विधेः–प्राकृताङ्गविधेः प्रकरणान्तरे–विकृत्यन्तरे ईदृग्रूपे वैकृत विध्यादिशेषत्वेन प्राकृत विध्यन्तवाक्यस्य अतिदेशात्–शास्त्रपदार्थोपकाराणां अतिदेशात्, सर्वकर्म–सर्वेषां लुप्तालुप्तार्थानां उभयेषामप्यङ्गानां, कर्म–अनुष्ठानं स्यात् । तदयमर्थः–स्वयङ्कृतायां–स्वयंनिष्पन्नायामपि वेद्यां खननपरिलेखनादयो वेदिधर्माः लुप्तप्रयोजना अपि स्युः । स्वयङ्कृते–स्वयंलूने मन्त्रनिरपेक्षे बर्हिष्यपि असितादानादयो धर्मास्स्युः । स्वयं निष्पन्ने इध्मेऽपि "यत्कृष्णो रूप" मित्यादिमन्त्रेण सन्नहनं स्यात् । तत्तत्संस्कारालुप्तार्था अपि आर्षचोदनानुग्रहाय कृष्णलचरुपाक इव विकृतिमनुप्रविशन्तीत्यर्थः ॥ १ ॥

### अपि वाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥२॥ (सि)

अपिवेति प्राकृतपदार्थानां सर्वेषां अविशेषाकारेण विकृतिविशेषेषु प्राप्तिरित्ययंपक्षो व्यावर्त्यते । न हि प्राकृतं सर्वमतिदिश्यते । लुप्तार्थानि कानिचित् नातिदिश्यन्ते । अभिधानसंस्कारद्रव्यं अभिधानं संस्कारो द्रव्यञ्च अभिधान-

संस्कारद्रव्यम् । अभिधीयन्त इत्यभिधानानि – वेदीध्मादीनि । तेषां संस्काराः– परिलेखनादयः । द्रव्यं प्राकृत ... ... ... स्कारा इत्यर्थः । इदमुभयमपि अर्थे – परार्थे वेद्याद्यर्थे अथवा प्रयोजने सत्येव क्रियेत नत्वप्रयोजने । कुतः कारणात्? तादर्थ्यात् – वेद्याद्यर्थत्वात् उद्धननादि संस्काराणाम् । तदयमर्थः – वेद्यादीनां स्वत एव मन्त्रवतीं क्रियां अनपेक्ष्यैव प्रवृत्तत्वात् तत्र कृताः संस्काराः पुनरुक्ता इति कृत्वा नानुष्ठीयन्ते प्रयोजनलोपात् । अतस्तदितर सकलविध्यन्त-प्राप्तिरीदृशेषु । न च प्रयोजनदर्शी चोदको लुप्तार्थमप्यङ्गमतिदेष्टुमर्हति ॥ २ ॥

## [1] तेषां प्रत्यक्षशिष्टत्वात् ॥ ३ ॥

यदुक्तं कृष्णलेषु पाकवत् लुप्तार्थस्यापि विकृतौ प्रवृत्तिस्स्यादिति; तत्रोत्तरम्– तेषां – कृष्णलानां घृते पाकस्य प्रत्यक्षशिष्टत्वात् – घृते श्रपयतीति प्रत्यक्ष-श्रुतिविहितत्वादित्यर्थः । अतस्तदनुत्तरम् ॥ ३ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – सुखबोधमेवेति न विलिख्यते ॥ १ ॥

(शतकृष्णलाधिकरणम्–२)

एवं वा –

## विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ (पू)

प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इति ॥

तत्र सन्दिह्यते – किं कृष्णलेष्ववहननं कर्तव्यम्? उत न? इति ॥

प्राकृतस्य विधेः – प्राकृतविध्यन्त विधेः कृत्स्नस्य प्रकरणान्तरे – प्राजापत्य (चरुयागे) अतिदेशात्, सर्वकर्म – सर्वेषां – लुप्तार्थानां अलुप्तार्था-नाश्चाङ्गानां, कर्म – अनुष्ठानं स्यात्, न तु लुप्तार्थानां लोप इति अवहनन-लोपः । अत्रैव यथा – लुप्तार्थोऽपि पाकः क्रियते – तद्वल्लुप्तार्थमप्यवहननं अनुष्ठेयमार्षानुग्रहाय ॥

---

१ तेषामप्रत्यक्षशिष्टत्वात् – क. तेषामप्रत्यक्षविशिष्टत्वात्. ख.

## अपिवाभिधानसंस्कारद्रव्य मर्थे क्रियेत तादर्थ्यात् ॥ (सि)

अपिवेति प्रागुक्तकृष्णलावहननपक्षो व्यावर्त्यते । अभिधान-संस्कारद्रव्यम् – अभिधान संस्कारद्रव्यम् – द्रव्येऽभिहितोऽवहननादिरूप-स्संस्कारः, अर्थे – प्रयोजने सत्येव क्रियेत, नाप्रयोजने । कुतो हेतोः? तादर्थ्यात् – संस्काराणां संस्कार्यार्थत्वात् – परार्थत्वादित्यर्थः । कृष्णलेषु श्रूयमाणस्यावहन्तेरनर्थकत्वात् नानुष्ठेयमवहननम् ॥

## तेषां प्रत्यक्षशिष्टत्वात् ॥

यदुक्तं कृष्णलपाकवदवहननमपि भविष्यतीति — तत्रोत्तरम् – तेषां कृष्णलानां पाकस्य, "घृते चरुं" इति प्रत्यक्षशिष्टत्वात् तदुपपद्यते । नात्र चोदको लुप्तार्थमप्यतिदिशतीत्यर्थः ॥

प्रयोजनन्त्वनुष्ठानरूपम् – पक्षयोर्विशदम् ॥ २ ॥

एवं वा :–

## विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ (पू)

'वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान् तं बर्हिषदं कृत्वा शम्यया स्फ्येन वा व्यूहेत् – इदमहममुष्यामुष्य व्यूहामि । यं द्विष्यात्तं ध्यायेत, यदधोऽवमृज्येत, यच्च स्फ्य आश्लिष्येत् विष्णव उरुक्रमायावद्येत' इति श्रुतम् ।

तस्य विष्णोरावाहनं प्रति सन्दिह्यते – किं विष्णुरुरुक्रमः आवाहननिगदे [1]आवाहितव्यः? उत नावा[2]हितव्यः? इति । तत्र आग्नेये चतुर्धाकरणम् हस्तेन, अत्र तु शम्यया स्फयेन वा चतुर्धाकरणम् । तत्र लेपस्य वैष्णवत्वेन उरुक्रम विष्ण्वावाहनं प्रति विशये सति –

विधेः – आग्नेयविधेः, प्रकरणान्तरे – आग्नेयविकारे उरुक्रम विष्णु-यागान्तरे अतिदेशात् सर्वकर्म – आवाहनादिरूपं सकलं कर्म स्यात्, न

---

१, २ आवाहयितव्यः नावाहयितव्यः – इति साधु ।

तु नैमित्तिकस्य स्फ्य शम्याऽऽज्यश्लेषस्यानित्यत्वेन अनावाहनम्। किन्तु अग्निमग्न आवहेत्यावाहनकाले (अनाग )तेऽपि निमित्ते आवाहयितव्यो विष्णुरुरुक्रम इति ॥

अपि वाभिधानसंस्कारद्रव्य मर्थे क्रियेत तादर्थ्यात् ॥ (सि)

अपिवेत्यावाहनपक्षो व्यावर्त्यते। अभिधानसंस्कारद्रव्यं—देवताभिधानरूपस्संस्कारो द्रव्यं वा अर्थे—प्रयोजने—स्फ्याश्लेषरूपे निमित्ते सत्येव देवतावाहनं क्रियेत, नत्वनिपतितेऽपि निमित्ते। कुतः कारणात्? तादर्थ्यात्—विष्णुयागस्य स्फ्याश्लेष निमित्तत्वादित्यर्थः। निमित्तोत्तरकालमेव नैमित्तिकानुष्ठानं न तु निमित्तागमनात्प्रागपि भवति। अतो निमित्तागमनानन्तरं आज्यभागदेवते आज्य ... ... दतो विष्णुरुरुक्रम आवाहयितव्यः। प्रयाजादयस्तु तन्त्रेणोपकुर्वन्ति। अतो निमित्तानन्तरमेव देवताया विष्णोरावाहनं, न प्राक्चतुर्धाकरणादित्यर्थः ॥

तेषां प्रत्यक्षशिष्टत्वात् ॥

यदुक्तं कृष्णलेष्ववघातवत् अप्राप्तेऽपि स्फ्याश्लेषरूपे निमित्ते देवता आवाहयितव्येति, ततोत्तरम्—तेषां—कृष्णलानां घृते पाकस्य प्रत्यक्षश्रुतिशिष्टत्वेन लुप्तार्थस्यापि पाकस्यानुष्ठानमुपपद्यते। नात्राप्राप्तस्यापि देवतावाहनस्य प्राक् कर्त(व्यत्वे श्रुत्यादिकमस्ति।) अतः प्राक् लोप एवावाहनस्य ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पक्षयोर्विशदतरम् ॥ ३ ॥

(आरंभणीयारंभाभावाधिकरणम्—४)

इष्टिरारंभसंयोगा दङ्गभूतान्निवर्तेतारंभस्य प्रधानसंयोगात् ॥ ४ ॥ (सि)

ज्योतिष्टोमे दर्शपूर्णमासप्रकृतिकानि "आग्नावैष्णवमेकादशकपालं निर्वपेत्" इत्यादीनि कर्माणि सन्ति। अस्ति च प्रकृतावन्वारंभणीयेष्टिः—आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमाणः सरस्वत्यै चरुं

सरस्वते द्वादशकपालं अग्नये भगिनेऽष्टाकपालं निर्वपेत् यः कामयेत भग्यन्नादः स्यामिति, नित्यवदेके भगिनमामनन्ति" इति ।

तत्र सन्दिह्यते—किमारम्भणीयाद्यारंभेऽनुष्ठेया? उत नानुष्ठेया? इति ।

तत्र इष्टिः—अन्वारम्भणीयाख्या अङ्गभूतात्—ज्योतिष्टोमाङ्गभूतात् दीक्षणीयादेः निवर्तेत । कुतो हेतोः? आरम्भसंयोगात्—कर्मादिमारम्भ एवान्वारम्भणसंयोगात् प्रकृतौ । न च दीक्षणीयादीनामपि पृथगवान्तरारम्भो वर्तत इति कृत्वा निमित्तभूतस्यारम्भमात्रस्य तत्रापि संभवात् नैमित्तिकी आरंभणीया स्यादिति वाच्यम् । कुतो हेतोः? प्रकृतौ आरंभस्य प्रधान दर्शपूर्णमास संयोगात्, अत्र च दीक्षणीयाद्यारंभस्य ज्योतिष्टोमाङ्गसंयोगात् ज्योतिष्टोमार्थत्वेन दीक्षणीयादीनां—स्वातन्त्र्याभावात्, स्वातन्त्र्याभावे च पृथगारंभस्याभावात्, पृथगारंभाभावे च तन्निमित्तकारंभणीया न प्राप्नोति । प्रकृतावग्निप्रणयनस्य वा सङ्कल्पस्य वा आरंभपदार्थत्वात् । अत्रापि सोमे सङ्कल्पस्यानौदासीन्यरूपस्य वा अग्निप्रणयनस्य वा प्रथमप्रवर्तितस्यारंभवाच्यत्वात्, तदारंभेणैवान्तरालिकानामपि दीक्षणीयादीनामारब्धत्वात् ज्योतिष्टोमारंभे च आरंभणीयाया अननुष्ठेयत्वेन प्राप्त्यभावान्निवर्तेत दीक्षणीयादिषु ऐष्टिकेषु । अपि च "आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण" इत्यारभ्य, "देवताश्चैव यज्ञश्चोभयतः परिगृह्यारभते" इति उपसंहारस्थे दीक्षणीयार्थवादवाक्यशेषे दीक्षणीयाया आरंभार्थत्वस्यापि प्रतीयमानत्वात् न पृथगारंभणीया दीक्षणीया ... ... ... ... ... ... च यः ॥ ४ ॥

प्रयोजनन्त्वनुष्ठानाननुष्ठानभेदेन विशदतरम् ॥ ४ ॥

(सर्वारंभाधिकरणम्—५)

## प्रधानाच्चान्यसंयुक्तात्सर्वारंभान्निवर्तेतानङ्गत्वात् ॥ ५ ॥ (सि)

राजसूये इष्टिपशु दर्विहोमाः प्रधानभूता आम्नाताः ॥

तत्रैष्टिकेषु सन्दिह्यते—किमारंभणीया आरभ्या? नवा? इति ।

तत्र अन्यसंयुक्तात्—प्रधानभूतापरसोमादिसंयुक्तात् अनुमत्यादिरूपात्

प्रधानात् – प्रधानसकाशात् – इष्टिपशुसोमदर्विहोमादि समुदायरूपात् प्रधान-सकाशात् आरंभणीया निवर्तेत – अनुमत्यादिकर्मारंभे न स्यादारंभणीयेत्यर्थः। कुतः? सर्वारंभात् – अग्निष्टोममग्रे ज्योतिष्टोममाहरतीति प्राथमिकाग्निष्टोमस्यैव सर्वारंभार्थत्वेन प्रत्याम्नानात्, प्रत्याम्नाने च प्राकृता (न्वारंभणीया) निवृत्तिः। हेत्वन्तरञ्च – अनङ्गत्वादिति। अन्वारंभणीयायाः केवलं प्रकृतौ प्रधानारंभ-मात्रार्थत्वेन इष्टिपशुसोमदर्विहोमादिकर्मसमुदाये अनङ्गत्वाच्च नानुष्ठानम्। प्रत्याम्नानवचनमभ्युपेत्यवादः। वस्तुतस्तु पृथक्प्रधानेष्ट्यारंभार्थत्वेन राज-सूयादिषु ... ... अर्थलोपात् अन्वारंभणीयाया लोपो राजसूये। प्रत्याम्नान वाक्यश्च क्रमपरम् ॥ ५ ॥

प्रयोजनन्त्वनुष्ठानरूपं सुगमम् ॥ ५ ॥

(आरंभणीयारंभाधिकरणम् – ६)

## तस्यान्तु स्यात्प्रयाजवत् ॥ ६ ॥ (पू)

आरंभणीयेष्टयामेव सन्देहः – किमारंभणीयारंभार्थं आरंभणीया स्यात्? उत न? इति।

तस्याम् – दर्शपूर्णमासाङ्गभूतायामप्यन्वारंभणीयायां अन्वारंभणीयान्तरं स्यात् तदारंभार्थम्। तत्र दृष्टान्तः – प्रयाजवत् इति। यथा अन्वारंभणीयायां दार्शपूर्णमासिकाः प्रयाजा अतिदेशेन प्रवर्तन्ते तद्वदङ्गत्वाविशेषात् अन्वारंभणीया-यामप्यङ्गभूतायां अङ्गान्तरवदेवारंभणीयातिदिश्येत। तस्मात् विधेः प्रकरणा-न्तरेऽतिदेशन्यायेनानुष्ठानम् ॥ ६ ॥

## न वाङ्गभूतत्वात् ॥ ७ ॥ (सि)

नैवारंभणीयायामारंभणीयान्तरं कर्तव्यम्। कुतः? अङ्गभूतत्वात् – दर्शपूर्णमासाङ्गभूतत्वात्। तदयमर्थः – प्रधानसमारंभार्थत्वादन्वारंभणीयायाः, तस्याश्च दर्शपूर्णमासाङ्गत्वेन, अङ्गारंभे नान्वारंभणीया स्यादिति। दूषणान्तर-ञ्चाव्यवस्था। आरंभणीयायाः तस्याश्च समानेऽहनि कर्तव्यत्वात् तस्मिन्नहनि यावत्कृत्वोऽभ्यसितुं शक्यते तावदभ्यासः ततः (पू)र्णिमारंभ इति ॥ ७ ॥

## एकवाक्यत्वाच्च ॥ ८ ॥

यदुक्तं प्रयाजवदारंभणीयायामारंभणीयान्तरमिति, तत्रोत्तरम्। चकारो हेत्वन्तरार्थः। नैव प्रयाजादिवदतिदेशो भवत्यारंभणीयायामारंभणीयान्तरस्य। यद्येतदारंभणीयावाक्यं आरंभणीयां प्रयाजादिवद्दर्शपूर्णमासाङ्गं विदध्यात्, तर्हि अङ्गविधानुपक्षीणत्वेनातिदेशे शक्तिर्लुप्येत। यदि सौर्यादिवाक्यवदङ्गाति-देशमनु(माप)येत्, तर्हि प्रकृतौ वाक्यान्तरेण अङ्गविधानाभावात् अङ्गत्वेनापि तस्याः अतिदेशानुपपत्तिः। यदि हि अङ्गविधिपरमपि इदं वाक्यं—अति-देशानुमापकश्च इदं वाक्यं, तर्हि एकवाक्यत्वाद्धेतोः उभयविधाने वाक्यभेदात् तदपि नोपपद्यते। (अतः) आरंभणीयायां अन्वारंभान्तरं प्रयाजादिवत्स्यादिति वाचोयुक्तिरसमञ्जसा। प्रयाजादीनान्तु प्रकरणमध्ये स्व ... ... पेण विहितानां प्रकरणेनाङ्गाङ्गिभावो बोध्यते, ततोऽतिदेशः। आरंभणीयायां तु बहिरनुष्ठेयायां दार्शपूर्णमासिक विकृतिरूपायां (अतिदेशे) न तादृशं कारणम् ॥ ८ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—सुगमतरम् ॥ ६ ॥

(खलेवाल्यां यूपाहुतेरननुष्ठानाधिकरणम्—७)

## कर्म च द्रव्यसंयोगार्थ मर्थाभावान्निवर्तेत तादर्थ्यं श्रुति-संयोगात् ॥ ९ ॥ (सि)

अग्नीषोमीये पशौ श्रूयते—'यूपमच्छैष्यताहोतव्यं, न दीक्षितस्याग्नौ जुहोति, आज्यञ्चारणी चादाय यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति" इति। साद्यस्के तु श्रूयते—'खलेवाली यूपो भवति' इति।

तत्र सन्दिह्यते—किं खलेवाल्यां यूपाहुतिः कर्तव्या? न वा? इति।

कर्म—यूपाहुतिरूपं कर्म—'यूपं—यूपार्हं काष्ठं यूपीकर्तुं, अच्छ—प्राप्तुं, छेदनार्थं प्राप्तुं, एष्यता—गमिष्यता, अध्वर्युणा कर्तव्यमित्यर्थनिर्णये सति, तद्यूपाहुतिकर्म, यूपरूपद्रव्यसंयोगार्थम्। तदयमर्थः—यूपच्छेदनार्था प्राप्तिः, यूपप्राप्त्यर्थञ्च गमनम्, तद्गमनार्था च यूपाहुतिः। ततः खलेवाल्यां

ईदृशार्थाभावात् आहुतिर्निवर्तते—लुप्यते। यतः कारणात्—श्रुतिसंयोगात् यूपमिति द्वितीयाश्रुतिसंयोगात् यूपाहुते स्तादर्थ्यम्—यूपसंस्कारार्थत्वम्; ततः कारणात् खलेवाल्यां यूपाहुतिर्निवर्तते—यूपाहुत्यादयो लुप्तार्थास्सर्वे निवर्तन्त इत्यर्थः ॥ ९ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—अनुष्ठानाननुष्ठानभेदेन प्रसिद्धम् ॥ ७ ॥

(स्थाण्वधिकरणम्-८)

## स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥ (पू)

अग्नीषोमीये पशौ 'स्थाणौ स्थाण्वाहुतिं जुहोति' इति स्थाण्वाहुतिरभिहिता।

खलेवाल्यान्तु सन्दिह्यते—किं खलेवाल्यां स्थाण्वाहुतिः कर्तव्या? न? इति।

तत्र, तुः एवकारार्थे। स्थाणुशब्दस्य (काष्ठ) मात्रार्थत्वात् स्थाणौ—यस्मिन् कस्मिंश्चित् अयूपीयेऽपि आरादुपकारकत्वेन कर्तुं शक्यत्वात् खलेवाल्यां स्थाण्वाहुते रनिवृत्तिः—प्रवृत्तिः ... ... ... ... प्रतीयेत। न तु यूपमच्छेष्यता स्थाण्वाहुतिः कर्तव्येति यूपसंस्कारार्थत्वात् स्थाण्वाहुतेः खलेवाल्यां निवृत्तिः। किन्तु खलेवाल्या (अन्यत्र) स्थाण्वन्तरे क्रियमाणा आरादुपकारिणी स्यादित्यर्थः ॥ १० ॥

## अपिवा शेषभूतत्वात्तत्संस्कारः प्रतीयेत ॥ ११ ॥ (सि)

(अपिवेति) स्थाण्वाहुतेरारादुपकारकत्वपक्षो व्यावर्त्यते। तत्-संस्कारः—यूपसंस्कार एव स्थाण्वाहुतिः प्रतीयेत, नारादुपकारिणी, कुतः? शेषभूतत्वात्—यूपमच्छेष्यता स्थाण्वाहुतिः कर्तव्येति फलवद्यूपशेषभूतत्वात् आरादुपकारकत्वे च फलकल्पनाप्रसङ्गात् संस्कारकमेव स्थाण्वाहुतिः। अतः खलेवाल्यां निवर्तते। प्रकृतौ तु स्थाणौ क्रियमाणापि स्थाण्वाहुतिः यूप-संस्कारिकैव; यथा आचार्यधृतमालिकायाः शुचिदेशे निधानेन आचार्यसत्कृति रूपस्संस्कारोऽवगतो भवति, तद्वदत्रापि—इति ॥ ११ ॥

## समाख्यानञ्च तद्वत् ॥ १२ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। स्थाण्वाहुतिः स्थाण्वाहुतिरिति स्थाणुप्रधानाहुतिः कर्मणि षष्ठी। स्थाणोरीप्सिततमत्वात्, सप्तमीसमासस्य चाशास्त्रप्राप्तत्वेनापरिग्राह्यत्वात् षष्ठीसमासेच यूपीयत्वेन अभीप्सितत्वरूप **समाख्यानञ्च तद्वदेव** – प्रागुक्तवदेवोपपादकम् ॥ १२ ॥

## [1]मन्त्रवर्णाच्च ॥ १३ ॥

चकारो हेत्वन्तरार्थः। "अतस्त्वन्देव वनस्पते शतवल्शोविरोहे"ति 'देव वनस्पत" इति अयूप ... ... स्थाणुं यूपमिवाद्रियमाणात् मन्त्रवर्णाच्च यूपसंस्कारार्थैव स्थाण्वाहुतिः नत्वारादुपकारिणी यत्रकुत्रचित् स्थाणावयूपीयेऽपि (प्रत्येति) ॥ १३ ॥

प्रयोजनन्त्वनुष्ठानरूपम् विशदप्रायम् ॥ ८ ॥

(उत्तमप्रयाजाधिकरणम् – ९)

## प्रयाजेच तन्न्यायत्वात् ॥ १४ ॥ (सि)

दर्शपूर्णमासयोः स्वाहाकारं यजतीति उत्तमप्रयाज स्समाम्नातः।

तत्र सन्दिह्यते – किं उत्तमप्रयाज आरादुपकारकं कर्म? उत संस्कार कर्म? इति।

इदमप्यपरं चिन्तयितव्यम् – किमाज्यभागादिषु या देवतास्ता एव देवता अत्रोत्तम प्रयाजे कीर्त्यन्ते? उत ताभ्योऽन्या देवताः? इति।

तत्र चकारोऽतिदेशार्थः। उत्तमप्रयाजे च यष्टव्या देवता ... ... कत्वं युक्तम्। कुतो हेतोः? तन्न्यायत्वात् – स्थाण्वाहुतिन्यायत्वात्। यथा स्थाण्वाहुतेर्यूपसंस्कारार्थत्वं, तथैव 'अपिवाशेषभूतत्वा'दिति न्यायेन ... ... ... ... आज्यभागादि देवतासंस्कारार्थत्वमेव युक्तम्। नत्वारादुपकारकत्वेन स्वाहाकाराख्यापर देवताभिधानम्। तस्मादुत्तमप्रयाज स्संस्कारार्थः ॥ १४ ॥

---

१ मन्त्रवर्णश्च तद्वत्. क. ख.

लिङ्गदर्शनाच्च ॥ १५ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । चातुर्मास्येषूत्तमप्रयाजे "स्वाहाग्निं, स्वाहा सोमं, स्वाहा सवितारं, स्वाहा सरस्वतीं, स्वाहा पूषणं [1]स्वाहेति रूपो निगद आम्नातः । तादृशलिङ्गदर्शनाच्च उत्तमप्रयाजस्याज्यभागादिषु यष्टव्यदेवतानामग्न्यादीनां संस्कारकत्वमेव । नारादुपकारक उत्तमप्रयाजः ॥ १५ ॥

प्रयोजनंत्वनुष्ठानरूपम् — विकृतावनूहोहभेदेनोन्नेयम् ॥ ९ ॥

( आज्यभागाग्न्यधिकरणम् — १० )

[2]तथाज्याग्निरपीति चेत् ॥ १६ ॥ ( पू )

दर्शपूर्णमासयोः श्रूयते — "आज्यभागौ यजति" इति । तत्रापरमपि श्रूयते — "तौ होचतुः किमावयोस्तत्र स्यादि"ति । "यस्यै कस्यै चिद्देवतायै हविर्निर्वपति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजती"ति । तौ न सौम्येऽध्वरे न पशौ इति ।

तयो राज्यभागयोर्मध्ये योऽग्नियागः, स किं देवतासंस्कारार्थः ? उत आरादुपकारकः ? इति सन्देहे सति —

उत्तमप्रयाजोग्नि देवतासंस्कार इति; उत्तमप्रयाज आज्यभागादिषु यष्टव्यदेवतासंस्कार इति पश्यसि चेत्; तर्हि आज्याग्निः — आज्यभागाग्नियागोऽपि, तथा — संस्कारक एव स्यात् प्रधानाग्नेः पुरोडाशभागिनः । तस्मा"दपि वा शेषभूतत्वा" दितिन्यायेन नारादुपकारक आग्नेयाज्यभागः ॥

[3]न व्यपदेशाद्देवतान्तरम् ॥ १७ ॥ (सि)

नैतदुपपद्यते — आग्नेयाज्यभागः प्रधानाग्निदेवतासंस्कारक इति । किन्तु

१ इदं अधिकम्.

२ तथाज्यभागाग्निरपीति चेत् — क. ख.

३ व्यपदेशाद्देवतान्तरम् — क. ख.

आज्यभागाग्निः प्रधानदेवतासकाशात् देवतान्तरम्, न तु स एव। यतस्त-त्संस्कारक आज्यभागः स्यात्। कुतः कारणात्? व्यपदेशात्—“अग्निमग्न आवह, सोममावह, अग्निमावह, प्रजापतिमावह,” इत्यावाहनमन्त्रे, आज्यभागदेवताया अग्नेः प्रधानदेवताया अग्नेः भेदेन व्यपदेशात्। भेदव्यपदेशश्च देवतान्तरत्वद्योतकः। यथा” ब्राह्मण आगतो वृषल आगतो ब्राह्मण आगत” इत्युक्ते, द्वितीयब्राह्मणशब्दात् ब्राह्मणान्तरमेव प्रतीयेत, न पुराभिहित एव, वृषलपदव्यवधानात्। तद्वदत्रापि सोमेन व्यवधानात् देवताभेद एव। अतो न प्रधानदेवतासंस्कारकत्वं, किन्त्वारादुपकारकत्वमिति ॥ १७ ॥

## समत्वाच्च ॥ १८ ॥

चकारः प्रागुक्ते प्राप्तिसूचकः। आज्यभागयागस्य च प्रधानयागस्य च यागरूपत्वात् आज्यभागयोरुभयोरपि प्रयोजनवत्त्वात्, आज्यभागयोरन्यतरस्य संस्कारकत्वं, अन्यतरस्यारादुपकारकत्वमिति वक्तुमशक्यत्वात्, तदुक्तौ च लिङ्गद्वयदूषणापत्तेः, सौमिकाज्यभागवदेवाग्नेयाज्यभागोऽप्यारादुपकारक एव। किञ्च ‘अभीषू वा एतौ यज्ञस्य यदाघारौ’ ‘चक्षुषी वा एते यज्ञस्य यदाज्य भागौ’ [1] यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतत् यज्ञस्य क्रियते वर्म यजमानाय’ इति आरादुपकारकाघारादि प्रायपाठादपि आरादुपकारकावाज्य-भागौ ॥ १८ ॥

प्रयोजनन्त्वनुष्ठानम्—विकृतौ देवतान्तरे ऊहानूहभेदेन विशदम् ॥ १० ॥

( छिद्रापिधानाधिकरणम्—११ )

## पशावपीति चेत् ॥ १९ ॥ (पू)

ज्योतिष्टोमे पशुरग्नीषोमीयः—‘आ सोमं वहन्त्यग्निना प्रतितिष्ठते तौ संभवन्तौ यजमानमभिसंभवतः, वरुणपाशाभ्यां वा एषोऽभिधीयते यो दीक्षितो यदग्नीषोमीयं पशुमालभते वरुणपाशाभ्यामेव निर्मुच्यते’ इति। तत्रापरमपि समाम्नातम्—‘अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति’ इति।

---

१ अत्र वाक्ये वैरूप्यम्?

तत्र सन्दिह्यते—किं पशुपुरोडाश आरादुपकारकः? उत पशुदेवता-संस्कारकः? इति ॥

तत्र आज्यभागावारादुपकारकाविति पश्यसि चेत्, तर्हि तथैव पशावपि अग्नीषोमीये पशुपुरोडाशोऽपि आरादुपकारक एव स्यात्। कुतो हेतोः? पशावग्नीषोमीये पशुपुरोडाशेऽपि देवताया अग्नीषोमयोर्गुणभूतत्वेन प्राधान्याभावात् आरादुपकारक एव स्यात्, न पशुदेवतासंस्कारकः इति ॥

## न तद्भूतवचनात् ॥ २० ॥ (सि)

आरादुपकारकत्वं नैवोपपन्नम्। नारादुपकारकः पशुपुरोडाशः। कुतः कारणात्? "यद्यासोमं वहन्त्यग्निनाप्रतितिष्ठते" इत्यर्थवादात् पशुदेवताप्यन्या पुरोडाशदेवता ... ... देवतान्तरमेव विधीयत इति गम्यते; तर्हि "यद्देवत्यः पशुः तद्देवत्यः पशुपुरोडाशः" इति तद्भूतवचनात् देवतैक्यप्रतिपादन-परात् ... व पशुदेवतैव पुरोडाशेऽपि प्रतीयेत। न तु देवतान्तरम्। यतो भूतभव्यन्यायेन गुणभूता देवता विधीयेत तद्धि ... ... ... ... ... उपकारकः पशुपुरोडाशस्स्यात् न तादृशमस्तीत्यर्थः ॥ २० ॥

## लिङ्गदर्शनाच्च ॥ २१ ॥

चकारो हेत्वन्तरसमुच्चायार्थः। "इन्द्राय वज्रिणे ऋषभमालभेत" इति वैकृते पशौ, इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठं स्तुहि शूरं वज्रिणमप्रतीतम्" इति संप्रतिपन्नवज्रीन्द्रदैवत्यमेव याज्यानुवाक्यायुगलं पशुपुरोडाशक्रमे समाम्नातम्। ततः पशुपुरोडाश याज्यानुवाक्यायुगलेऽपि वज्रिण एव देवतायाः प्रत्यभिज्ञानात् न देवतान्तराशङ्कार्थवादवाक्ये। तस्मात् देवतैक्यात् संस्कारकमैव पशुपुरोडाश इति ॥ २१ ॥

## गुणो वा स्यात्कपालवद्गुणभूतविकाराच्च ॥ २२ ॥

पुनर्विशेषविवक्षया आरादुपकारकत्वे प्राग्वर्णित एव हेतुरुपदिश्यते। गुण एव स्यात् अग्नीषोमदेवता उभयत्रापि—पशौ, पुरोडाशे च। ननु

कुत्रचित्प्रधानभूता—कुत्रचिद्गुणभूतेति । तत्र दृष्टान्तः—कपालवत्—इति । यथा कपालं श्रपणे तुषोपवापे च गुणभूतम् उभयत्रापि । न तावता काचित् क्षतिः । एवमत्रापि पशौ अग्नीषोमयोः प्राकृत गुणभूताग्नीषोम-विकारात्—तद्विकारत्वादित्यर्थः । गुणभूतादेव धर्मप्राप्तिर्युक्ता, न तु गुणभूतात् प्राकृतात् प्रधानभूतपशुपुरोडाशदेवे अतिदेश उपकाराणामित्यर्थः । अत आरादुपकारक एव पशुपुरोडाशः पशुदेवतायाः ॥

किञ्च सौत्रामण्यां, आश्विन सारस्वत सुत्राम देवत्येषु पशुषु, ऐन्द्र-सावित्रवारुणाः पुरोडाशाः भिन्नदेवताकाः समाम्नाताः । तच्च समाम्नानं पशुपुरोडाशस्यारादुपकारकत्व एवोपपन्नम्, न तु संस्कारकत्वे, देवतैक्या-प्रत्यभिज्ञानात् ॥ २२ ॥

## अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकार-वदङ्गानामर्थसंयोगात् ॥ २३ ॥

अपिवेत्यारादुपकारकत्वपक्षो व्यावर्त्यते । पशुपुरोडाशस्तत्संस्कारः—पशुदेवतासंस्कार एव प्रतीयेत । कुतः? शेषभूतत्वात्—पाशुके कर्मणि पशुदेवताया गुणभूतत्वात् । अत एव तत्संस्कारः पुरोडाशः । कुतो हेतोः? अङ्गानां—एवंभूतानां अर्थसंयोगात्—प्रयोजनसंयोगात् । अत च संस्काररूप प्रयोजनेन पाशुकाग्नीषोम*देवतायास्संयोगो वर्तते । दृष्टे संस्कारे संभवति नादृष्टमारादुपकारकत्वं युक्तम् । तत्र दृष्टान्तः स्वाहाकारवत् इति । यथा स्वाहाकारः उत्तमप्रयाजः यष्टव्यदेवतासंस्कारस्मरणरूपप्रयोजनवत्त्वेन संस्कारकर्म, तद्वदस्यापि पशुपुरोडाशस्य इष्टदेवतासंस्कारकत्वमेव युक्तं नान्यथा । अतः पशुपुरोडाशे देवतातद्धितः प्रधानभूतदेवताक एव । न तु पशाविव गुणभूतदेवताकः । एवमपि निर्देशस्स्यात्तच्चान्वेषणीयम् ॥ २३ ॥

## व्यृद्धवचनञ्च विप्रतिपत्तौ तदर्थत्वात् ॥ २४ ॥

---

* अत्र तालपत्रस्य दक्षिणपार्श्वे अतिरिक्ततया किञ्चिल्लिखितमस्ति । पत्रप्रान्तस्य भग्नत्वात् अशक्योद्धारमिदम् ।

चकारो हेत्वन्तरसमुच्चयार्थः सौत्रामण्यां, 'यद्वै सौत्रामण्यां व्यृद्धं तदस्यै समृद्धमिति, यदन्यदेवत्याः पशुपुरोडाशा भवन्ति, अन्यदेवत्याः पशव' इति व्यृद्धवचनञ्च संस्कारपक्ष एवावकल्पते । अन्यथा देवताभेदे सति, 'यद्व्यृद्धं सौत्रामण्यां तदस्यै समृद्धतर'मिति वक्तुमशक्यत्वात् अन्यद्व्यृद्धं-अन्यत्समृद्धं इत्येव स्यात् । तस्मात् पशुपुरोडाशानां तदर्थत्वात् – पशुदेवता संस्कारार्थत्वात् देवतैक्याभावेऽपि प्रकृतिवत् संस्कारत्वाविशेषात् इहापि देवताभेदेऽपि समृद्ध-समृद्धतरत्वप्रतिपादनात् संस्कारकर्मैव ॥ २४ ॥

[1] गुणविधिरिति चेत् ॥ २५ ॥

इति चेत् पश्यसि–संस्कारपक्ष एव व्यृद्धवचनमवकल्पते, नारादुपकारकत्व इति; तर्हि गुणविधिरर्थवाद एव स्यात् व्यृद्धवचनम् । कुतः? 'अन्यदेवत्याः पशवोऽन्यदेवत्याः पशुपुरोडाशा' इति – अन्यत्समृद्धं – अन्यद्व्यृद्धमिति अर्थवादः अनन्वितार्थमेव व्यृद्धवचनं स्यात् । अत एव उभयोरप्यावयोर्दोषस्सम एव, नत्वेकश्चोद्यः । तस्मादर्थवाद एव । अतः आरादुपकारकत्वं पशुपुरोडाशस्य, न संस्कारकत्वम् ॥ २५ ॥

नासंहानात्कपालवत् ॥ २६ ॥

नैतदेवं–आरादुपकारक एव पशुपुरोडाश इति, यदि कपालवत् श्रपणार्थत्वं, तुषोपवापार्थत्वञ्च–तद्वदेवात्रापि स्यादिति; तर्हि भवदीये पक्षे, यथा [2]एकस्मिन्नपि कपाले तुषेपूप्यमानेषु नान्येषां कपालानां काचिदपि क्षतिः; तद्वदत्रापि अन्यदेवत्यः पशुपुरोडाशो निर्वर्त्यमानोऽपि न काञ्चिदपि पशुदेवताक्षतिं करोति इति व्यृद्धस्यैवाव्यृद्धवचनमिति स्तुतिर्नोपपद्यते । अस्मदीये तु पक्षे अन्यदैवत्यत्वेनाव्यृद्धस्य अन्यदैवत्यत्वेन समृद्धिरिति अर्थवाद उपपद्यते । अतस्संस्कार एव देवतास्मरणरूपः पशुपुरोडाशेन क्रियत इति, न कपालवद्देवताया गुणभूतत्वम्, तत आरादुपकारकत्वमिति ॥ २६ ॥

---

१ गुणेऽपीति चेत् क. ख.

२ एकेनापि कपालेन – इति साधु ।

ग्रहाणाञ्च संप्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २७ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। सौत्रामण्यां, "नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः" इति यद्वचनं, तद्वचनं ग्रहाणां। संप्रतिपत्तौ—देवतासंस्कारकत्व इत्यर्थः। तच्चै सिद्धे सत्येवोपपद्यते—नान्यथा। कुतो हेतोः ? तदर्थत्वाद्—पुरोडाशसाम्ये सति ग्रहाणाञ्च संस्कारकत्वसाम्येन तदर्थत्वात—पशुदेवतार्थत्वात् न तत्र सौत्रामण्यां अविद्यमानेषु पुरोडाशेषु तद्वचनं किन्तु विद्यमानेष्वेव। अतस्तत्साम्यात्संस्कारकत्वमेव, नारादुपकारकत्वम् ॥ २७ ॥

ग्रहाभावे च [1]तद्वचनात् ॥ २८ ॥

चकारः संस्कारपक्षोपपादनार्थः । सौत्रामण्यां—"नैतस्य पशोर्ग्रहान् गृह्णन्ति, पुरोडाशस्थानेष पशुः" इति ग्रहाभावे यत् पुरोडाशवचनं, तस्माद्वचनात् संस्कारकत्वमेव ग्रहाणाञ्च। अयं भावः—यदि पुराडाशोऽपि पशुदेवतासंस्कारार्थ एव, तस्यैवेदं वचनं तत्सामान्यादुपपद्यते, नान्यथा। तस्मात्संस्कारकः पुरोडाशः ॥ २८ ॥

देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥ २९ ॥

चकारस्संस्कारपक्षोपपत्त्यर्थः । कुत्रचित् "अग्निभ्यः कामेभ्यः पशव आलभ्यन्ते, कामा वा अग्नयः, आग्नेयाः पशुपुरोडाशा भवन्ति, आग्नेया हि पशवः" इति पशुदेवतायाः पुरोडाशं प्रति प्रसिद्धं हेतुत्वं ब्रुवन् संस्कारार्थतामेव तेन "हिना" दर्शयति—पशुदेवताहेतुकाः पशुपुरोडाशा इति। इदञ्च संस्कारकर्मत्व एवोपपद्यते, नारादुपकारकत्वे। आरादुपकारकत्वे तु वर्ण्यमाने पशुदेवतायाः पुरोडाशं प्रति हेतुत्वनिर्देश एव न सङ्गच्छते ॥

[2]अविरुद्धोत्पत्तिरर्थापत्तेः शृतवद्गुणभूतविकारत्वात् ॥३०॥

---

१ ... .... तद्वचनम् क. ख.

२ अविरुद्धोपपत्ति ... विकारस्यात्—क. ख.

यदुक्तमग्नीषोमीये पशुपुरोडाशस्य गुणभूत दार्शपूर्णमासिकाग्नीषोमविकारत्वात् गुणभूताग्नीषोमधर्माणां संस्कारकत्वेन प्रधानभूते अग्नीषोमीयेऽप्राप्तिस्तद्धर्माणामिति ; तन्न। प्रधानभूतयोरप्यग्नीषोमयोः पशुपुरोडाशदेवतयोः गुणभूतदेवताक प्राकृताग्नीषोमधर्मप्राप्तिः — अविरुद्धा। कुतः ? अर्थापत्तेः — प्राकृतकार्यनिर्वृत्तिरूपेऽर्थे, अस्या अप्यग्नीषोमदेवतायाः आपन्नत्वात् स्थानापत्त्या धर्मप्राप्तिः स्यात्, न तु गुणभूतत्वमत्र धर्मप्राप्तौ तन्त्रम्। अतः प्रकृतौ देवताया गुणभूतता — विकृतौ प्राधान्यमित्येतदविरुद्धम्। गुणत्वस्य धर्मप्राप्तावतन्त्रत्वात्। प्रकृतयागनिर्वर्तकस्वरूपस्थानापत्त्या अत्रापि धर्मप्राप्तिरिति न काचित्क्षतिः। तत्र दृष्टान्तः — श्रुतवदिति ; यथा "शृते चरुं" "दधनि चरु"मिति अभ्युदयेष्टौ प्रदानार्थे अपि प्रधानभूते दधिपयसी प्रणीताकार्यापन्ने तत्कार्यं कुर्वाणे अविरुद्धे, तद्वदत्रापि गुणभूतयोः प्राधान्यमविरुद्धमित्यर्थः॥

## स द्व्यर्थस्स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ [1]तादर्थ्यात्तद्विकारत्वमुक्तं स्यादर्थवादत्वम् ॥ ३१ ॥

इदं सूत्रं पूर्वपक्ष्युक्तानुवादार्थम्। सः—पुरोडाशयागः, द्व्यर्थस्स्यात्—देवतासंस्कारार्थं छिद्रापिधानार्थश्च स्यात्। कुतो हेतोः? उभयोरप्यर्थयोः श्रुतिभूतत्वात् — श्रुतिवृत्तत्वात्। अतस्सौत्रामण्यां पशुपुरोडाशदेवताविप्रतिपत्तौ पुरोडाशस्यारादुपकारकत्वेन तादर्थ्यात् — छिद्रापिधानार्थत्वात् तद्विकारत्वं — प्राकरणिकविकारत्वम्। आरादुपकारकत्व एव नियतप्रकरणसंबन्धस्स्यात्, अन्यथा उत्कर्षस्स्यादित्यर्थः॥

यद्युच्येत "यद्वै सौत्रामण्यां व्यृद्धं, तदस्यै समृद्ध"मिति संस्कारकत्वं पशुपुरोडाशस्य तस्याप्यर्थवादत्वमुक्तं स्यात् इति, पूर्वपक्षयुक्तिरनुभाषिता॥

## विप्रतिपत्तौ तासा माख्याविकारस्स्यात् ॥ ३२ ॥

अनुभाषणस्योत्तरम् :— प्रकरणादनुत्कर्षे आरादुपकारकत्वं न तन्त्रम्। किन्तु सौत्रामण्यां विप्रतिपत्तौ— पशुपुरोडाशदेवताविप्रतिपत्तौ, तासां—

---

१ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वं — क. ख.

विप्रतिपन्नानां देवतानां, प्राकृताग्नीषोमाख्यायाः—नाम्न एव विकारः स्यात्—अयमर्थः—इन्द्रसवितृवरुणेषु शब्देषु अश्विसरस्वतीसुत्रामशब्दावयवानां अचां हलां वा अनुप्रवेशात् पशुदेवताख्याया विकारस्स्यात्। अतः कारणादेवतैक्यम्। यथा—"सरस्वति देवनिदो निबर्हय प्रजां विश्वस्य बृसयस्य मायिनः" इति बृसयशब्दात् बृहच्छब्दावयवभाक्त्वात् तत्समानार्थो भवति, तद्वदत्रापि पशुदेवताशब्दैकदेशभाक्त्वात् पुरोडाशदेवताशब्दानां तद्विकार ... ... ...' ३२ ॥

## अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥

वाकार आख्याविकारपक्षव्यावर्तकः ॥

अभ्यास एव पुरोडाशयागस्य। कथमभ्यासः? 'ग्रहपुरोडाशा ह्येते पशवः' इति पशुदेवताया ग्रहाख्यद्रव्यान्तरं विधीयते, पुरोडाशानान्तु इन्द्राद्या अन्या देवता विधीयन्ते। ग्रहयागे पशुदेवतासंबन्धो ग्रहसंबन्धश्च कर्तव्यः। चोदकेन च पशुदेवता ग्रहे, पशुपुरोडाशश्च इन्द्रादिदेवत्यः। उभावपि प्राप्नुतः। पशुदेवतासंबन्धग्रहसंबन्धयोः यागाभ्यां विनाऽनुपपत्तेः पशुपुरोडाशयागस्याभ्यासः कर्तव्यः। यागाभ्यासे च पुरोडाशानामनुत्कर्षः सिद्ध्यति, नत्वारादुपकारकत्वेनानुत्कर्षः। अन्यदेवत्यस्तु पुरोडाशश्च ग्रहयागैकदेशः। तत्र दृष्टान्तः—प्रयाजवत्—इति। यथा पशौ 'एकादश प्रयाजान् यजति' इति प्रयाजैकादशत्वं प्रयाजयागाभ्यासं विना अनुपपद्यमानं बर्हिर्द्वारादीन् प्रयाजैकदेशानावर्तयति, इति न तत्र प्रयाजयागभेदः। बर्हिरुषादीनां प्रयाजैकदेशत्वादेवाविकृताः प्रयाजाः, तद्वदत्रापि आख्याविकारत्वमतिक्लिष्टं विनापि पुरोडाशयागाभ्यासेनैव प्रधानदेवतासंस्कारकत्वमुपपद्यते। अनुत्कर्षश्चात एव स्यात्, नारादुपकारकत्वात्। तस्मात्संस्कारपक्षेऽप्यनुत्कर्षस्स्यादित्यर्थः ॥ ३३ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—नातीव गहनम्। अतो न विलिख्यते ॥ ११ ॥

(चरुहविरधिकरणम्—१२)

## चरुर्हविर्विकारस्स्यादिज्यासंयोगात् ॥ ३४ ॥ (सि)

सौर्यादिचरौ आग्नेयविकारत्वे समधिगते सत्यपरं सन्दिह्यते—किं चरुः कपालविकारः? उत हविर्विकारः? इति।

यदा च हविर्विकारः तदा किं स्थाल्या हविर्विक्रियते? उत ओदनेन? इति॥

तत्र चरुर्हविर्विकार एव—आग्नेयहविर्विकार एव स्यात्, न कपालविकारः। कुतो हेतोः? इज्यासंयोगात्—'सौर्यश्चरुं' इति सूर्यदेवताकत्वेन इज्यायां हविष एव संयोगात्। कपालविकारत्वे तु प्रदेयत्वाभावान्न यागोऽभिनिर्वर्त्यते। तस्माद्धविर्विकार एव चरुस्तद्धर्मत्वात्॥ ३४॥

[1]प्रसिद्धग्रहणाच्च॥ ३५॥

चकारो विशेषोक्त्यर्थः। हविर्विकारपक्षेऽपि पक्षद्वयम्। तत्र प्रसिद्धग्रहणात्—आ च हिमवतः आ च कुमारीभ्यः स्थाल्यामेव चरुशब्दस्य प्रसिद्धत्वेन ग्रहणात्—प्रयोगात् स्थाली ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ ३५॥

[2]ओदनो वा तत्संयोगात्॥ ३६॥

वाकारः स्थालीविकारत्वपक्षव्यावर्तकः। ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... भागोऽस्तीत्यर्थः। कुतो हेतोः? तत्स्थाली संयोगात् ओदनस्य, स्थालीसंयुक्तेऽन्ने चरुशब्दो लक्षणया प्रवर्तते। अनद ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ओदनस्यैव वाचको लक्षणया चरुशब्द इति ओदनविकारस्तद्धर्मभाक्॥ ३६॥

न ह्यर्थत्वात्॥ ३७॥

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... व प्रसिद्धप्रयोगस्य चरुशब्दस्य ओदनवाचित्वे ह्यर्थत्वात्—

---

१ प्रसिद्धग्रहणत्वाच—क. ख.

२ ओदनो वान्नसंयोगात् क. ख.

अर्थद्वयवाचित्वात्–स्थालीसंयुक्तौदनलक्षणया च ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ ३७ ॥

## कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ ३८ ॥

कपालविकारो वा क ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... विर्विकारः। विशये–हविर्विकारत्वविशये सति कपालविकार एव। कुतो हेतोः? अर्थोपपत्तिभ्याम्–कपालविकारस्यापि ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... लेष्विव श्रवणोपपत्तिः। ताभ्यां अर्थोपपत्तिभ्यां कपालविकारत्वमेव, न हविर्विकारत्वम्। अतः स्थाली ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ ३८ ॥

## गुणमुख्यविशेषाच्च ॥ ३९ ॥

चकारः कपालविकारत्वपक्षोपपत्त्यर्थः। व्य ... ... ... ... ... ... ... ... ... ... ... ... ... ... .... ... गुणस्य चरुसंयुक्तौदनस्यैव बाधा युक्ता न स्थाल्याः। अयमेव हि गुणमुख्यविशेषः। इदं परपक्षस्य ... ... ... ... ... ॥ ३९ ॥

## तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ४० ॥

चकारो हविर्विकारत्वपक्षव्यावर्तकः। प्राजापत्यं चरुं निर्वपेच्छत कृष्णल ... ... ... ... ... ... ... ... ... ... ... ... ... ... शब्दश्रवणे सति अन्यस्य कृष्णलस्यैव, "चत्वारि चत्वारि कृष्णलान्यवघ्नती"ति हविष्ट्वात् न चरुशब्दस्य हविश्शब्दसकाशात् ... ... ... ... ... ... ... ... ... ... ... ... ... ... अतो नौदनवाची चरुशब्द इति। ४० ॥

## लिङ्गदर्शनाच्च ॥ ४१ ॥

चकारो हेत्वन्तरार्थः। "मारुतं चरुं निर्वपेत्पृश्निनयैदुग्धे प्रैयङ्गवं ग्रामकामः" इत्यत्र मृन्मयस्य चरोः अप्रियङ्गुविकारत्वरूप ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... .... ॥ ४१ ॥

## ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥

वाकारः कपालविकारत्वपक्षव्यावर्तकः । ... ... ... ... ... ... ... ... ... ... ... ... कुतो हेतोः? आ च हिमवतः आ च कुमारीभ्यः अनास्नावितान्तरे ऊष्मपक्के विशदसिद्धे ओदने वृद्धैः प्रयुज्य ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... योगात् स्थाल्यां मुख्यः, ओदने तत्संयुक्ते लक्षणयेत्यत्र नियामकाभावात्। प्रत्युत ओदन एव मुख्यत्वात् न ... ... ... ... ... ... ... ... ... स्थाल्याः कपालवत् पुरोडाशाधिश्रयणार्थत्वेन देवतायाश्चरुसंबन्धाभावात् अन्यस्य च प्राकृतस्य पुरो ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... त् प्राक् प्राप्त्यभावात् पुरोडाशोऽपि चोदकान्न प्राप्नोति। तस्माच्चरोरेव यागद्रव्यत्वात् तस्य हविरि ... ... ... ... ... ... ... ... ... ॥ ४२ ॥

## अपूर्वव्यपदेशाच्च ॥ ४३ ॥

इतश्चौदनेनैव हविर्विक्रियते । कुतो हेतोः? 'पुरोडाशेन वै देवा अमुष्मिँल्लोक आर्ध्नुवन् चरुणास्मिन् लोके' इति हविःप्राये चरोः व्यपदेशात्—निर्देशात्, ओदनेनैव हविर्विक्रियते, न कपालेन ... ... ... ... ... ... ... ... ... ... ॥ ४३ ॥

## तथाच लिङ्गदर्शनम् ॥ ४४ ॥

इतश्चौदनेनैव हविर्विक्रियते—'आदित्यः प्रायणीयश्चरुः' आदित्य उदयनीयश्चरुः' इति । ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... आज्यस्यैतं चरुमभिपूर्य चतुर आज्यभागान् यजति, पथ्यां स्वस्तिमिष्ट्वाग्नीषोमौ यजति अग्नीषोमाविष्ट्वा सवितारं यजति, ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... संबंधे सिद्धेऽपि ओदनशब्देन चरुनिर्देशरूप लिङ्गदर्शनात्तथैव—ओदनविकारतामेव ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... यदि तण्डुलो विंद्येत, आमं तद्धविस्स्यात्, इति तण्डुले हविश्शब्दं प्रयुञ्जानः ओदनविकारतामेव ... ...

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
ओदनधर्मा एव हविषि प्राप्नुयुः, न कपालधर्माः ॥ ४४ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – स्था ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... न्ते तु ओदनस्यैवेति स्पष्टम् ॥ १२ ॥

(सौर्यचरौ स्थाल्यामेव पाकाधिकरणम्–१३)

## स कपाले प्रकृत्या स्यादन्यस्य [1]चाश्रुतत्वात् ॥ ४५ ॥ (पू)

"सौर्यश्चरुं निर्वपेद्ब्रह्मवर्चसकामः" इत्यत्र चरुरोदनेन विक्रियत ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... पाल एव पक्तव्यः। नत्वनियमेन यस्मिन् कस्मिंश्चिद्द्रव्ये। किन्तु प्रकृत्या प्रकृतिवद्वाक्येन आग्नेयविकारेण ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... चित् पाकाधारस्य अश्रुतत्वात् प्रकृतिवद्वाक्येन कपाल एव श्रपणं चरोरिति ॥ ४५ ॥

## [2]संख्या चापि कपालवत् ॥ ४६ ॥

... ... ... ... ... ... ... ग प्राप्तौ कपालवदेव तद्गताप्यष्टादिसंख्या प्राप्येतेति असूत्रितपक्षानुवादप ... ... ... ... ... ... ... ॥ ४६ ॥

## एकस्मिन्वा विप्रतिषेधात् ॥ ४७ ॥

वाकार एतदुक्तिव्यावृत्त्यर्थः। यदि कपालवत् संख्याप्राप्तौ सत्यां बह ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... शक्तिविरोधात् कपालेष्वधिश्रयणं न स्यात्, तर्हि एकस्मिन्नेव कपाले अधिश्रयणमस्तु। एक ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... कपालेषु पुरोडाशः श्रपयितव्य इत्येवंरूपस्य शब्दस्याभावात्

---

१ ... चाश्रुतित्वात् क. ख.

२ इदं सूत्रं क. ख. नास्ति भाष्ये त्वनूद्यते।

अष्टाकपालो ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
॥ ४७ ॥

नवार्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात्पात्रलाभस्स्यात् अनियमोऽविशेषात् ॥ ४८ ॥

नैव कपाले चरुश्रपणम् । अपूपे—पुरोडाशे, अर्थान्तर ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... र्थान्तरस्य पुरोडाशे संयोगात् ईदृशस्य चरावभावात् न कपाले ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... र्थ पाकसंयुक्तं —विक्लित्तिसाधनवह्निज्वालासंयुक्तं द्रव्यमेव भवति ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... तस्मादविशेषात्—साधनविशेषानुपदेशात् अनियम एवाधिश्रयण ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ ४८ ॥

चरौ वा लिङ्गदर्शनात् ॥ ४९ ॥ (सि)

वाकारो यत्र क्वचिदनियमेन ... ... ... ... ... ... ... ... ... ... ... ... ... ... दितायां स्थाल्यामेव चरुपाकस्स्यात् । कुतः? यासु स्थालीषु सोमास्स्यु स्ते चरव स्स्युः) 'इति ... ... ... ... ... ... ... ... ... ... ... ... ह तस्मात् नानियमः। पाकाधारे कपाले कटाहे वा तत कर्तुमशक्यत्वादित्यर्थः ॥ ४९ ॥

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ १३ ॥

(पेषणाधिकरणम्—१४)

तस्मिन्पेषण मनर्थलोपात्स्यात् ॥ ५० ॥ (पू)

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... विक्रियत इत्येतावति समधिगते सति, तत्र पेषणादीन्प्रति विशयः—किं पेषणादीनि कर्तव्य ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...

... ... ... देव। कुतो हेतोः? अनर्थलोपात्–चरावपि पेषणस्य कर्तुं शक्यत्वेन अर्थलोप ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... पूर्वपक्षे फलम् ॥ ५० ॥

## अकर्म वाऽ[1]पूर्वहेतुत्वात् ॥ ५१ ॥ (सि)

वाकारः स ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... त चूर्णीकरणरूपस्यार्थस्य अपूपहेतुत्वात् पुरोडाशहेतुत्वात्। प्रत्युत ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ ५१ ॥

... ... ... ... ... ... ... ... ... त्कर्तव्यम्। सिद्धान्ते त्वीदृशानुष्ठानं फलिष्यति ॥ १४ ॥

(संयवनाधिकरणम्–१५)

## पिण्डार्थत्वाच्च संयवनम् ॥ ५२ ॥ (सि)

... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... क मिश्रणरूपं संयवनञ्च चरौ न प्राप्नोति। कुतो हेतोः? संयवनस्य पिण्डार्थत्वात्– ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... नमस्ति प्रयोजनाभावात् संयवनलुप्तिरेव ॥ ५२ ॥

सिद्धान्ते हीदं फलम्। पूर्वपक्षे एतद्विपरीतं ... ... ... ... ॥ १५ ॥

(संवपनाधिकरणम्–१६)

## संवपनञ्च तादर्थ्यात् ॥ ५३ ॥ (सि)

... ... ... ... ... ... ... र्थत्वात् सौर्यचरावेव। सौर्यचरौ उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपरूप ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... स्वपिष्टसंयवनार्थत्वात् प्रकृतौ। न चरौ

---

१ अक्रिया वा अपूपहेतुत्वात्–क. ख, अत्रापि व्याख्या तथैव.

संयवनेन प्रयोजनमस्ति । तस्मादर्थलो .... .... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥ ५३ ॥

सिद्धान्ते अनुष्ठानरूपम् । पूर्वपक्षे तु एतद्विपरीतम् । १६ ॥

(संतापनाधिकरणम्—१७)

## सन्तापन [1]मधःश्रपणार्थम् ॥ ५४ ॥ (सि)

सौर्यचरावेव प्रकृतौ, "वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां तपसा तप्यध्वं" इति मन्त्रेण यत् कपालानां अङ्गारैस्सन्तापनं, तन्न चरौ कर्तव्यम् । कुतः ? पुरोडाशस्याधः श्रपणार्थं प्रकृतावङ्गारैः सन्तापनं कृतम् । नात्र चरोरधःश्रपणं प्रकृतिवदस्ति । तस्मात्प्रयोजनलोपाल्लोपः ॥ ५४ ॥

प्रयोजनन्त्वनुष्ठानम् – इदं सिद्धान्ते, पूर्वपक्षे तु विपरीतम् ॥ १७ ॥

(उपधानाधिकरणम्—१८)

## उपधानञ्च तादर्थ्यात् ॥ ५५ ॥ (सि)

सौर्य चरावेव–उपधानञ्च प्रकृतिवन्न प्राप्नोति चरौ । कुतो हेतोः ? कपालोपधानस्य तादर्थ्यात् – पुरोडाशाधःश्रपणार्थत्वात् तथाभूतस्य द्वारस्य चरावभावात् लोप एव कपालोपधानस्य ॥ ५५ ॥

प्रयोजनमिदं सिद्धान्ते, पूर्वपक्षे तु विपरीतम् ॥ १८ ॥

(पृथुश्लक्ष्णाधिकरणम्—१९)

## [2]पृथुश्लक्ष्णे चापूपार्थत्वात् ॥ ५६ ॥

सौर्यचरावेव 'उरु प्रथस्वे' ति मन्त्रेण कपालेषु पुरोडाशं प्रथयति' इति पृथुप्रथनं, 'सन्ते तन्व श्च्यवन्तां परमादिति श्लक्ष्णं श्लक्ष्णीकरणम्—उभे च

१ .... मधःश्रपणाद. क ख.

२ पृथुश्लक्ष्णे चानपूपत्वात् क ख.

चरौ न प्राप्येते। कुतो हेतोः? उभयोरपि प्रथनश्लक्ष्णीकरणयोः अपूपार्थत्वात्—पुरोडाशार्थत्वात्। तादृशद्वारस्य चरावभावाल्लोप एव तयोरिति॥ ५६॥

प्रयोजनमिदं सिद्धान्ते अनुष्ठानरूपम्। विपरीतं तु पूर्वपक्षे॥ १९॥

(अध्यूहनाधिकरणम्–२०)

## [1]अध्यूहनञ्चोपरिपाकार्थत्वात्॥ ५७॥ (सि)

सौर्यचरावेव, "तस्मिन्वेदेन भस्मनाङ्गारानध्यूहति" इति भस्मनाङ्गारैश्च पुरोडाशस्योपरि आच्छादनं अध्यूहनं तच्च चरौ न प्राप्नोति। कुतः? उपरि पाकार्थत्वात्—प्रकृतावध्यूहनस्य पुरोडाशोपरि पाकार्थत्वात्। अत्र च तादृशद्वाराभावाल्लोपः॥ ५७॥

प्रयोजनमिदमनुष्ठानरूपम्—सिद्धान्ते, पूर्वपक्षेतु विपरीतम्॥ २०॥

(अवज्वलनाधिकरणम्–२१)

## तथाऽवज्वलनम्॥ ५८॥ (सि)

... ... ... ... तत्र चरौ "दर्भपुञ्जीलैरवज्वलयति" इति पौरोडाशिकं अवज्वलनञ्च उपरिपाकार्थत्वात् प्रकृतौ, इह चोपरिपाकाभावात् तस्यापि लोपश्चरौ॥ ५८॥

प्रयोजनमिदमनुष्ठानरूपं—सिद्धान्ते, विपरीतं पूर्वपक्षे॥ २१॥

(व्युद्धृत्यासादनाधिकरणम्–२२)

## व्युद्धृत्यासादनञ्च प्रकृतावश्रुतित्वात्॥ ५९॥ (सि)

सौर्यचरावेव, प्रकृतौ यत्कपालेभ्यः पुरोडाशं व्युद्धृत्यान्तर्वेद्यासादनं, तत् व्युद्धृत्यासादनञ्च चरौ न प्राप्नोति। कुतो हेतोः? अस्य व्युद्धृत्यासादनस्य प्रकृता वार्थिकत्वेन अश्रुतित्वात् न चोदकः प्रतिदिशति। यदि

---

१ अभ्यूहश्चोपरि ... क. ख.

प्रकृतौ "कपालेभ्यः पुरोडाशं व्युत्पाट्य गृहीत्वा अन्तर्वेद्यासादयति" इति शब्दस्यात्, तर्हि प्रकृतौ शब्दकृतत्वादत्रापि प्राप्नोति, न तादृशं प्रकृतौ वाक्यम्। भवतु वा व्युद्धृत्यासादनं प्राकृतं शाब्दम्, इह चरौ व्युद्धरणं खण्डशः क्रियमाणं नानापात्रभेदकमेव स्यात्। तस्मादत्र चरौ व्युद्धरणमार्थिकं न प्राप्नोति। ५९॥

प्रयोजनमिदं सिद्धान्ते, पूर्वपक्षे तु विपरीतम्। इमानि प्रागुक्तानि पृथगधिकरणत्वेन ... नेय ... ... पेषणादिषु कर्तव्यतां पूर्वपक्षीकृत्य द्वारलोपान्नास्तीत्येवं सर्वत्रोन्नेयम्॥ २२॥

इति जैमिनिसूत्रवृत्तौ फलवल्यां दशमस्याध्यायस्य प्रथमः पादः।

---

## दशमाध्याये द्वितीयः पादः

(कृष्णलपाकाधिकरणम्—१)

### कृष्णलेष्वर्थलोपा दपाकः स्यात्॥ १॥ (पू)

"प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णल मायुष्कामः" इति श्रुते कृष्णलचरौ, किं चोदकेन पाकः प्राप्यते, कर्तव्यः? उत न प्राप्यते, न कर्तव्यः? इति।

तत्र कृष्णलेषु—स्वर्णमाषेषु, अपाकः स्यात्—चोदकेन पाको न प्राप्नोतीत्यर्थः। कुतः? अर्थलोपात्—विक्लित्तिरूपस्यार्थस्य द्वारभूतस्य लोपादेव चराविव पाको न प्राप्नोतीत्यर्थः॥ १॥

### स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत॥ २॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। स्यादेव पाकः कृष्णलेषु। कुतः? 'घृते श्रपयति' इति प्रत्यक्षया श्रुत्या पाकस्य शिष्टत्वात्—विहितत्वात्। यद्यपि पाकस्य विक्लित्तिरूपो दृष्टोऽर्थो नोपपद्यते, तथाप्यदृष्टार्थं पाकस्स्यात्।

तत्र दृष्टान्तः–प्रदानवत् इति। यथा कृष्णलानामेवावदनीयानां देवतायै प्रदानं केवलमदृष्टार्थं, तद्वत्–इत्यर्थः ॥ २ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – अपाकपाकाभ्यां व्याख्यातम् ॥ १ ॥

( उपस्तरणाभिघारणाधिकरणम्–२ )

## उपस्तरणाभिघारणयो रमृतार्थत्वा दकर्म स्यात् ॥ ३ ॥

कृष्णलचरावेव, किं उपस्तरणाभिघारणे प्रकृतिवदत्रापि कर्तव्ये? अपि न कर्तव्ये? इति ॥

तत्र कृष्णलेषु उपस्तरणाभिघारणयोः अकर्म – अननुष्ठानमेव स्यात्। कुतः? अमृतार्थत्वात् – प्रकृतौ "यदुपस्तृणाति, यदभिघारयति, अमृताहुतिमेवैतां करोति" इत्यमृताहुतिसाम्यात् तयोः स्वादुभावार्थतां दर्शयति। न च कृष्णलेषु प्रकृतिवत् उपस्तरणाभिघारणाभ्यां स्वादुभावः कर्तुं शक्यते। तस्मादक्रियोपस्तरणाभिघारणयोः कृष्णलेषु ॥ ३ ॥

## क्रियेत वाऽर्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥

क्रियेत वा उपस्तरणाभिघारणं कृष्णलेषु। कुतः? स्वादुभावः कर्तव्य इत्येवंरूपस्यार्थस्य प्रकृतावश्रुतत्वेन अमृताहुतिवाक्यस्य अर्थवादत्वात्–उपस्तरणाभिघारणस्तुत्यर्थत्वात्, तयोश्चोपस्तरणाभिघारणयोः प्रकृतौ हविषि संसर्गहेतुत्वात्, तादृशसंसर्गस्य कृष्णलेष्वपि कर्तुं शक्यत्वात् अर्थलोपाभावाच्च प्रकृतिवदेव तयोश्चोदकेन प्राप्तिरित्यर्थः ॥ ४ ॥

## अकर्म वा चतुर्भिराप्तिवचनात् [1]सर्वं पुनश्चतुरवत्तम् ॥५॥

वाकार एतं पक्षं व्यावर्तयति। उपस्तरणाभिघारणयोः अकर्म–अननुष्ठानम्। कुतः? "चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै" इति चतुरवदानाप्तिवचनात्। पुनःशब्दः किञ्चार्थे। उपस्तरणाभिघारणा-

१ सद्वर्णं–क. ख.

वदानद्वयं सर्वमेव चतुरवत्तम् । न तूपस्तरणाभिघारणाभ्यां विना चतुरवत्तत्वम् । यतश्चत्वारिचत्वारि कृष्णलान्यवद्यतीत्यत्र कृष्णलव्यतिरेकेणापि तयोः प्राप्तिः स्यात्, न तादृशं संभवति ॥ ५ ॥

क्रिया वा मुख्यावदान परिमाणात्[1]सामान्यं तद्गुणत्वम् ॥ ६ ॥

वाकारः पक्षव्यावर्तकः । कृष्णलचरौ उपस्तरणाभिघारणयोः क्रिया-अनुष्ठानम् । कुतो हेतोः? प्रकृतौ "अङ्गुष्ठपर्वमात्राणि देवतानामवदानानि भवन्ति" इति मुख्याग्नेयाद्यवदानपरिमाणात्, इदं कृष्णलाख्यस्वर्णशकल-परिमाणं वैशेषिक ... ... तोपगुणरूपं कृष्णलपरिमाणं तत्सामान्यं-द्रव्य-सामान्यं, उपस्तरणाभिधारणरूपं निवर्तयितुं ... ... ... ... ... ... समर्थः । प्राकृतादङ्गुष्ठपर्वमात्रपरिमाणात् आग्नेयादिगतात् इदं स्वर्णशकलगतं कृष्णलाख्यं परिमाणान्तरं, तच्च प्रधाना ... ... ... ... ... ... प्रकृतिवत् संक्रामति । न तूपस्तरणाभिधारणे अपि निवर्तयेदिति ॥ ६ ॥

तेषाञ्चैकावदान[2]त्वम् ॥ ७ ॥

चकारो हेत्वन्तरार्थः । "चत्वारिचत्वारि कृष्णलान्यवद्यति" इति तेषां-चतुर्णामेव कृष्णलानां एकावदानत्वं-इतरथा द्वितीयचतुःपदस्य व्याहति-रेव स्यात् । अतश्चतुष्कस्य चतुष्कस्य एकैकावदानमिति कृत्वा अवदानद्वयमात्रस्य सिद्धत्वात् चतुरवदानसंपत्त्यभावात् चतुरवदानसंपत्तये उपस्तरणाभिधारणे कर्तव्ये कृष्णलचराविति ॥ ७ ॥

आप्तिस्संख्यासमत्वात् ॥ ८ ॥

यदुक्तं आप्तिवचनाल्लिङ्गात् उपस्तरणाभिधारणयोर्निवृत्तिरिति-तत्रोत्तरम्-

---

१ ... ... सामान्यात्तद्गुणत्वम्-क. ख.

२ वदानत्वात्-क. ख.

आप्तिवचनं स्तुतिरेव । कुतो हेतोः? संख्यासमत्वात्—चतुरवत्ते चतुस्संख्यायाश्च कृष्णलगतायां संख्ययोः समत्वात् स्तुतिरेव। स्तुतिश्चेदृशी—यदेकस्मिन्नप्यवदाने चतुरवत्तसंपत्तिस्तादृशं कृष्णलचतुष्कावदानमिति। नतु उपस्तरणाभिघारणयोर्निवृत्तिरित्यर्थः ॥ ८ ॥

[1]तयोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥

तुना स्तुतिपक्षो व्यावर्त्यते। नाप्तिवचनमर्थवादः । तयो—उपस्तरणाभिघारणयोः कृष्णलचरौ प्राप्तयोराप्तिवचनं व्यर्थम्—अप्राप्तयोरेवैतयोः प्राप्तिसंस्तव उपपद्यते। नतु प्राप्तयोरेव प्राप्तिवचनमर्थवत्। अतस्स्तुतिर्नोपपद्यते । तस्मादन्यः परिहारो वक्तव्य इत्यर्थः ॥ ९ ॥

विकल्पस्त्वेकावदानत्वात् ॥ १० ॥

तुशब्दः आप्तिवचनान्निवृत्तिमाह । यथा त्वत्पक्षे आप्तिवचनाल्लिङ्गात् उपस्तरणाभिघारणयोर्निवृत्तिः, तद्वत् अस्मि .... पक्षेऽपि चतुर्णां कृष्णलानां एकावदानत्वादुपस्तरणाभिघारणे प्राप्येते । अतः प्रमाणभूतलिङ्गविकल्पात् प्रमेययोरपि उपस्तरणाभिघारणयोर्विकल्पः इति ॥ १० ॥

सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यादपि वा स्विष्टकृतस्स्या दितरस्यान्याय्यत्वात् ॥ ११ ॥

तुः आप्तिवचनबाधं ब्रूते। अबाधिते सत्याप्तिवचने वक्ष्यमाणार्थानुपपत्तेः। कृष्णलेषु सर्वावदानविकारे वर्ण्यमाने चत्वारिचत्वारीति कृष्णलसंख्यावाचकचतुर्शब्दाभ्यासस्य आनर्थक्यं—वैयर्थ्यमेव स्यात् । हविषो द्विरवद्यतीति द्विरवदाने विकल्पे तु वर्ण्यमाने इतरस्य—द्वितीयस्यावदानस्य द्वितीयचतुर्शब्दस्स्यात् । अपि वेति पक्षान्तरपरिग्रहार्थः । यदि द्वितीयश्चतुर्शब्दः स्विष्टकृतः—स्विष्टकृदवदानार्थं स्यात् इत्युच्येत, तदपि नोपपद्यते । कुतो हेतोः? इतरस्य—स्विष्टकृतः प्रकृतिवद्वाक्यगम्यत्वेन प्राकरणिक-

1 सतोस्त्वाप्ति ... ... क. ख.

त्वाभावात् अन्याय्यत्वं—अपरिग्राह्यत्वम् । द्वितीयचतुश्शब्दो न स्विष्टकृदवदानं ब्रूत इत्यर्थः । अतश्चतुर्णां कृष्णलानां एकावदानत्वेन द्वितीयचतुश्शब्दस्यापि इतरावदानपरत्वात् न प्राकृतसर्वावदानविकारत्वम् । अतः उपस्तरणाभिघारणे प्रकृतिवत् प्राप्नुतो नतु तयोर्निवृत्तिरिति ॥ ११ ॥

## अकर्म वा संसर्गार्थनिवृत्तित्वा त्तस्मादाप्तिसमर्थत्वम् ॥१२॥

वाकारः पक्षव्यावर्तकः । कृष्णलचरावुपस्तरणाभिघारणयोरकर्म—अननुष्ठानमेव । कुतः? संसर्गार्थनिवृत्तित्वात्—प्रकृतावुपस्तरणाभिघारणयोः स्रुग्बिले पुरोडाशसूक्ष्मावयवासंसर्गार्थत्वात्, कृष्णलेषु चातिविशदेषु असंश्लेषिषु संसर्गरूपस्य अर्थस्य निवृत्तत्वात् तयोर्लोप एव । तस्मादाप्तिसमर्थत्वम्—आप्तिवचनस्य कृष्णलेषु—समवेतार्थत्वम् । नत्वर्थवादत्वम् । उपस्तरणाभिघारणयोर्बाधे सति आप्तिवचनमुपपन्नतरमित्यर्थः ॥ १२ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—विशदतरमिति न विविच्य विलिख्यते ॥ २ ॥

(कृष्णलचरौ भक्षणकर्तव्यत्वाधिकरणम्—३)

## भक्षाणान्तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥ (पू)

कृष्णलचरुरेवोदाहरणम् । सन्ति प्रकृतौ भक्षाः—इडा प्राशित्रहरण-चतुर्धाकरणशंयुवाककालीनाः ॥

चरौ कार्ष्णले सन्दिह्यते—ते भक्षाः कर्तव्याः? उत न कर्तव्याः? इति । तत्र तुः एवकारार्थे । प्रकृतौ पुरोडाशभक्षाणां कर्तृप्रीत्यर्थत्वात् (कृष्णलेषु) प्रीतिरूपद्वाराभावात् द्वारलोपाच्च तेषां चतुर्णामपि प्राकृतानां भक्षाणां अकर्म-अननुष्ठानमेव । न तु ... .... ... ... ... ... ... ... ॥ १३ ॥

## स्याद्वा [1]निर्धानानिर्देशात् ॥ १४ ॥ (सि)

वाकारः पक्षव्यावर्तकः । प्रकृतिवत् चतुर्णां भक्षाणां प्राप्तिः । कुतो हेतोः? निर्धानानिर्देशात्—"निर्धयन्तो भक्षयन्ति, चुरचुराकारं भक्षयन्ति"

---

१ ... ... निर्धानदर्शनात्—क. ख.

इति प्राप्तभक्षणानुवादेन निर्धानचुश्चुपाकरणयोरेव विधानपरवाक्यदर्शनात् । अस्यैव वाक्यस्य कृष्णलभक्षविषय ... ... ... ... ... ... विधायकत्वे च वाक्यभेदापातात् प्राप्तभक्षानुवादेन भक्षोपायविधानपरमेवेदं निरित्यादि-वाक्यम् ॥ १४ ॥

[1]वचनं त्वाज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥ १५ ॥

तुः एतं पक्षं व्यावर्तयति । न चैतदुपपद्यते—प्राप्तभक्षणानुवादेनोपाय-विशेषविधिरिति, निरिति वचनं आज्यभक्षस्य— ... ... ... ... ... संसक्ता-ज्यभक्षस्यैव स्यात्, नतु कृष्णलानाम् । कुतः? आज्यभक्षस्य प्रकृतौ अभा-गित्वेन भक्षाननुप्रविष्टत्वेन प्रकृतावभागित्वात्— भक्षमध्याननुप्रविष्टत्वात् । तदयमर्थः—आज्यस्य प्रकृतितः प्राप्त्यभावात् आज्यभक्षणपरं निरिवधयन्तो भक्षयन्ति, चुश्चुषाकारं भक्षयन्ति—इति निर्धानचुश्चुषाकरणयोः अर्थप्राप्त-त्वात् ... ... ... अनुवादः ॥ १५ ॥

वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥

वाकारः पक्षव्यावर्तकः । निरिवधयन्तो भक्षयन्ति, चुश्चुषाकारं भक्षयन्ति—इति वचनं हिरण्यभक्षणमेव ब्रूते नाज्यस्य । तदेतद्धिरण्यभक्षणं प्राकृतपुरोडाशभक्षणवत् प्रीत्यनुत्पादकत्वाददृष्टार्थं स्यात् । तत्र दृष्टान्तः—यथा अनदनीयस्यापि कृष्णलस्य प्रदानमदृष्टार्थं तद्वदिति । कथमाज्यभक्षणं न ब्रूते? अत आह आज्यस्य—'घृते श्रपयति' इति वाक्ये पाकार्थत्वेन प्रदानानन्वयात् गुणत्वम् । तस्मात् गुणभूताज्यभक्षणपरं नेदं वाक्यम् ॥ १६ ॥

प्रयोजनन्त्वनुष्ठानरूपं स्पष्टमेव ॥ ३ ॥

( एकधोपहाराधिकरणम्—४ )

[2]एकधोपहारस्सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वात् ॥ १७ ॥

(सि)

---

१ वचनं वाज्यभक्षस्य... ...क. ख. २ एकधोपहारे सहत्वं ... ...क. ख.

कृष्णलचरावेव श्रूयते–'एकधा ब्रह्मण उपहरति' इति।

किमेतद्वाक्यं सकृत्त्वं सहत्वं वा ब्रह्मभक्षाणां ब्रूते? उत सहत्वमेव? इति सन्देहे सति –

तत्र एकधोपहारः–एकधा ब्रह्मण उपहरतीत्येतद्वाक्यं ब्रह्मभक्षाणां सहत्वं – युगपद्दानं – उपहारयौगपद्यमेव ब्रूते, न सकृत्त्वं, सकृत्त्वोक्तौ उत्तरेषां प्राशित्रचतुर्धाकरण शंयुवाक कालीनानां भक्षाणां लोप एव स्यात्। तदयुक्तम्। प्रकृतौ ब्रह्मभक्षाणां विहृतत्वात्– विहृतकालत्वेन प्राप्तत्वात् विभिन्नकालानां भक्षाणां यौगपद्यमेव विधीयते, नतु सकृत्प्रदानम् ... ... ... ... ... ... त्वयोरेकार्थता सकृत्त्वं सकृद्दानं ब्रूते। सहत्वञ्च उत्तरकालभक्षकात्स्न्यं ब्रूत इति वैषम्यम्॥ १७॥

प्रयोजनन्त्वनुष्ठानरूपम्–विशदतरम्॥ ४॥

(सर्वत्वापनयाधिकरणम्–५)

## सर्वत्वञ्च तेषामधिकारात्स्यात्॥ १८॥ (पू)

कृष्णलचरावेव 'सर्वं ब्रह्मणे परिहरति' इति श्रूयते॥

तत्र संदिह्यते–किं ब्रह्मभक्षाणामेष परिहारः? उत इतरपुरुषशेषापनयः? इति॥

तत्र सर्वत्वञ्च तेषां–ब्रह्मभक्षाणामेव स्यात्–ब्रह्मणे यत्परिहरति तत्सर्वमिति। कुतो हेतोः? अधिकारात्–ब्रह्मभक्षाणामेव प्रकृताधिकारात्। अतोऽप्रकृतत्वादितरपुरुषभागानां, न तेषां कात्स्न्यं ब्रह्मभागत्वेन विधीयते। अतः प्रकृतौ ये चत्वारो भक्षास्तेषामेव सर्वता विधीयते॥ १८॥

## पुरुषापनयो वा तेषा मवाच्यत्वात्॥ १९॥ (सि)

वाशब्द एतं पक्षं व्यावर्तयति। इतरपुरुष शेषापनय एव सर्वशब्देनोच्यते, नतु प्राकृतब्रह्मभक्षाणां सर्वत्वम्। कुतो हेतोः? तेषां ब्रह्मभक्षाणां प्राप्तत्वेन सर्वशब्दावाच्यत्वात्। प्राकृतब्रह्मभक्षाणामेव सर्वत्वविधाने, प्राप्ते

विधानमनर्थकं स्यात् । अत इतरकर्तृशेषापनयेन इतरकर्तृसंबद्धेषु भक्षेषु ब्रह्म-संबन्धो विधीयते । स च संबन्धोऽप्राकृत इत्यर्थवत्त्वम् ॥ १९ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–विशदप्रायं, अतो न विलिख्यते ॥ ५ ॥

( स्वकालभक्षणाधिकरणम्–६ )

## पुरुषापनयात्स्वकालत्वम् ॥ २० ॥ (सि)

कृष्णलचरावेव 'सर्वं ब्रह्मणे' इत्यत्र :—

किं सर्वे भागाः एकस्मिन्नेव काले भक्षयितव्याः ? उत प्राकृतकाले ? इति ॥

तत्र 'सर्वं ब्रह्मण' इत्यत्र इतरपुरुषशेषापनयात्–शेषापनयमात्र-विधानात् शेषापनये च विश्रान्तत्वेन भक्षणकाल ... ... ... शक्त्यभावात् भक्षाणां स्वकालत्वमेव, न तु युगपदेकस्मिन्नेव काले भक्षणं, किन्तु प्राकृतकाल एवेति । २० ॥

प्रयोजनन्त्वनुष्ठानरूपम्–निगदव्याख्यातमिति न विलिख्यते ॥ ६ ॥

( [1]अविभागाधिकरणम्–७ )

## एकार्थत्वा दविभागस्स्यात् ॥ २१ ॥ (सि)

कृष्णलचरावेव इदमपरं संदिह्यते :—

'इदं ब्रह्मणे' इत्यादिनिर्देशः कर्तव्यः ? उत न ? इति ॥

तत्र सर्वेषामपि भागानां एकार्थत्वात्–ब्रह्ममात्रार्थत्वात्, इदं ब्रह्मण इत्यादिमन्त्रैः अविभाग एव स्यात्–अनिर्देश एव स्यात् । न चतुर्धा-करणम् । नापीदं ब्रह्मण इत्यादिना पृथग्व्यादेशः प्राप्नोतीति ॥ २१ ॥

प्रयोजनन्त्वनुष्ठानरूपं अत्रापि विशदतरम् ॥ ७ ॥

---

१ अत्र मातृकायां देहाभिमर्शनाधिकरणं–इति दृश्यते ।

(दक्षिणाधिकरणम्-८)

## ऋत्विग्दानं [1]धर्ममात्रं स्यात् ददातिसामर्थ्यात् ॥ २२ ॥ (पू)

अस्ति ज्योतिष्टोमे दक्षिणा-"गौश्चाश्वश्चाश्वतरश्चा[2]जा चावयश्च व्रीहयश्च यवाश्च माषाश्च तिलाश्च तस्य द्वादशशतं दक्षिणा" इति। तत्रापरमपि समाम्नातम्-"ऋत्विग्भ्यो दक्षिणां ददाति" इति ॥

तत्र संदेहः-किं दानमदृष्टार्थम्? उत दृष्टानमनार्थम्? इति ॥

तत्र ज्योतिष्टोमे 'ऋत्विग्भ्यो दक्षिणां ददाति' इति यत् ऋत्विग्भ्यो दानं तद्दानं धर्ममात्रम्-धर्मार्थमेव अदृष्टार्थमेव स्यात्, न त्वानतिरूपदृष्टार्थम्। कुतः कारणात्? ददातिसामर्थ्यात्-ददाति-दानं करोतीति दानस्यैव कर्तव्यत्वसामर्थ्यात्। आनतेस्तु कर्तव्यत्वानवगमात्। लोके च दानस्य धर्ममात्रे प्रवृत्तिदर्शनात्। त्र्यालभ्यामिष्ट्यां सहस्रं दक्षिणा ऋतपेये चमस इति। प्रयासानुरूपोच्चनीचपणादर्शनात्, परिक्रये च प्रयासानुरूपोच्चनीचपणदर्शनात्। "तुथोवो विश्ववेदाविभजतु" इति मन्त्रवन्नियमदर्शनात्। क्वचिच्च-दण्डः-उपानहौ-दृतिश्च दक्षिणा, इति अतिफल्गुदक्षिणादर्शनात्। दण्डादिना आनमनासिद्धेर्धर्ममात्रमेव स्यात् ॥ २२ ॥

## परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। ऋत्विग्दानं परिक्रयार्थं-आनमनार्थम्। यद्यपि दानस्य कर्तव्यत्वमेकादशोपात्तत्वेन श्रौतं, तथापि 'ऋत्विग्भ्य' इति ऋत्विक्संबद्धस्य दानस्य दृष्टार्थत्वे बलीयस्त्वात् वाक्यीयोऽपि कर्मकरऋत्विक्संबन्धो न दुष्यति, इति परिक्रयार्थत्वम्। कुतः? कर्मसंयोगात्-'ऋत्विग्भ्यो दक्षिणां ददाती'ति कर्मकरऋत्विक्संयोगाद्दक्षिणायाः। कर्मकरेभ्यश्च प्रतिपाद्यमाना दक्षिणा लोकवत्-लोके कर्मकरेभ्यो दृष्टानमनार्था। यद्यदृष्टार्थं दानं (अभविष्यत्, तदा कर्मकरवाचकऋत्विक्पदमेवानर्थकं स्यात्।

---

१ धर्ममात्रार्थं .... क. ख.

२ गर्दभश्च इति अत्र योज्यम्।

अदृष्टार्थत्वे अकर्मकरेण एक ... ... ... ... तीयेत । तथा लोके दानकर्मणि दृष्टत्वादिति । यत्तु दण्डादिदक्षिणानियमः, तदपि भूतग्र ... ... भूतद्वारमेवादृष्टार्थमिति नैतावता दृष्टार्थता हीयते । तस्मादानत्यर्थमेव दक्षिणेति ॥ २३ ॥

## दक्षिणायुक्तवचनाच्च ॥ २४ ॥

चकारो हेतुसमुच्चयार्थः । "दक्षिणा युक्ता यज्ञं वहन्त्यृत्विजः" इति दक्षिणायुक्तानामेव यज्ञवहनवचनात् दक्षिणा आनमनार्था ॥ २४ ॥

## [1]न चान्येन परिक्रयात्कर्मणः परार्थत्वात् ॥ २५ ॥

चकारोऽयं हेतु समुच्चयार्थः । परिक्रयादन्येनोपायप्रकारेण नानमनमृत्विजाम् । कुतः ? कर्मणः – ज्योतिष्टोमाख्यस्य परार्थत्वात् – यजमानार्थत्वात् । न हि परकीयेन कर्मणा परिक्रयरूपां भृतिं विना श्रान्तोऽपि प्रवर्तते । तस्मादानमने परिक्रय एवोपायो नान्य इति ॥ २५ ॥

## परिक्रीतवचनाच्च ॥ २६ ॥

चकारोऽयमपि प्रागुक्तपक्षोपपादनार्थः । 'दीक्षित मदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्त' इति ऋत्विजां दक्षिणारूप भृति परिक्रीतत्व लिङ्गदर्शनात्, अक्रीतानां प्रवृत्त्यदर्शनाच्चानमनार्था दक्षिणा ॥ २६ ॥

## सनिवन्ये च भृतिवचनात् ॥ २७ ॥

सनिवन्ये – सनिः ऋत्विक्परिक्रयार्थद्रव्ययाच्ञा । वनिः – यज्ञस्वरूपनिर्वाहार्थद्रव्ययाच्ञा । ताभ्यां लब्धं द्रव्यं सनिवन्यम् । याच्ञालब्धं द्रव्यमित्यर्थः । तस्मिन् सनिवन्ये द्रव्ये "यज्ञो वै देवानां न समभवत्, तं भृत्या समभावयन्, तेन यद्भृतिं वनुते, यज्ञस्य भूत्यै, द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत" इति भृतिवचनात्, भृतिः वन्यं द्रव्यं परिक्रयार्थमेव । लोके च परिक्रयार्थे द्रव्य एव भृतिशब्दं प्रयुञ्जते वृद्धाः । तस्मात्सनिद्रव्यं ऋत्विक्परिक्रयार्थमेव ॥ २७ ॥

---

१ न चान्येनानम्येत .... .... क. ख.

नैष्कर्तृकेन च संस्तवात् ॥ २८ ॥

"यथा वै दारुहारो नैष्कर्तृको निष्कर्तन भृतः कर्मयोगे वर्तते, एवं वा एते यज्ञस्य ऋत्विजः" इति दारुहारनैष्कर्तृकेन रूपेण ऋत्विजां संस्तवात्। यथा च नैष्कर्तृका भृतिपरिक्रीताः ... ... ... ... ... ... दक्षिणापरिक्रीता ऋत्विजश्च यज्ञं वहन्ति। तस्मादानमनार्थैव दक्षिणेति ॥ २८ ॥

प्रयोजनन्त्वनुष्ठानरूपम्— ... ... ... ... ... ... ... मे अन्यक्रतुफल ... ... ... तस्मादन्यत्रोन्नेयम् ॥ ८ ॥

(शेषभक्षाधिकरणम्—९)

शेषभक्षाश्च तद्वत् ॥ २९ ॥ (पू)

सन्ति भक्षा ज्योतिष्टोमे दर्शपूर्णमासयोश्च। होमाभिषवनिमित्ता भक्षास्सोमे, दर्शपूर्णमासयोस्तु इडा प्राशित्रचतुर्धाकरणशंयुवाककालीनाश्च ॥

तत्र संदिह्यते—किं ते भक्षाः परिक्रयार्थाः? उत न? इति ॥

तत्र शेषभक्षा एते उभयविधा अपि तद्वत्—दक्षिणादानवत् आनमनार्था एव, तैरपि शेषभक्षैः दक्षिणादान इव प्रीत्युत्पादनादिति ॥ २९ ॥

[1]संस्कारवत् द्रव्यस्य परार्थत्वात् ॥ ३० ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। शेषभक्षाः द्रव्यस्य—भक्ष्यद्रव्यस्यसंस्कारा एव—नत्विगानमनार्थाः। कुतः? परार्थत्वात्—द्रव्यस्य ... संस्कारो ... ... ... ... ... ... ... नवयज्ञार्थत्वात्। तदयमर्थः—यथा यज्ञार्थत्वेन द्रव्यं प्रयोजनवत्, एवं संस्कारार्थत्वे भक्षणं प्रयोजनवत्। द्रव्यसंस्कारार्थत्वेन द्रव्यस्य प्राधान्यात् नानमनार्थत्वमिति। अपि च भक्षाणां उपयुक्तद्रव्योपजीवित्वेन द्रव्योत्पादकत्वाभावात्। भक्षाणां द्रव्योत्पादकत्व एव कर्तृसंस्कारद्वारा आनत्यर्थत्वम्। नात्र द्रव्यमुत्पाद्यते भक्षैः ॥ ३० ॥

---

१ संस्कारो वा .... .... क. ख. अत्रापि व्याख्या तथैव।

शेषे च समत्वात् ॥ ३१ ॥

चकारः पक्षोपपादनार्थः। शेषे शेषभक्षणे च यजमानस्य स्वत्वाभावेन, इतरेषामृत्विजामिव स्वामित्वस्य समत्वात्, स्वाम्याभावे च स्वत्वपरित्याग परस्वत्वापादनरूपस्य दानस्य कर्तुमशक्यत्वात् नर्त्विगानमनार्था भक्षाः दक्षिणेत्र। यदि यजमानस्यापि शेषेषु स्वाम्यं स्यात्, देवतायै संकल्पो बाध्येत। तस्मान्न परिक्रयार्था भक्षाः। ३१ ॥

स्वामिनि च दर्शनात्तत्सामान्यादितरेषु[1] तथात्वम् ॥ ३२ ॥

चकारः पक्षोपपादनार्थः। स्वामिनि—यजमाने च "यजमानपञ्चमा इडां भक्षयन्ति" इति भक्षणसंबन्धदर्शनात् इतरेष्वपि ऋत्विक्षु यजमानस्येव भक्षयितृत्वसामान्यात् तथात्वम्—अपरिक्रयार्थत्वम्। यदि परिक्रयार्थता वर्ण्येत, यजमानस्यापि परिक्रयः अनिष्ट आपद्येत। तत्र यथा यजमानकर्तृकः शेषभक्षो द्रव्यसंस्कारकः, तदितरेषामपि स्यादित्यर्थः ॥ ३२ ॥

तथा चान्यार्थदर्शनम् ॥ ३३ ॥

कुण्डपायिनामयने "अत्सरुकैश्चमसैस्सोमान्भक्षयन्ति" इति सत्सरुकैः प्राप्तभक्षानुवादेन अत्सरुकैरिति विशेषोऽभिहितः। तदेतद्भक्षणरूपान्यार्थदर्शनञ्च तथा—अपरिक्रयार्थत्वे भक्षाणामुपपद्यते। यदि परिक्रयार्था भक्षास्स्युः प्रकृतौ, विकृतौ कुण्डपायिनामयने सत्रे स्वयंकर्तृकत्वेन परिक्रयाभावात् भक्षोऽपि न प्राप्नुयात्। प्राप्नुवन्ति च भक्षाः। तस्मान्नानमनार्था भक्षा इति ॥ ३३ ॥

प्रयोजनन्त्वनुष्ठानरूपं—अनतिगहनम् ॥ ९ ॥

(सत्रे ऋत्विग्वरणाभावाधिकरणम्—१०)

वरण मृत्विजा मानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ ३४ ॥ (सि)

अस्ति ज्योतिष्टोमे प्रकृतौ ऋत्विग्वरणम्—"अग्निर्होता, स मे होता,

---

१ ... ... दितरेषां तथात्वम्, क. ख.

होतस्त्वं मे होतासि, इत्येवमादि। सन्ति च सत्राणि—द्वादशाहमृद्धिकामा उपेयुः" इत्येवमादीनि ॥

तेषु प्राकृतं ऋत्विग्वरणं कर्तव्यम्? उत न? इति संदेहे सति —

प्रकृतौ वरणस्य धर्मार्थत्वाभावेन ऋत्विजामानमनार्थत्वात्, सत्रे च स्वकर्मत्वात्—यजमानानामेव कर्मकरत्वात् आनमनरूपद्वारलोपात्, वरणं—प्राकृतं न स्यादेव। अत आनमनलोपात् वरणलोपः। आनमनलोपश्च स्वयं स्वार्थं प्रवृत्तत्वात्सर्वेषामिति ॥ ३४ ॥

प्रयोजनन्त्वनुष्ठानरूपं स्पष्टतरम् ॥ १० ॥

(परिक्रयाधिकरणम्—११)

## परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥ (सि)

ज्योतिष्टोमे "गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च माषाश्च तिलाश्च तस्य द्वादशशतं दक्षिणा" इति दक्षिणाविशेषेण ऋत्विक्परिक्रयः श्रुतः।

किमिदं दाक्षिण्यं सत्रेषु कर्तव्यम्? उत न कर्तव्यम्? इति संदेहे सति —

ऋत्विक्परिक्रयश्च सत्रेषु न स्यात्। कुतः? तादर्थ्यात्—परिक्रयस्य आनमनार्थत्वात्, सत्रेच अधिकारिणां सर्वेषां स्वयमानतत्वात्, आनतिरूपद्वार-लोपात् परिक्रयस्यापि लोप इति। चकारः अन्वादेशार्थः। ३५ ॥

## प्रतिषेधश्च कर्मवत् ॥ ३६ ॥

यदुक्तं 'नहि तत्र गौर्दीयते न वासो न हिरण्यं' इति प्रतिषेधश्च कर्मवत्—प्राकृतकर्मवदेव दक्षिणापरिक्रयं दर्शयतीति, अस्तूलितपूर्वपक्षस्य सूत्रेणानुवादः। तदयमर्थः—प्राप्तौ सत्यामेव प्रतिषेधप्रवृत्तेः, अप्राप्तौ प्रतिषेधा-नर्थक्यात् प्राप्तगवादेर्मध्ये केषाञ्चित्प्रतिषेधः, प्रतिषेधबलाच्च प्राकृतदक्षिणाया आनमनार्थत्वेन प्राप्तिरिति ॥ ३६ ॥

## स्याद्वा [1]प्रसर्पकस्य धर्ममात्रत्वात् ॥ ३७ ॥

प्रागुक्तपूर्वपक्षनिरासार्थं स्याद्वा प्रतिषेधः प्रसर्पकस्य। प्रसर्पन्तीति–प्रसर्पकाः–याचकाः, तत्संबन्धि प्रासर्पिकम्। तस्य दानस्यैव प्रतिषेधः स्यात्, न त्वानमनार्थगवादिदक्षिणायाः। कुतः? प्रासर्पिकस्य दानस्य धर्ममात्रत्वात्–केवलमानमनार्थत्वाभावेन धर्ममात्रार्थत्वात्। तस्मात्तस्यैवायं प्रतिषेध इति। ३७।

## न दक्षिणाशब्दा त्तस्मान्नित्यानुवादस्स्यात् ॥ ३८ ॥

नैतदुपपद्यते – प्रासर्पकदानप्रतिषेध इति। किन्तर्हि? दक्षिणाशब्दात् – अदक्षिणानि सत्राणीत्याहुः नह्यत्र गौर्दीयते, न वासो न हिरण्यमिति दक्षिणाशब्दश्रवणात्, प्रकृतौ च दक्षिणाया आनमनार्थत्वात् अत्र च दक्षिणाशब्दश्रवणेन केवलधर्ममात्र प्रासर्पकदानानभिधानात् न तस्य प्रतिषेधः। तस्मात् "नह्यत्र गौर्दीयते न वासो न हिरण्यं" इति प्रतिषेधः नान्तरिक्षवाक्यवन्नित्यानुवाद एव। तस्मात्सत्ते दक्षिणालोप एव ॥ ३८ ॥

प्रयोजनन्त्वनुष्ठानरूपं – विशदतरम् ॥ ११ ॥

(पृष्ठशमनीयाधिकरणम्–१२)

## उदवसानीय स्सत्रधर्मा स्यात तदङ्गत्वात्, तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥ (५)

अस्त्युदवसानीयः – 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणे यजेर'न्निति।

तत्र संदेहः – किमत्र दानं धर्ममात्रं? उत परिक्रयार्थम्? इति।

तत्र उदवसानीयः सत्रावसानकालीनः पृष्ठशमनीयः क्रतुः सत्रधर्मा स्यात् – सत्रतुल्यधर्मा स्यात्। सत्रस्य उदवसानीयस्य ... ... ... ... ... तदङ्गत्वात् – सत्राङ्गत्वात् तत्र – उदवसानीये श्रूयमाणं सहस्रदक्षिणादानं

---

१ प्रासर्पिकस्य ... ... क. ख. अत्रापि व्याख्या तथैव।

धर्ममात्रं स्यात्, न परिक्रयार्थम्। अयं भावः—यथा सत्रे प्रधानकर्मणि ऋत्विजामेव यजमानानां स्वयंकर्तृत्वात् वरणपरिक्रयाभावः, तद्वत् तदङ्गे उदवसानीयेऽपि। सत्रविकाराणामपि सत्रवत् अदक्षिणत्वात्, श्रूयमाणं सहस्रदक्षिणादानं धर्ममात्रमेव स्यात्, सत्रेऽधिकृता एवोदवसानीयाधिकारिणः नान्ये ॥

[1]न त्वतत्प्रकृतित्वाद्विभक्तचोदितत्वात् ॥ ४० ॥ (सि)

तुना पूर्वपक्षो व्यावर्त्यते। नैतदेवं धर्ममात्र दानमुदवसानीय इति। किन्तर्हि? ऋत्विक्परिक्रयार्थमेव दानमिति। कुतो हेतोः? उदवसानीयस्य अतत्प्रकृतित्वात्—असत्रप्रकृतिकत्वात्। ज्योतिष्टोमप्रकृतिकत्वादित्यर्थः। सत्रधर्मो न प्रवर्तते। हेत्वन्तरञ्च—विभक्तचोदितत्वादिति। यथा "अग्निचित्वा सौत्रामण्या यजेत" "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इत्यत्र, वाजपेयमग्निश्चेष्ट्वा तावता कृतिता न मन्तव्या; इदमपरं सौत्रामणी बृहस्पतिसवाख्यमङ्गान्तरं कर्तव्यमिति, पूर्वकर्मणः अप्रहाणमेव तत्रत्यक्त्वाशब्दस्यार्थः। अत्र तु, "सत्रादुदवसाय" इति क्त्वाशब्दस्य, सत्रात्—सत्रकर्मणः उत्थाय—सत्र समाप्तमुत्सृज्य, इदमपरं उदवसानीयाख्यं कर्मान्तरं कर्तव्यमिति वि ... ... त्वेन पूर्वकर्मासंसृष्टत्वेन चोदितत्वात्, नोदवसानीयः सत्राङ्गम्। नतु तदङ्गत्वेन दानमदृष्टार्थमिति ॥ ४० ॥

प्रयोजनन्त्वनुष्ठानरूपं—सुगमावे ... ... णम् ॥ १२ ॥

(पृष्ठशमनीयस्य प्रत्येककर्तृकत्वाधिकरणम्—१३)

[2]शेषाणान्तु वचनात् द्वियज्ञवत् सहप्रयोगस्स्यात् ॥४१॥ (पू)

सत्रादुदवसायेत्येतदेवोदाहरणम्। कर्मान्तरत्वे स्थिते, किमत्र पृष्ठशमनीये संहत्य कर्तृत्वम्? उत ऐकैकश्येन? इति संदेहे सति—

तत्र शेषाणां—यज्ञीया ... ... शेषभूतानां यजमानानां उपादेयत्वेन

१ न त्वेतत्प्रकृतित्वाद्विभक्तचोदितत्वाच्च क. ख.

२ तेषान्तु वचनात् ... ... क, ख

यजेरन्निति तद्गतबहुत्वस्य विवक्षितत्वात्, वचनात्–बहुवचनादेव सहप्रयोगः– संहत्यप्रयोगः स्यात् पृष्ठशमनीये। तत्र दृष्टान्तः– द्वियज्ञवत्– इति। यथा "एतेन राजपुरोहितौ सायुज्यकामौ यजेयातां": इत्यत्र पुरोहितयजमानयोः वचनात्–यजेयातामिति वचनात् संहत्य कर्तृत्वम्, तद्वदत्रापि संहतैरेव सत्र (यागव) त्कर्तव्यः पृष्ठशमनीयः इत्येवं पूर्वपक्षे स्थिते– ॥ ४१ ॥

फलफलिभाव संशयरूपान्तरागर्भिणीचिन्तावतारार्थं सूत्रान्तरमवतारयति सूत्रकारः–

## तत्रान्यानृत्विजो वृणीरन् ॥ ४२ ॥ (सि)

एतस्मिन्नेवोदाहरणे किं सत्रिण एव कर्तारः? उतान्ये दक्षिणया परिक्रेतव्याः? इति सन्देहे सति–

तत्र – पृष्ठशमनीये सत्रादुत्थिता यजमानाः अन्यानेव ऋत्विजो वृणीरन्, न तु सत्राधिकारिणां तेषामेव विवक्षित बहुवचनत्वेन संहत्यकर्तृत्वम्। किन्त्वैकैकश्येनेत्येव प्राग्वर्णितम्। तस्मादत्रापि पृष्ठशमनीये क्रतौ ऐकैकश्येन कर्तृत्वाव्याघातात् एकैकः पृष्ठशमनीयं क्रतुं कुर्यात् । प्रयोगास्ससप्तपुरुषा ... ... ... सप्तदश भवन्ति। तत्र सहस्रदक्षिणया अन्यानृत्विजो वृणीरन् ।४२॥

## एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्च[1]संयोगात् ॥ ४३ ॥ (सि)

स्थितादुत्तरम् :–

तुना संहत्य प्रयुञ्जीरन् पृष्ठशमनीयं इत्ययं पक्षो व्यावर्त्यते। एकैकशः ऐकैकश्येनैव कर्तृत्वम् न तु संहत्य। कुतो हेतोः? अविप्रतिषेधात्– उदवसानलक्षितपुरुषाणां एकैकश उदवसातृत्वेन पृष्ठशमनीयेऽप्येकैकश एव कर्तृत्वम्। चकारो हेत्वन्तरार्थः। प्रकृतेः–प्रकृतिसकाशात् प्रकृतिवद्वाक्यात् एककर्तृकत्वस्यैव संयोगात्–अस्य च पृष्ठशमनीयस्य ज्योतिष्टोमप्रकृतिकत्वेन एककर्तृकत्वमेव प्राप्नोति। तस्मादेकैकः पृष्ठशमनीयानुष्ठाता। ततश्चान्यानृत्विजो वृत्वा कर्माण्यनुतिष्ठन्तीत्यर्थः ॥ ४३ ॥

---

१ ... ... प्रकृतेश्चैकसंयोगात्. क. ख.

प्रयोजनन्त्वनुष्ठानरूपम्– … … … … … तमिति न विलिख्यते ॥ १३ ॥

(कामेष्ट्यधिकरणम्–१४)

## कामेष्टौ च दानशब्दात् ॥ ४४ ॥ (पू)

अस्ति सारस्वते सत्रे कामेष्टिः "प्लाक्षं प्रस्रवणं प्राप्याग्नये कामाय पुरोडाशमष्टाकपालं निर्वपति, तस्यामश्वाश्च पुरुषीश्च धेनुके च दत्वा कारवीचवं प्रति यमुनां अवभृथमभ्यवयन्ति" इति ॥

तत्र सन्दिह्यते–किमश्वादिदानं परिक्रयार्थम्? उत धर्ममात्रार्थम्? इति ॥

तत्र चकारः पृष्ठशमनीयाधिकरणसिद्धपरिक्रयार्थत्वान्वादेशार्थः। कामेष्टौ–सारस्वतसत्र … … पातिन्यामपि अश्वादीनां दानं परिक्रयार्थमेव। कुतः? दानशब्दात्–दत्त्वेति दानशब्दश्रवणात्। कर्मकरेभ्यश्च प्रतिपाद्यमानं दानं परिक्रयार्थमेवेति प्रागेवाभिवर्णितम्। तस्मादङ्गभूतायामपि कामेष्टौ दक्षिणादानमृत्विक्परिक्रयार्थमेव, न धर्मार्थमिति ॥ ४४ ॥

## वचनं वा सत्रत्वात् ॥ ४५ ॥ (सि)

वा शब्दात्पूर्वपक्षो व्यावर्त्यते परिक्रयार्थमिति। किन्तु धर्ममात्रार्थमेव कामेष्टौ दानवचनम्। कुतो हेतोः? सत्रत्वात्–कामेष्टेरपि सत्रमध्यपातित्वेन साङ्गे सत्रकर्मणि तेषामधिकृतत्वेन केवलप्रधानमात्रानधिकारात्, सत्रे च सत्रिणां स्वयं यजमानत्वेन परिक्रयाभावात् तदङ्गे श्रूयमाणा दक्षिणा केवलं धर्मार्थैव ॥

प्रयोजनन्त्वनुष्ठानरूपम्–अन्वेषणीयम् ॥ १४ ॥

(द्वेष्याधिकरणम्–१५)

## द्वेष्ये चाचोदनाद्दक्षिणापनयस्स्यात् ॥ ४६ ॥ (सि)

दर्शपूर्णमासयो रामनन्ति–"यदि पत्नीस्संयाजयन् कपालमभिजुहुयात् वैश्वानरं द्वादशकपालं निर्वपेत्, तस्यैकहायनो गौर्दक्षिणा तं स द्वेष्याय दद्या"दिति ॥

किमत्र द्वेष्याय दक्षिणादानं परिक्रयार्थम्? उत धर्ममात्रार्थम्? इति संदेहे सति —

तत्र चकारोऽन्वादेशार्थः। द्वेष्ये ऋत्विक्त्वस्य अचोदनात्— अद्वेषिण एव ऋत्विक्त्वात् द्वेष्ये श्रूयमाणा दक्षिणापि कामेष्टिवत् धर्ममात्रमेव स्यात्। यदि परिक्रयार्था दक्षिणा स्यात्, तर्हि अस्या इष्टेरपि दर्शपूर्णमास-विकृतित्वात् प्रकृतौ च ऋत्विगानमनार्थमन्वाहार्यस्यैव दक्षिणात्वेन विहितत्वात् सैव दक्षिणा प्रकृतिवत्प्राप्नोति, स प्राप्तोऽन्वाहार्यो बाध्येत। तस्मादन्वाहार्या-बाधायै द्वेष्यसंप्रदानिका दक्षिणा च धर्ममात्रैव स्यात्। नान्यथा। तस्मात् अनृत्विजे एकहायनदानम् (ऋत्विजे प्रतिपाद्यम्) ॥ ४६ ॥

प्रयोजनन्त्वनुष्ठानरूपम् — निगदव्याख्यातमेवेति न विलिख्यते ॥ १५ ॥

(अस्थियज्ञाधिकरणम्—१६)

## अस्थियज्ञोऽविप्रतिषेधा दितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥ (सि)

"यदि सत्राय दीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठस्स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन्, ततस्संवत्सरे-ऽस्थीनि याजयेदिति श्रुतम्॥

तत्र संदिह्यते—किं संवत्सरे ... ... ... वेते किमस्थ्नामेवाधिकारो यागे? तत्रान्ये याजयितारः? उत जीवतामेवाधिकारः? अस्थ्नान्त्वनधिकार एवास्थि-यजने? इति॥

तत्र उक्तोऽयं अस्थियज्ञः इतरेषाम् — प्रयोजककर्तॄणामृत्विजां स्यात् नास्थ्नाम्। कुतः? तेषामृत्विजां अविप्रतिषेधात् — वाङ्मनःकायादि-सद्भावेन त्यागादेः कर्तुं शक्यत्वात्। अस्थ्नान्तु वाङ्मनःकायाद्यभावेन यागविप्रतिषेधात्, अस्थीनि यजेरन् — तान्यन्ये याजयेयुः — इत्यनुपपत्तिः। किन्तु, अस्थिभिः पुरुषाः प्राकृता एव लक्ष्यन्ते। ये तेन सह यष्टुं प्रवृत्ताः,

यस्य तान्यस्थीनि त एव याजयन्तीति। न चौदुंबरीसंमान शुक्रान्वारंभादिषु अस्थ्नां कर्तृत्वोपपत्तेः यावच्छक्यमधिकार इति। तस्मादस्थ्नामनधिकारः॥

[1]यावदुक्तमुपयोगि स्यात् ॥ ४८ ॥

यदुक्तं, "स्तोत्रेस्तोत्रे अस्थिकुम्भमुपनिदधाती"ति अस्थ्नां याजमानत्वदर्शनात् अस्थीन्येव यजेरन्निति, तत्परिहारार्थमिदं सूत्रम्। अस्थ्नां नैतावताऽस्थियागेऽधिकारः। अत्रास्थ्नां यावदुक्तं "अस्थिकुम्भमुपनिदधाती"ति तावत्कर्मोपयोगि स्यात्। उपनिदधातीति वचनप्रामाण्यात्। तस्मात् जीवतामेवास्थियज्ञ इति॥ ४८ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—अतिविषमं पूर्वपक्षे, सिद्धान्ते तु नतथेति। १६॥

(अस्थिजपाधिकरणम्–१७)

यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४९ ॥ (सि)

इतः प्रभृत्यधिकरणपञ्चकं कृत्वाचिन्तया प्रस्तूयते। अस्थियज्ञ एवोदाहरणम्॥

तत्र किमस्थ्नां जपसंस्कारः कर्तव्यः? उत न? इति॥

तत्र यदि प्रकृतिवद्वचनात् अस्थियज्ञे यजमानकर्तृका जपाः, "केशश्मश्रु वपते" इति। संस्कारश्च इत्येकत्वद्भावः। तत् जपसंस्कारं स्यादित्याशङ्क्येत, तन्नोपपद्यते। तेषाम्—अस्थ्नाम्, जपसंस्कारश्च, वाङ्मनःकेशाद्यभावेन अर्थलुप्तश्च—प्रयोजनलुप्तम्। न ह्यत्राङ्मनसानामस्थ्नां जपो भवति, न चालोकयति। ... ... ... तस्मादर्थलोपात् जपसंस्कारनिवृत्तिः। सा दीक्षणीयेष्टिश्च अस्थीनां न भवति। कुतः? तदर्थत्वात्—वाङ्मनःकायसाध्यव्रतनियमरूपदीक्षार्थत्वात् तस्या अपि निवृत्तिरिति॥ ४९ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—सुगमम्॥ १७ ॥

---

१ यावदुक्तमुपयोगः स्यात्. क. ख.

(शुक्रान्वारंभणाधिकरणम्—१८)

## क्रत्वर्थन्तु क्रियेत गुणभूतत्वात् ॥ ५० ॥ (सि)

अस्थियज्ञ एवोदाहरणम् ॥

तत्र संदिह्यते—किं औदुम्बरीसंमान शुक्रान्वारंभणादीनि अत्राज्ञानस-साध्यानि कर्तव्यानि? उत न कर्तव्यानि? इति ॥

तत्र यत् क्रत्वर्थं औदुम्बरीसंमाननं शुक्रान्वारंभणादि च, तत्क्रियेतैवास्थिभिः। कुतो हेतोः? क्रतुं प्रति यजमानस्य गुणभूतत्वात्—उपसर्जनीभूतत्वात्, अचेतनैरस्थिभिः औदुम्बरीसंमानने कृते प्रयोजनं क्रतौ, तथा शुक्रेणास्थिसमन्वारब्धेन प्रयोजनं क्रतौ। न संस्कारवदत्र पुरुषप्राधान्यं, यतस्तन्निवृत्तिस्स्यात्। अतः औदुम्बरीसंमाननं—शुक्रान्वारंभणमित्येवमादीनि कर्तव्यानीति ॥ ५० ॥

प्रयोजनन्त्वनुष्ठानरूपम्—विशदमेव ॥ १८ ॥

(सदोमानाधिकरणम्—१९)

## काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ ५१ ॥ (सि)

अस्थियज्ञ एवोदाहरणम् ॥

ज्योतिष्टोमे श्रुतम्—"यदि कामयेत वर्षेत्पर्जन्य इति, नीचैस्सदो-मिनुयात्" इत्येवमादि कामसंबद्धम् ॥

तत्र संदिह्यते—किमस्थियज्ञे न भवन्ति? भवन्ति वा? इति ॥

काम्यानि त्वेवंजातीयकानि अस्थियज्ञे न विद्यन्ते। कुतो हेतोः? कामाज्ञानात्—अस्थ्नामचेतनत्वेन फलानां यजमानेन अकाम्यमानत्वादित्यर्थः। तत्र दृष्टान्तः यथेतरस्येति। यथा इतरस्य—जीवत एव यजमानस्य अनुच्यमानानि—अकाम्यमानानि फलानि न भवन्ति, तथा मृतानामस्थ्नां अकाम्यमानत्वात् वर्षादिफलं न स्यात्। तस्मादीदृशानि अस्थियज्ञे न कर्तव्यानीति ॥

प्रयोजनन्त्वनुष्ठानरूपम् – अत्रापि विशदम् ॥ १९ ॥

(सूक्तवाकाधिकरणम् – २०)

## ईहार्थाश्चाभावात्सूक्तवाकवत् ॥ ५२ ॥ (सि)

सन्त्यस्थियज्ञे दर्शपूर्णमासप्रकृतिकानि चोदकप्राप्तद्धर्मकाणि प्रायणीयादीनि। तेषु चोदकात् सूक्तवाकः प्राप्तः। तत्र सूक्तवाके – “अयं यजमान आयुराशास्ते, सुप्रजास्त्वमाशास्ते, .... यदनेन हविषाशास्ते तदश्यात्तदृध्यात्, तदस्मै देवा राधन्ता” मिति ॥

किमिमान्यस्थियज्ञे कर्तव्यानि? उत न? इति विशये –

इहास्थियज्ञे दीक्षणीयादिषु सूक्तवाकवत् – सूक्तवाकार्हाः, अर्हार्थे वतिप्रत्ययः। सूक्तवाकार्हा अर्थाः – अर्थकामा आयुराशासनादिकाः न भवेयुः। कुतः? अभावात् – अचेतनानामस्थ्नां कामनाभावात्। कामनाभावे च काम्यमानानि आयुराशासनादीनि न भवेयुरिति ॥ ५२ ॥

## स्युर्वार्थवादत्वात् ॥ ५३ ॥

वाकारः पक्षव्यावर्तकः। नैतदस्ति – अस्थियज्ञे आयुराद्यर्थकामाः न कर्तव्या इति। स्युरेवार्थकामाः। कुतो हेतोः? आयुराशासनादेः अर्थवादत्वात्, अर्थवादानाञ्च प्रकृतौ समवेतार्थत्वेन अविहितत्वात् तद्वदेव विकृतावपि प्राप्नुवन्ति। अतो न निवृत्तिरायुरादीनामिति। अर्थवादत्वञ्च, आशास्ते इति वर्तमानार्थसामर्थ्यात्। यद्यप्यायुरादीनां जीवत्यन्तरदर्शिनां प्रकृतावुपपत्तिरिति, तर्हि अमुष्मिन् फलानि स्युरिति ॥ ५३ ॥

## नेच्छाभिधानात्तदभावादितरस्मिन् ॥ ५४ ॥

नैतदेवम् – आयुरादीनामस्थियज्ञे प्राप्तिरिति। कुतो हेतोः? इच्छाभिधानात् – आयुराशास्ते इत्येवमादीनां इच्छायां सत्यामेवाभिधानात्। अतोऽस्थिषु तदभावात् आयुराशासनादीनि न भवन्ति। इतरस्मिंस्तु जीवति

यजमाने तस्येच्छासंबन्धात् आयुराद्यर्था भवेयुः । अस्थियज्ञे तु न भवन्तीति ।। ५४ ।। २० ।।

(होतृकामाधिकरणम्–२१)

स्युर्वा होतृकामाः ।। ५५ ।। (पू)

भाष्यकार एतं पक्षं व्यावर्तयति । आयुराशासनाद्यर्थाः अस्थियज्ञेऽपि भवन्त्येव । यत इमे सूक्तवाकानुप्रविष्टत्वेन, इच्छत्यनिच्छति वा यजमाने होतृकामा एते – होत्रा यजमानार्थं काम्यमाना एते, होतृकामना च जीवत्यजीवति च यजमाने तुल्येति नास्थियज्ञे लोप इति ।। ५५ ।।

न तदाशीष्ट्वात् ।। ५६ ।। (सि)

नैतदेवं अर्थाःस्युरिति । न हि होतृकामनया प्रकृतौ फलम्, किन्तु यजमानकामनया । "शास्त्रफलं प्रयोक्तरी"ति यजमानस्यैव कामयमानस्य फलम् । अतः होत्रा क्रियमाणस्यायुराशासनादेः तदाशीष्ट्वात् – यजमानाशीष्ट्वात्, अस्थ्नाञ्च यजमानत्वे कामनाभावात् आयुरादिनिवृत्तिरित्यर्थः ।।

प्रयोजनन्त्वनुष्ठानरूपम्– विशदमेवेति ।। २१ ।।

(अधिकरणान्तरं वा–२२)

स्युर्वा होतृकामाः ।। (पू)

प्रकृतौ होतृकामाश्श्रुताः – " यं वा कामयेत पापीयान्त्स्यादिति नीचैस्तरां तस्य याज्यायां वषट्कुर्यात्, यं कामयेत वसीयान् स्यादिति उच्चैस्तरां तस्य याज्यायां वषट्कुर्यात् " इत्येवमादि ।।

तत्रास्थियज्ञे स्युर्नवेति संदेहे –

होतृकामा हीदृशाः अस्थियज्ञे स्युरेव । कुतः ? होतुरेव कामयितृत्वेन कामनासंबन्धात् । न यजमानस्य कामना तत्र तन्त्रम् ।।

न तदाशीष्ट्वात् ।। (सि)

नैतदेवं अस्थियज्ञे होतृकामा भवन्तीति। होत्रा प्रार्थ्यमानानामपि तदाशीष्ट्वात्। 'यां वै काश्चिदृत्विगाशिषमाशास्ते यजमानस्यैव सा,' इति यजमानाशीष्ट्वात्। अत्र चास्थ्नां यजमानत्वे, अकामयमानत्वात् अकाम्यमानस्य च फलस्य कर्तृसंबन्धाभावात् निवृत्तिरेव होतृकामानामस्थियज्ञ इति॥

प्रयोजनन्त्वनुष्ठानरूपम्—विशदमेव॥ २२॥

(सर्वस्वाराधिकरणम्—२३)

सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात्॥ ५७॥ (पू)

अस्ति सर्वस्वारः शुनःकर्णस्तोमोऽग्निष्टोमः क्रतुः। "मरणकामो ह्येतेन यजेत यः कामयेतानामयस्स्वर्गं लोकमियामिति" इति॥

तत्र संदेहः—किमत्र क्रतुमध्ये प्राप्तमरणोत्तरकालं परिशिष्टं कर्म समापनीयम्? उत न समापनीयम्? इति।

तत्र यजमानस्य दिष्टगतौ—मरणगतौ सत्यां, सर्वस्वारस्य क्रतोः परिशिष्टाङ्गसमापनं न विद्यते। कुतो—हेतोः? कर्मणः सर्वस्यापि जीवसंयोगात्—क्रत्वनुष्ठानसमर्थेन जीवता यजमानेन संबन्धात्। न ह्यजीवता समापनं कर्तुं शक्यम्? अतस्तदन्तोत्सर्गः। न परिशिष्टसमापनम्॥ ५७॥

स्याद्वोभयोः प्रत्यक्षशिष्टत्वात्॥ ५८॥ (सि)

वाकारः पक्षव्यावर्तकः। स्यादेव शेषकर्मसमापनं सर्वस्वारे। उभयोः आरंभसमाप्त्योः यजेतेत्याख्यातेन समाप्तिपर्यवसायियागक्रियावाचिना प्रत्यक्षेण शिष्टत्वात्। वाक्यशेषे च "आर्भवे प्रस्तूयमाने औदुम्बरीं सदशेन वाससा परिवेष्ट्य "ब्राह्मणास्समापयत मे यज्ञम्" इति संप्रेष्याग्निं संविशति" इति शेषकर्मसमापनसूचकप्रैषदर्शनाच्च शेषकर्म अयजमानकमपि कर्तव्यम्॥ ५८॥

[1]मुक्तसंशयेनैतत्तुल्यम्॥ ५९॥

१ इदं सूत्रं क. ख. नास्ति शाबरभाष्यवाक्यमिदं अत्र सूत्रवल्लिखितम्।

यदुक्तं संप्रैषकाले परिसमाप्त्यभावात्, परिसमाप्तिवेलायाश्च तस्याभावात् कः कर्तेति—तत्रोत्तरम्—इदं प्रैषवचनं मुक्तसंशयेन—जीवता यजमानेन तुल्यमित्यर्थः। योपि संप्रैष्य परिसमापनकाले जीवति, तस्य जीवनं समापनकालेऽनुपकारकम्। तद्वदत्रापि प्रैषोत्तरकालं जीवनमनुपकारकमिति कृत्वा शेषकर्मसमाप्तिरेव स्यात्, समाप्तिवचनप्रामाण्यात् सर्वमपि याजमानमनुष्ठेयमेव स्यात्, नतु याजमानलोपः इति ॥ ५९ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—अतिविशदम् ॥ २३ ॥

(कर्मास्थियज्ञाधिकरणम्—२४)

## गते कर्मास्थियज्ञवत् ॥ ६० ॥ (सि)

सर्वस्वार एवोदाहरणम् ॥

तत्र किं कर्तव्यम्? किं न कर्तव्यम्? इति विशये:—

यजमाने दिष्टगतिं गते सति कर्म—कर्मानुष्ठानम्, अस्थियज्ञवदेव स्यात्। यथा अस्थियज्ञे क्रत्वर्थानामौदुम्बरीसंमानादीनामनुष्ठानं, तद्वदत्रापि क्रत्वर्थानामेवानुष्ठानं, न पुरुषार्थानां संस्कारादीनाम् ॥ ६० ॥

प्रयोजनन्तु प्राग्वदुन्नेयम् ॥ २४ ॥

(जीवत्यवचनाधिकरणम्—२५)

## जीवत्यवचन मायुराशिषस्तदर्थत्वात् ॥ ६१ ॥ (पू)

सर्वस्वार एवोदाहरणम् ॥

तत्र चोदकप्राप्तमायुराशासनं न कर्तव्यम्? उत कर्तव्यम्? इति संदेहे सति:—

तत्र सर्वस्वारे जीवति यजमाने—यजमान जीवनावस्थायाम्, आयुराशासनस्य अवचनम्—अनुच्चारणमेव—तत्पदपरित्याग एव। कुतो हेतोः? तदर्थत्वादायुराशिषः—जीवनार्थत्वात्। यजमानस्य मरणकामत्वेन आयुराशासनस्य विपरीतत्वात् आयुराशासनमात्रं न कर्तव्यमित्यर्थः ॥ ६१ ॥

## वचनं वा भागित्वात्प्राग्यथोक्तात् ॥ ६२ ॥ (सि)

वाकारः पक्षव्यावर्तकः। वचनम्—आयुराशीर्वादवचनं स्यादेव, नतु तस्य लोपः। कुतः? यथोक्तात्—आर्भवकालात्प्राक् यजमानस्य आयुराशीर्वाद-भागित्वात्। तदयमर्थः—प्रागार्भवकालात् कर्मानुष्ठानार्थं जीवनस्य प्रार्थनीय-त्वेन आयुराशासनं स्यादेव। अथवा—भागित्वादित्यस्यान्योऽर्थः—प्रागार्भवकालात् आयुराशिष्युच्यमानायां प्रकृतिवद्वाक्यस्य भागित्वात्—प्रकृतिवद्वाक्यानुग्रहा-दित्यर्थः। अतः आर्भवकालात्प्रागायुराशीः कर्तव्येति ॥ ६२ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—सुगमोन्नयनम्। २५ ॥

(धर्ममात्राधिकरणम्—२६)

## क्रिया स्याद्धर्ममात्राणाम् ॥ ६३ ॥ (सि)

"द्वादशाहमृद्धिकामा उपेयुः" इति विहिते द्वादशाहे प्रकृतिभूतज्योतिष्टो-मात् चोदकतः प्राप्ते ऋतुयाज्यावरणे आत्रेयाय हिरण्यदाने च संदिह्यते—

किं धर्ममात्रमिदं न कर्तव्यम्? उत कर्तव्यम्? इति ॥

तत्र धर्ममात्राणाम्—अनानत्यर्थानां ऋतुयाज्यावरणात्रेयहिरण्यदान-प्रभृतीनां अपरिक्रयार्थत्वेन स्वयंकर्तृकेऽपि सत्रे क्रिया—अनुष्ठानं स्यात् न तु तेषां दानसामान्यान्निवृत्तिरिति ॥ ६३ ॥

प्रयोजनन्त्वनुष्ठानरूपं सुगमम्। २६ ॥

(गुणलोपाधिकरणम्—२७)

## गुणलोपे च मुख्यस्य ॥ ६४ ॥ (सि)

अग्न्याधेये सन्ति पवमानेष्टयः—"अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये" इति ॥

तत्र किमग्निहोत्रहवण्यभावान्निर्वापोऽपि न कर्तव्यः? उत अग्निहोत्र-हवण्यभावेऽपि प्रधानभूतनिर्वापः कर्तव्यः? इति संदेहे सति—

तत्र गुणलोपे—गुणभूतायाः अग्निहोत्रहवण्याः लोपे, पत्रमानेष्टेः प्राक् अग्निहोत्राभावेन अग्निहोत्रहवणीलोपे सति, मुख्यस्य—निर्वापस्य अनुष्ठानमेव स्यात्। न त्वग्निहोत्रहवणीलोपेन गुणिनोऽपि निर्वापस्य लोपः। 'अङ्गगुणविरोधे च तादर्थ्यात्" इति न्यायेन, गुणे निर्वापे बाधः, नतु प्रधाने निर्वापे बाधोपसंक्रमः। न च तूष्णीमग्निहोत्रे अग्निहोत्रहवण्यस्तीति वचनम्। तत्र जुह्वा एव साधनत्वेन अग्निहोत्रहवण्यभावादिति ॥ ६४ ॥

प्रयोजनन्त्वनुष्ठानरूपम् —विशदतरम् ॥ २७ ॥

(मुष्टिलोपाधिकरणम्—२८)

## मुष्टिलोपात्तु [1]संख्यालोपस्तद्गुणत्वात् ॥ ६५ ॥ (पू)

वाजपेये श्रूयते—"नैवारस्सप्तदशशरावः क्षीरे चरुर्भवति" इति। प्रकृतितश्च "चतुरो मुष्टीन् व्रीहीणां निर्वपति" इति चतुस्संख्या—मुष्टयश्च प्राप्ताः ॥

तेषु संदिह्यते—किमत्र सप्तदशशरावे चरौ प्राकृतसंख्यानुग्रहो मुष्टिलोपः? उत मुष्ट्यनुग्रहः संख्यालोपः? अथवा संख्याया मुष्टीनाञ्च लोपः? उत अन्यतरलोपः? इति सति, एकः पक्षः सूत्रेणावलम्ब्यते ॥

सप्तदशशरावे चरौ प्राकृतमुष्टिलोपात् संख्यायाः—चतुस्संख्याया अपि लोप एव। कुतो हेतोः? तद्गुणत्वात्—चतुस्संख्याया मुष्टिगुणत्वात्, गुणिभूतमुष्टिलोपे च तदाश्रितचतुःसंख्याया अपि लोप एव। तथापि "अङ्गगुणविरोधे च तादर्थ्यात्" इति न्यायेन गुणभूतसंख्यालोप एव, न मुष्टीनां, नत्वनियमेन यस्य कस्यचित् मुष्टेस्संख्याया वा लोप इति ॥ ६५ ॥

## [2]न निर्वपणशेषत्वात् ॥ ६६ ॥ (सि)

नैतदेवं गुणलोपो न मुष्टीनामिति। कथन्तर्हि? निर्वपणशेषत्वात्—

१ ... ... स्यात्—इत्यधिकम्—क. ख.
२ न निर्वापशेषत्वात्—क. ख.

उभयोरपि मुष्टिचतुस्संख्ययोः निर्वपणशेषत्वात्—इतरेतरं शेषशेषित्वाभावात् । संख्यायाश्च श्रुत्या निर्वापशेषत्वात् । मुष्टीनां तु निर्वापान्वयस्य वाक्यीयत्वात् श्रुतिवाक्ययोश्च श्रुतेरेव बलीयस्त्वात् संख्याया एवानुग्रहो मुष्टीनां लोप एव ॥

[1]संख्यातु चोदनां प्रति सामान्यात्तद्विकारःस्यात्संख्या-संयोगाच्च परं मुष्टेः ॥ ६७ ॥

तुना संख्यानुग्रहमुष्टिलोपपक्षो व्यावर्त्यते । किन्तर्हि ? संख्याया मुष्टीनाञ्च लोपः । चोदनात्—प्राकृतनिर्वापचोदनां प्रति सप्तदशशरावस्य संख्या-संयोगात् सामान्यात्, प्रकृतिवत्संख्याविशिष्टनिर्वाप साधनद्रव्यविधान-सामर्थ्यात् सप्तदशशरावचोदना तद्विकारः—प्राकृतनिर्वापविकार एव स्यात् । तत्र प्रकृतिवत्कर्तव्यतायां प्राप्तायां, सप्तदशसंख्यया प्राकृती चतुस्संख्या निवर्तते, परं निर्वापसाधनं शरावद्रव्यञ्च मुष्टेः—प्राकृतनिर्वापसाधनस्य निवारकम् । संख्या संख्यया निवर्तते, मुष्टिश्शरावेणेति, उभयोर्मुष्टि-संख्ययोर्लोपः । संयोगादपरं मुष्टेः इति वा पाठः । अपरम्—शराव-द्रव्यम्, संयोगात्—वैकृतनिर्वापसंयोगात् प्राकृतमुष्टेर्निवारकमित्यर्थः ॥ ६७ ॥

न चोदनाभिसंबन्धात्प्रकृतौ संस्कारयोगात् ॥ ६८ ॥

नैतदेवम्, संख्यया संख्या निवर्तते—शरावेण मुष्टिरिति । किन्तर्हि? यद्विकृतौ प्रत्यक्षश्रुतं किञ्चित् प्राकृतकार्यं निर्वर्तयति, तत्तस्य प्राकृतस्य निवर्तकम् । इह तु सप्तदशशरावनिर्वापस्य चोदनाभिसंबन्धात्, याग-संबन्धात् प्रकृतौ च दर्शपूर्णमासयोः, "चतुरो मुष्टीन्व्रीहीणां निर्वपति" इति कर्मत्वेन निर्दिष्टव्रीहिसंस्कारे निर्वापस्य सम्बन्धात् । अत एव प्राकृतकार्या-निवृत्तेः केवलमत्र विरोध एव । कथं विरोधः? चतुर्मुष्टिनिरूप्यमाणं द्रव्यं न सप्तदशशरावपरिमितं भवतीति । अतश्चावश्यहातव्येऽन्यतरस्मिन्, प्रथम-श्रुतत्वात्संख्यायाः, चरमश्रुतमुष्टेरेव लोप इति ॥ ६८ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पूर्वोत्तरयोः पक्षयोः अनतिगहनम् ॥ २८ ॥

---

१ संख्यातु चोदनां प्रति सामान्यात्तद्विकारस्संयोगाच्च परं मुष्टेः क. ख.

(औत्पत्तिकाधिकरणम्—२९)

## औत्पत्तिके तु द्रव्यतो विकारस्स्यादकार्यत्वात् ॥६९॥ (सि)

क्वचिदेवमाम्नायते—"द्यावापृथिव्यां धेनुमालभेत, मारुतं वत्सम्, ऐन्द्रमृषभम्" इति ॥

तत्र किमेते वयोवचनास्सन्तोऽजा एव? उत गाव एव? इति सन्देहे सति;

तत्र तुः एवकारार्थे। औत्पत्तिके—धेन्वादिशब्दे उत्पत्तिसमय एव गवादिजातिविशिष्टगुणाभिधायिनि सति द्रव्यतः—द्रव्यस्यापि, विकारस्स्यात्—धेन्वादिशब्दः प्राकृतं द्रव्यमपि निवर्तयेव, नतु चोदकप्राप्ताजद्रव्ये वयोरूपगुणवचनः। कुतो हेतोः? अकार्यत्वात्-धेन्वादीनां शब्दानां गोजातिविशिष्टधानादिगुणाभिधायित्वे सति प्राकृताजे पशौ ईदृशस्य गुणस्य कर्तुमशक्यत्वात्। अयं भावः—धेन्वादिशब्दानां उत्पत्तिसमय एव जातिविशिष्टगुणाभिधायिनां, असति प्रमाणान्तरे गोपरत्वमेव ॥ ६९ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पूर्वपक्षे अजस्यैव वयोविशेषविशिष्टस्यालम्भः। सिद्धान्ते तु गवामेवेति ॥ २९ ॥

(वायव्याधिकरणम्—३०)

## नैमित्तिके तु कार्यत्वात्प्रकृतेस्स्यात्तदापत्तेः ॥ ७० ॥ (सि)

क्वचिच्छ्रूयते—"वायव्यं श्वेतमालभेत भूतिकामः" इति ॥

तत्र किं प्राक्तनाधिकरणवत् अन्य एव पशुः? उत अज एव? इति संदेहे सति —

तत्र तुना यस्य कस्यचित्पशो रालम्भ इत्ययं पक्षो व्यावर्त्यते। नैमित्तिके—श्वेतगुणनिमित्तके श्वेतशब्दे सति प्रकृतेः—प्राकृतस्यैवाजद्रव्यस्य श्वेतगुणः स्यात्, न तु यस्य कस्यचित् पशोः श्वेतस्यालम्भः। कुतो हेतोः? कार्यत्वात्—श्वेतगुणस्य प्राकृताजसंबन्धे सत्येव कार्यक्षमत्वात्। न चान्येन येन

केनचित् श्वेतेन पशुनाऽऽलब्धेन प्रयोजनमस्ति। यदि–अप्राकृतस्यापि स्यात्, तदा अप्राकृतश्वेतगुण विशिष्टपश्वालम्भे सति आपत्तेः–अप्राकृतपशुपरिच्छेदक ... अप्रयोजनापत्तेरित्यर्थः ॥ ७० ॥ ॥ ३० ॥

( खदिरखलेवाल्यधिकरणम्–३१ )

## विप्रतिषेधे च तद्वचना[1]त्प्रकृतेर्गुणलोपस्स्यात्तेन च कर्मसंयोगात् ॥ ७१ ॥ (सि)

साद्यस्क्रे श्रूयते–"उर्वरावेदिः, खल उत्तरवेदिः, खले वाली यूपो भवति" इति ॥

तत्र सन्दिह्यते–किं प्राकृतस्य खदिरस्यैव खलेवालीत्वम्? उत यत्किंचित् वृक्षप्रकृतिका खलेवाली? इति ॥

अथापरम्–चित्रायामिष्टौ श्रूयते–"दधिमधुघृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्" इति ॥

तत्र किं तण्डुलाः प्रकृतिवत्? उत अवैहेया वा? इति संशयः ॥

तत्र ईदृशे विप्रतिषेधे–विरोधे, प्रकृतेः गुणलोपस्स्यात्–प्राकृतस्य–प्राकृतखादिरव्रैहेयरूपगुणस्य लोप एव स्यात्। कुतो हेतोः? तद्वचनात्–तस्या एव खलेवाल्याः यूपतावचनात्। प्राकृतयूपानुवादेन खलेवालीत्वविधानादिति। चकारो हेतुसमुच्चयार्थः। तेन च–यत्किञ्चित्काष्ठप्रकृतिकेन खलेवालीद्रव्येण पशुनियोजनादिरूप कर्मसंयोगात्। अतः खलेवाली यत्किञ्चिद्वृक्षप्रकृतिका, तण्डुलाश्चाव्रैहेया इति प्राकृतधर्मलोपः ॥ ७१ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–स्पष्टमेवेदम् ॥ ३१ ॥

---

१ ... त्प्राकृतगुणलोपः ... ... ... क. ख.

(परप्रतिषेधाधिकरणम्—३२)

## परेषां प्रतिषेधस्स्यात् ॥ ७२ ॥ (सि)

खलेवाल्येवोदाहरणम् । तत्र किं तक्षणाभ्युच्छ्रयणान्तं कर्म कर्तव्यम्? उत न कर्तव्यम्? इति संदेहे :—

तत्र खलेवाल्यां परेषां—केशाञ्चिद्यूपसंस्काराणां तक्षणादीनां प्रतिषेधः स्यात्—सिद्धायाः खलेवाल्या एव यूपत्वोपादानादित्यर्थः । ७२ ॥

## विप्रतिषेधाच्च ॥ ७३ ॥

चकारो हेत्वन्तरोपदर्शनार्थः । खलेवाल्यां तक्षणादिषु क्रियमाणेषु अवयवनाशे सति खलेवालीत्वविरोधात् तक्षणादयो न कर्तव्याः खलेवाल्यामित्यर्थः ॥ ७३ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—अतिविषमं पूर्वपक्षे, सिद्धान्ते तु न तथा इति ॥

(अर्थाभावाधिकरणम्—३३)

## अर्थाभावे [1]संस्कारानर्थक्यं स्यात् ॥ ७४ ॥ (सि)

खलेवाल्येवोदाहरणम् । तत्र किं मैत्रावरुणदण्डेन संहन्ति, अपः परिषिञ्चति" इत्येवमादीनामनुष्ठानं नास्ति? उतास्ति? इति संदेहे सति—

अर्थाभावे—प्रयोजनाभावे सत्येव खलेवाल्यां तक्षणादिसंस्काराणां आनर्थक्यं स्यात् । मैत्रावरुणदण्डसंहननादीनान्तु खले निखातखलेवालीदार्ढ्यसंपादकत्वेन अर्थलोपाभावात् संहननादयः अंजनादयश्चानर्थलुप्ताः कर्तव्या एवेति ॥ ७४ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—स्पष्टमेदम् ॥ ३३ ॥

---

१ ... संस्कारत्वं स्यात क. ख.

( महापितृयज्ञाधिकरणम्—३४ )

## अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥ ७५ ॥ (सि)

महापितृयज्ञे श्रूयते—"सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपेत् पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्" इति ।

तत्र धानासु अवहननं प्रकृतिवत्कर्तव्यम्? उत न कर्तव्यम्? इति संदेहे सति—

तत्र धानासु—दध्यादिमिश्रित भृष्टतण्डुलरूपासु, यद्यपि निर्वापानन्तरं अवहननं क्रियमाणं रूपविघातकं स्यात्, सक्तुत्वं धानास्वापादयेत्, तथापि प्राकृतावहननस्य अर्थेन—आर्थिकेन प्रयोजनमूलेन क्रमेण विपर्यासे—निर्वापपूर्वकालीनरूपे विपर्यासे सति प्रकृतिवदत्रापि तादर्थ्यात्—पूर्वं क्रियमाणस्यापि हन्तेः तण्डुलसंस्कारार्थत्वात् तत्त्वमेव—धानात्वमेव स्यात्, न सक्तुत्वम् । अतः प्राकृतस्य निर्वापोत्तरकालीनस्य हन्तेः अत्रापि विपर्ययेणानुष्ठानमित्येतावत् ॥

प्रयोजनन्त्वनुष्ठानरूपम्—स्पष्टमेदम् ॥ ३४ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां दशमस्याध्यायस्य द्वितीयः पादः ।

---

## दशमस्याध्यायस्य तृतीयः पादः

---

( गुणानामधिकोत्पत्त्यधिकरणम्—१ )

## विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिस्संनिधानात् ॥ १ ॥ (पू)

अग्नीषोमीये पशावाम्नायते—"एकादश प्रयाजान् यजति, एकादशानूयाजान् यजति" इति ॥

तथा—चातुर्मास्येषु श्रूयते—" नव प्रयाजा इज्यन्ते नवानूयाजाः' इति ॥

तथा—वायव्ये पशावाम्नायते "हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयति" इति ॥

तत्र किमिमानि प्रयाजादीनि कर्मान्तरम्? उत प्राक्तन प्रयाजाद्यनुवादेन एकादशत्वादिगुणविधयः? इति सन्देहे सतिः—

सर्वत्र विकृतौ प्रधानस्य प्रधानमात्रस्य शब्दवत्त्वात्—शब्दोपात्तत्वात्, प्राकृतानामङ्गानां शब्दानुपात्तत्वेन आतिदेशिकत्वात् अत्र गुणकर्मणां अधिकोत्पत्तिः—प्रकृत्यपेक्षया अधिकानां गुणकर्मणां उत्पत्तिः विधिः। नतु प्राकृतप्रयाजाद्यनुवादेन (गुणविधिः)। कुतो हेतोः? संनिधानात्—प्राकृतानामङ्गानां प्रकृतिसंनिधानात् प्रकृतावेवान्वयो विकृतौ तु व्यवधानान्नान्वयः। त (तश्च प्रा)कृती इतिकर्तव्यता न प्राप्यते। अप्राप्ताया(श्चतस्या) कर्मान्तराण्येवेमानीति ॥ १ ॥

## [1]प्रकृतिवच्छब्दस्य चानुपरोधः स्यात् ॥ २ ॥

एवञ्च कर्मान्तरत्वे सति प्रकृतिवच्छब्दस्य प्रयानादिविष ... ... ... परोधः—अकल्पना स्यात्। प्राकृताङ्गैकवाक्यता विकृतात् रूपकृतो ... ... पहितास .... ... ... तस्मात् कर्मान्तराणि। यागं करोति—एकादशं करोति, आघारं करोति—हिरण्यगर्भस्समवर्तताग्र—इति करोदि—इत्येवंरूपकर्मान्तरविधिः ॥

## चोदनाप्रभुत्वाच्च ॥ ३ ॥

इदं अस्रुलित शङ्कापदोत्तरम्। यदुक्तम्, प्राकृत प्रयाजादिकर्मसंज्ञाप्रत्यभिज्ञानात् एकादशत्वादिगुण ... ... ... सामर्थ्यात् गुणविधिपरत्वमेव, न कर्मचोदनायां सामर्थ्यमिति, चकारः एवकारार्थे। "एकादश प्रयाजान् यजति" "एकादशानूयाजान् यजति" इत्यादीनां ... ... ... ... करोतीत्येवमाकाराणां आख्यातशब्दानां भावार्थाधिकरणन्यायेन कर्मचोदनायां प्रभुत्वात् समर्थत्वात् चोदनैव कर्मण इति ॥ ३ ॥

---

१ प्रकृतिवत्वस्य च .... क. ख.

प्रधानन्त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात् तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान्विधि [1]रशेषात्प्रवर्तितः ॥ ४ ॥ (सि)

तुना प्राकृतेतिकर्तव्यताया अप्राप्तिर्निवार्यते। प्रकृतौ प्रधानाग्नेयादि अङ्गसंयुक्तम् – प्रयाजाद्यङ्गसंयुक्तम्, अपूर्वं – विकृतिकर्मापि, तथाभूतम् प्रकृतिवदेव स्यात् – प्राकृताङ्गोपकारग्राहि स्यात्। कुतो हेतोः? तस्य – प्राकृतस्य, विध्युपलक्षणात् – प्राकृताङ्गविधेः कासुचिद्विकृतिषु, "प्रयाजे-प्रयाजे कृष्णलं जुहोति" इत्येवमाकारेणोपलक्षणात् – उपलभ्यमानत्वात्। अतस्सर्वोऽपि वैकृतो विधिः पूर्ववान् – प्रकृतिपूर्वको भवति। तस्माच्चोदकः इतरप्रकृतिवदेवात्राप्यविशेषात् प्रवर्तितः। तस्मात्प्राकृतीतिकर्तव्यता प्राप्यते, प्राप्तायां गुणविधय इति। ४॥

नचाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। नह्यनङ्गे कर्मणि, अङ्गविधिः अङ्गविशेषविधिः स्यात्। अयमर्थः – सामान्याङ्गसंबन्धे सत्येव अङ्गविशेषविधि-रुपपद्यते। यथा प्रकृतितः सामान्यतः प्रस्तरे प्राप्ते, आश्ववालरूपप्रस्तरविशेष-विधिः, तद्वदत्रापि। न ह्यसति सामान्येन विधौ विशेषविधिरुपपद्यते। तस्माद्गुणविधय एव प्रयाजानुवादेन॥ ५॥

कर्मणस्त्वेकशब्द्यात् संनिधाने विधे [2]राख्याभिसंयोगा-द्गुणेन तद्विकारस्स्यात् शब्दस्य विधिगामित्वात् गुणस्य चोपदेश्यत्वात् ॥ ६ ॥

इतश्च गुणविधय एव। कुतः कारणात्? कर्मणः – प्रधानकर्मणो गुण-कर्मणश्च गुणसहितप्रधानकर्मणः ऐकशब्द्यात् – 'कर्म युगपदनुष्ठेयम्' इत्येव-माकारेण एकेन प्रयोगवचनेनोपसंगृहीतत्वात्। अतः प्रयोगवचनात् प्राकृता-

---

१ ... ...रविशेषात्प्रवर्तितः क. ख. अत्रापि व्याख्या तथैव।

२ ... राख्यासंयोगो गुणेन ... क. ख.

नामङ्गानां विकृतौ संनिधाने सति गुणविधेराख्याभिसंयोगात्—प्रयाजयागाख्याभिसंयोगात् प्राकृतप्रयाजादिप्रत्यभिज्ञानादित्यर्थः। तद्विकारः—प्रयाजविकारः, गुणेन—एकादशत्वादिरूपेण स्यात्। प्रयाजपुनर्वचनस्य प्रयोजनमाह—चकार उक्तिविशेषार्थः। अत्र एकादशत्वादिरूपस्य गुणस्य उपदेश्यत्वात्—विधेयत्वाद्धेतोः। शब्दस्य प्र... ... शब्दस्य— अनुवाद्यत्वेन गुणविधिगामित्वात्। उद्देश्यत्वेन गुणविधिगामित्वमित्यर्थः। अतो न पुनर्वचनवैयर्थ्यं शङ्का। तस्माद्गुणविधय एवैते—इति॥ ६॥

## अकार्यत्वाच्च नाम्नः ॥ ७ ॥

चकारः शङ्कान्तर व्यावृत्त्यर्थः। यद्युच्येत—प्रयाजाद्युच्चारणं "एकादशयागान् करोति, ते च प्रयाजानुयाजसंज्ञका भवन्ति" इति प्रयाजादिनाम्नः, एकादशयागान् करोति इति नामिनश्च संबन्धार्थमिदमुच्चारणम्, ततो नानुवादता गुणविधिता चेति; तन्नोपपद्यते। कुतो हेतोः? एवं ह्युच्यमाने त्वदुक्तप्रकारेणैव वाक्यं भिद्येत—"एकादश यागान् करोति, ते प्रयाजानुयाजसंज्ञका भवन्ति" इति वाक्यभेदापत्तेः। नाम्नो नामिसंबन्धस्यापि अकार्यत्वात्—अग्राह्यत्वात्। अतो नामनामिसंबन्धार्थमुभयोरुच्चारणमित्येतन्नोपपद्यते॥ ७॥

## तुल्या च प्रभुता गुणे ॥ ८ ॥

चकारः पूर्वपक्ष्युक्तशङ्काव्युदासार्थः। यदुक्तं — आख्यातशब्दानां भावार्थाधिकरणन्यायेन प्रधानकर्मविधायकत्वमेव, न तु गुणरूपेण—इति। तत्रोत्तरम्—आख्यातानां प्रभुता—सामर्थ्यम्, गुणे—गुणविधावपि तुल्या। तदयमर्थः—यान्याख्यातानि गुणसहितानि प्रधानान्यपि कर्माणि विदधति न तेषां लघुतरगुणमात्रविधौ असामर्थ्यम्, यो हि पाषाणान् भक्षयति कथं तस्य मुद्गशष्कुल्यादिभक्षणेऽसामर्थ्यम्? तस्माद्गुणविधय इति॥ ८॥

## सर्वमेवं [1]प्रधानम् ॥ ९ ॥

---

1 सर्वमेवं प्रधानमिति चेत्, क. ख.

इति चेत्पश्यसि आख्यातशब्दा—एते गुणं विधास्यन्तीति, तर्हि आख्यातशब्दस्तस्य एकस्मिन् शब्दे सर्वं गुणकर्मजातं ... ... ... यस्मात्तस्मान्न गुणविधिपरम्, किन्तु कर्मान्तरविधिः—इति पूर्वपक्षिशङ्का ॥ ९ ॥

तथाभूतेन संयोगाद्यथार्थविधयस्स्युः ॥ १० ॥

... ... ... ... त्तरम् । नैतदेवं आख्यातशब्दवाच्यत्वेन सर्वं प्रधानमिति । नह्याख्यातशब्दा गुणं प्रधानीकुर्वन्ति, प्रधानं वा गुणीकुर्वन्ति । तथाभूतेन गुणभूतेन प्रधानभूतेन ... .... ... ... णायोगात् यथार्थ—विधित्सितमर्थमनतिक्रम्य आख्यातशब्दा विधयस्स्युः—विधायकाः स्युरित्यर्थः । नह्याख्यातशब्दश्रवणादेव सर्वं प्रधानकर्म भवतीति । ... ... ... ... प्रधानं वा कर्मविधेयं स्यात्, तत्परा एवाख्यातशब्दाः । अत्र च गुणा एव विधेयाः । अत एते आख्यातशब्दाः गुणसंयोगात् गुणविधिपरा एव ॥ १० ॥

विधित्वञ्चाविशिष्टं[1] प्राकृतानां वैकृतैः कर्मणो योगस्तस्मात्सर्वं प्रधानार्थम् ॥ ११ ॥

चकार उक्तार्थे हेत्वन्तरसमुच्चयार्थः । इतश्च कारणात् गुणविधय एवैते न कर्मान्तरविधय इति । प्राकृतानां कर्मणां प्रयाजादीनां वैकृतैः—विकृतिगतैरर्थवादैः विधिपरत्वमविशिष्टम्—तदयमर्थः—प्रकृतावग्निं स्विष्टकृतं यजति यज्ञस्य प्रतिष्ठित्यै "इति च, "चक्षुषी वा एते यज्ञस्य यदाज्यभागौ" इति च श्रुतम् । विकृतावपित ... ... श्रूयते—अग्निं स्विष्टकृतं यजति यज्ञमेव प्रतिष्ठापयति" इति च, "आज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेति" इति च समानार्थकम् । अतः प्राकृतकर्मणः प्रयाजादेर्विकृतौ अर्थवादवाक्यैर्योगः, तस्माद्धेतोः सिद्धमेवंजातीयकं प्रयाजादिरूपं प्रधानार्थं—गुणभूतं, न कर्मान्तरम् ॥ ११ ॥

समत्वाच्च तदुत्पत्तेस्संस्कारैरधिकारस्स्यात् ॥ १२ ॥

---

१ ... शिष्टमेवं ... कर्मणा योगात् ... क. ख.

इतश्च गुणविधय एव। तदुत्पत्तेः – प्रयाजाद्युत्पत्तेः, प्राकृत्याः विकृतौ ... ... प्रयाजादिक्रमोत्पत्त्या समत्वात्। कथं क्रमोत्पत्तिसाम्यम्? येनैव क्रमेण संस्कारैः–प्रयाजादिसंस्कारकर्मभिः अर्थकर्मभिः कृत्वा अधिकारः– क्रमः स्यात्, तेनैव क्रमेण विकृतौ "प्रजापतिर्यज्ञमसृजत स आज्यं पुरस्तादसृजत, पशुं मध्यतः पृषदाज्यं पश्चात्" इति क्रमश्रुत्या प्रयाजाज्यभागाद्याज्यद्रव्यकयागतुल्यकर्मणो विकृतौ दर्शनात्। चोदकप्राप्तप्रयाजाद्यनुवादेन वा एकदेशादिगुणविधय – एव, न कर्मान्तरम्। अतस्सर्वं न प्रधानम्, प्रधानार्थमप्येवंजातीयकं किञ्चिदङ्गमस्ति। अत एवाङ्गातिदेशात् अतिदिष्टेषु गुणविधय इति॥ १२॥

प्रयोजनन्त्वनुष्ठानरूपम् – पूर्वपक्षे चतुर्थोत्तमयोः समानयमानोऽष्टमे सर्वं इत्यादिधर्मा न भवन्ति। सिद्धान्ते तु प्रकृतिवदिति॥ १॥

(हिरण्यगर्भाधिकरणम्–२)

## [1]हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गात्॥ १३॥ (५)

वायव्ये पशौ श्रूयते–'हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयति' इति॥

तत्र प्राप्ताघारे गुणविधित्वे सिद्धे;

अपरं संदिह्यते – किं प्राप्तपूर्वाघारे प्राजापत्ये गुणविधिः? उत उत्तरे ऐन्द्रे इति॥

तत्र विहिते हिरण्यगर्भे – हिरण्यगर्भाघारे, पूर्वस्य आघारस्यैव हिरण्यगर्भरूपगुणविधिर्भवेत्। कुतो हेतोः? मन्त्रलिङ्गात् – हिरण्यगर्भस्समवर्तताग्र इति मन्त्रे, "भूतस्य जातः पतिरेक आसीत्" इत्येवंविधलिङ्गात्। अयं भावः–प्रजोत्पत्तेः प्राक् एकसंख्यायोगः प्रजापतेरेव, न देवतान्तरस्य। अतः प्रकृतौ प्रथमाघारस्य प्राजापत्यत्वात्, अस्यापि मन्त्रस्य प्रजापतिपरत्वात् प्रथमाघार एव गुणविधिः, नोत्तरस्मिन्नैन्द्राघारे इति॥ १३॥

---

१ हिरण्यगर्भः–क. ख.

[1]प्रकृत्यनुरोधाच्च ॥ १४ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । प्रथमे प्राजापत्याघारे हिरण्यगर्भमन्त्ररूपगुणविधौ सति प्रकृत्यनुरोधात्—प्रकृतिवद्विकृतिः कर्तव्या इति प्राकृतोत्तराघारमन्त्रवत्त्वानुरोधात् पूर्वाघार एव गुणविधिस्स्यात् । इतरथा—उत्तराघारे गुणविधौ सति, प्राकृतस्य—इन्द्रो अक्षणोद्वीर्यस्य—पशुभ्योऽध्वरेऽध्वर इति प्राकृतोत्तराघारमन्त्रस्य बाधः स्यात् ॥ १४ ॥

उत्तरस्य वा मन्त्रार्थित्वात् ॥ १५ ॥ (सि)

वाकारः ... ... ... ... मन्त्रगुणविधिपक्षं व्यावर्तयति । उत्तरस्यैवाघारस्य मन्त्रगुणविधिर्न पूर्वस्य । कुतः? मन्त्रार्थित्वात्—प्रकृतावुत्तराघारस्य मन्त्रवत्त्वेन श्रुतिविधान .... ... ... प्रकृतावुत्तराघारस्यैव मन्त्र ... ... ... ... ... सामान्यविधाने सति ... ... ... ... पविधानोपपादनपूर्वक ... ... ... ... ... समन्त्रकत्वेन अश्रौतत्वात् ... ... ... रलोपेन छान्दसेन क ... ... ... ... ... हविषा विधेमेति अत्रापि मन्त्रस्य, "भूतस्य जातः पतिरेक आसी' दिति प्राणिनामुत्पत्तेः प्राक् एकसंख्यायोगो ब्रह्मण एवेति ... ... ... ... स्यति। तस्य ऐश्वर्ययोगनिमित्तत्वेन इन्द्रशब्दस्यात्रापि प्राक्प्रजोत्पत्तेः एकसंख्यायोग उपपद्यते । तस्य च सर्वप्रजोत्पादने लिङ्गानि ।

[2]"क ईं स्तवत्कः पृणात्को यजाते यदुग्रमिन्मघवा विश्वहावेत् । पादाविव प्रहरन्नन्यमन्यम् कृणोति पूर्वमपरं शचीभिः" ॥ इति ।

अस्यार्थः—क ईं स्तवत्—एनमिन्द्रं स्तोतुं कश्शक्नोति? कः पृणात्? को वास्मै ... दातुमलं भवति? को यजाते? यष्टुमलं भवतीति । सर्वत्रानवक्लप्तेरेव दर्शनात् । पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभि—इति च अन्यथा कर्तुमपि शक्तिदर्शनात् ॥

[3]"क उ नु ते महिमन स्समस्यास्मत्पूर्वमृषयोऽन्तमापुः ।
यन्मातरं च पितरञ्च साकमजनयथास्तन्वाः स्वायाः ॥

---

१ प्रकृत्यनुपरोधाच्च. क. ख. २ ऋग्वेदे ६-४७-१५. ३ ऋग्वेदे १०-५४-३.

इति लिङ्गान्तरम्। अस्य चार्थः—ते समस्य—सम ... ... केनुपूर्वेऋषयो-ऽन्तमापुः? न केऽपि महिमनः पारमापुः। मातरं पितरञ्च साकं—सहैव यत् स्वायाः तन्वाः—स्वशरीरात् अजनयथाः—जनयसीति च दर्शनात् प्रजोत्पत्तेः प्राक् चतुर्मुखस्येव इन्द्रस्यापि एकत्वमुपपद्यते। तस्मान्मन्त्रस्यैन्द्रस्ये-दृशस्य प्रजोत्पत्तेः प्राक् एकत्वे अर्थवत्त्वात् उत्तराघार एव गुणविधिर्न पूर्वे। तस्मात्, "यत इन्द्रो अकृणोत्" इति मन्त्रमुद्राप्याऽयं मन्त्रस्तत्स्थाने आवप्तव्यः न तु पूर्व इति ॥ १५ ॥

## विध्यातिदेशाच्च[1] तच्छ्रुतौ विकारस्स्यात् गुणानामुपदेश्य-त्वात् ॥ १६ ॥

चकारः उक्तोऽर्थे हेत्वन्तरसमुच्चयार्थः। "हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयती"ति आघारश्रुतौ अनुवाद्यत्वेन श्रूयमाणाया ... ... त्यां प्रकृतिवदेव विध्यतिदेशात्—अङ्गविध्यतिदेशात्, प्रकृतौ उत्तरस्याघारस्यैव मन्त्रवत्त्व ... तच मन्त्रविशेषविधानात् मन्त्र विकार एव स्यात्। कुतो हेतोः? प्राकृताघारानुवादे सति गुणानाम्—मन्त्रादिविशेषरूपाणां उपदेश्य-त्वात्—अनुवाद्यश्रवणे सति मन्त्रविशेषरूपगुणविधिरेवोत्तराघार इति न पूर्वस्मिन्नव काशः ॥ १६ ॥

## [2]पूर्वस्मिंश्चामन्त्रत्वस्य च दर्शनात् ॥ १७ ॥

चकारो युक्तिसमुच्चयार्थः। "न स्वाहेति च करोति, मन्त्रश्च नाऽऽह" इति पूर्वस्मिन् याज्ञिकसमाख्याप्राप्ते प्रजापतिदेवताके आघारे अमन्त्रदर्शनात्—मन्त्रादर्शनात् अथवा अमन्त्रत्वदर्शनादिति वा पाठस्साधुः। प्रकृतौ च उत्तरस्यैव मन्त्रवत्त्वात् तत्रैव मन्त्रविशेषविधानपरमिदमिति सर्वश्चतु-रस्रम् ॥ १७ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पूर्वोत्तरयोः पक्षयोर्विशदतरम् ॥ २ ॥

---

१ चकारो नास्ति क. ख. अत्रापि व्याख्या तथैव.

२ पूर्वस्मिंश्चामन्त्रत्वदर्शनात्. क. ख.

( उत्करवाजिनाधिकरणम्—३ )

[1]संस्कारे तु क्रियान्तरस्य विधायकत्वात् ॥ १८ ॥ (पू)

सोमचातुर्मास्येषु श्रूयते—"उत्करे वाजिनमासादयति" "परिधौ पशुं नियुञ्जीत" इति ॥

तत्र संदेहः—किमुत्करे वाजिनासादनं, परिधौ च पशुनियोजनं अदृष्टार्थं सत् क्रियान्तरम्? उत दृष्टकार्यं, प्राकृतगुणे गुणविधिः? इति ॥

तत्र तुः अभ्यधिकाशङ्कार्थः। यथा पूर्वस्मिन्नधिकरणे प्राकृताघारानुवादेन गुणविधिः न तथात्रेति। संस्कारे—संस्कारप्रतिपादके "उत्करे वाजिनमासादयति, परिधौ पशुं नियुञ्जीत" इत्येतस्मिन्वाक्ये, आसादन नियोजनरूपस्य क्रियान्तरस्यैव … … … … … … स्य। कुतः? नियुञ्जीत इति लिङो विधायकत्वात्। विधिप्रत्ययश्रवणे श्रौतार्थानुग्रहस्स्यात्। इतरथा आसादननियोजनयोर्गुणविधिलक्षकत्वं स्यात्। श्रुतिलक्षणाविशये च श्रुतेरेव परिग्राह्यत्वात्। तस्मादासादननियोजने कर्मान्तरमिति, न प्राकृतासादननियोजनानुवादेन उत्करपरिधिरूपगुणविधिरित्यर्थः ॥ १८ ॥

[2]प्रकृत्यनुरोधाच्च ॥ १९ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। वाजिनासादनपशुनियोजनयोः कर्मान्तरत्वे सति, विकृतिगतयोरन्तर्वेदिहविरासादनयूपपशुनियोजनयोः अर्थयोः प्रकृत्यनुरोधात्-प्रकृतिवद्विकृतिः कर्तव्येति चोदकानुग्रहाद्धेतोः वाजिनासादनपरिधिनियोजने कर्मान्तरे, न तु गुणविधिः। यदि गुणविधिः स्यात्, तर्हि यदासादयति तदुत्करे, यन्नियोजयति तत्परिधौ, इति प्रकृतिवत्प्रापकस्य चोदकस्य बाध एव सर्वथा विकृतावत्र स्यात्। कर्मान्तरत्वे सति तत्र तत्कर्मयोगत्वेन न चोदनोपरोधस्स्या … … … तीदमुभयमपि कर्मान्तरम् ॥ १९ ॥

---

१ संस्कारे तु क्रियान्तरं तस्य विधायकत्वात्. क. ख.

२ प्रकृत्यनुपरोधाच्च. क. ख.

विधेस्तु तत्र भावात् संदेहे यस्य शब्दस्तदर्थस्स्यात् ॥ २० ॥
(सि)

तुना कर्मान्तरत्वपक्षो व्यावर्त्यते। विधेः – आसादननियोजनविधेः, चोदकेन तत्र – विकृतौ भावात् – प्राप्तत्वात् संदेहे – कर्मान्तरत्वगुणविधित्व संदेहे सति यस्य उत्कर परिध्यादि रूपस्य गुणस्य वाचकः उत्करादिशब्दः श्रूयते, तत्रोत्करपरिधिरूपयोः शब्दयोरुच्चारणं तदर्थं – उत्करादिरूपगुण-विधानार्थम् । अयं भावः – प्रकृतिन्यायेनासादननियोजनयोः प्राप्तत्वात् प्राप्तकर्मानुवादेन गुणविधिरेवोपपद्यते, न तु कर्मान्तरविधिः। चोदकप्राप्तत्वेन आसादन नियोजनयोर्विधेः ज्ञातज्ञापनत्वात्। ज्ञातज्ञापनत्वे च अनुवाद्यत्वम्। तस्माद्गुणविधिरेव ॥ २० ॥

[1]संस्कारसामर्थ्याद्गुणयोगाच्च ॥ २१ ॥

यदुक्तं, तीक्ष्णाग्रत्वादुत्करस्य, शयानत्वाच्च परिधेः दृष्टं कार्यं नोपपद्यते। अतो धर्ममात्रे आसादननियोजने। ततश्च कर्मान्तरत्वमिति; तन्नोपपद्यते। उत्करपरिध्योः गुणयोगात्–पृथ्वग्रत्वस्थविमरूपगुणयोगात्–हेतोः आसादन-नियोजनरूप संस्कारसामर्थ्यात्–सामर्थ्यसंभवात्। आसादननियोजनान्यथा-नुपपत्त्या उत्करे पृथ्वग्रता, परिधौ च स्थविष्ठत्वं–उभयमपि कर्तव्यम्। २१ ॥

[2]प्रतिषेधात्क्रिया प्रकरणे स्यात् ॥ २२ ॥

यदुक्तं, सौत्रामण्यां "ब्राह्मणस्य शिरस्यासादयति" इतिवत् अत्रापि धर्ममात्रमासादनं स्यादिति; तत्रोत्तरम् – प्रकरणे – सौत्रामणीप्रकरणे ब्राह्मण-शिरस्यासादनस्य दृष्टकार्यविप्रतिषेधात् क्रिया–धर्ममात्रमिति कृत्वा क्रिया-न्तरं स्यात्, न त्विह दृष्टकार्याभाव इत्यर्थः ॥ २२ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – अनतिगहनं, अतो न विलिख्यते ॥ ३ ॥

---

१ संस्कारसामर्थ्याद्गुणसंयोगाच्च. क. ख.

२ विप्रतिषेधात्क्रियाप्रकरणे स्यात् – क. ख. अत्रापि व्याख्या तथैव।

( मन्त्रविकाराधिकरणम् –४ )

## षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ ॥ २३ ॥ (पू)

अग्निचयने–'आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहाऽऽपोदेवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा विश्वेदेवस्य नेतुर्मर्तो वृणीत सख्यम्' इति प्रकृत्य, 'षड्भिर्दीक्षयति' इति समामनन्ति ॥

तथा प्रकृतौ 'आकूतिमग्निं प्रयुजं स्वाहा मनो मेधामग्निं ... चित्तं विज्ञातमग्निं ... वाचो विधृतिमग्निं ... ... प्रजापतये मनवे ... अग्नये वैश्वानराय ... विश्वेदेवस्य नेतुः ...' इत्युभयसाधारणो मन्त्रः ।

तत्र संदेहः–किं वैकृतीनामेव षण्णामाहुतीनां प्रयोगः? उत उभयीषां प्राकृतीनां वैकृतीनाञ्च समुच्चयः? इति ॥

तत्र षड्भिर्दीक्षयतीत्यत्र विधिवाक्ये तासां–प्राकृतीनां सप्तानां दीक्षाहुतीनां मन्त्रविकारः स्यात्, मन्त्रैरेव वैकृतैः प्राकृतीनामाहुतीनां विकारस्स्यात् अन्यथाभावः स्यात्–व्यावृत्तिस्स्यादित्यर्थः । कुतो हेतोः? श्रुतिसंयोगात्–वैकृतीनां षण्णामेवाहुतीनां षड्भिर्दीक्षयतीति तृतीयाश्रुतिसंयोगात् । प्राकृताहुतिसंयोगस्य चोदकप्राप्तत्वेन विषमसंख्याकत्वेन च श्रौतत्वाभावात् । तस्मात्प्राकृतीनां निवृत्तिः, वैकृतीनामनुष्ठानमिति ॥ २३ ॥

## अभ्यासात्तु प्रधानस्य ॥ २४ ॥ (सि)

तुना प्राकृताहुतिबाधपक्षो निवार्यते । नैतदुपपद्यते असमुच्चय इति । इहाग्निप्रकरणे प्रधानस्य होमस्य "द्वादश जुहोति" इति प्रधानस्य अभ्यासात्–समुच्चयेऽप्यप्राकृतप्राकृतहोमयोः मन्त्रैक्येनाभ्यासात् द्वादशत्वसंख्योपपत्त्यर्थं प्राकृतीनां वैकृतीनाञ्च समुच्चय एवेति ॥ २४ ॥

## आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥

नैतदुपपद्यते — समुच्चय इति । षड्भिर्दीक्षयतीति वैकृतीनां प्रत्यक्षतः श्रवणात् प्राकृतानामप्राप्तिः । यद्यभ्यासेन द्वादशत्वसंपादनं, तदा आवृत्त्या — मन्त्रावृत्त्या मन्त्रकर्म स्यात् — मन्त्रैर्वैकृतैराहुतिरूपकर्म स्यात् । अयं भावः — यदि प्रत्यक्षश्रवणात् वैकृता एव गृह्येरन्, तदापि प्राकृतानां सप्तानामपि मन्त्राणामप्राप्तिः । यद्यभ्यासः व्यक्तिभेदे सत्यभ्यासशब्दप्रवृत्तेः । अभ्यासस्य च व्यक्त्यैक्यमूलकत्वेन वैकृतानां मन्त्राणामेवाभ्यासस्स्यात् । अत उभयथापि प्राकृतानामप्राप्तिरिति ॥ २५ ॥

## अपि वा प्रतिमन्त्रत्वात्प्राकृतानाम[1]हानं स्यादन्याय्यश्च कृतेऽभ्यासः ॥ २६ ॥

अपि वेति पक्षव्यावर्तकः । अग्नौ प्राकृतीनामाहुतीनां वैकृतीनाञ्च समुच्चय इति । कुतो हेतोः? आहुतीनां प्राकृतीनां प्रतिमन्त्रत्वात् — प्रतिमन्त्रं क्रियमाणत्वात् । स्वाहाकारान्तानां मन्त्राणां प्राप्तानां होमसंयोगात् । वैकृतीनाञ्च दीक्षायामेव संयुक्तत्वेन होमसंयोगाभावात्, होमानाञ्च कर्तव्यत्वात्, होमद्वारा चोदकेन प्राप्तानां मन्त्राणाञ्च अहानम् — अपरित्याग एव स्यात् । चकारः किञ्चेत्यर्थे । वैकृतानां मन्त्राणां अभ्यासेन द्वादशसंख्योपपादनं इत्यभ्यासश्च सकृत्पठितैरेवं होमः प्रकृतिषु यजमान ... ... तैरेतैः सकृत्पठितैरेव मन्त्रैर्यजमाने च चरितार्थीकृते अभ्यासोऽन्याय्यस्स्यात् । अतः प्राकृतवैकृतानामुभयेषां मन्त्राणां प्राकृतान्तिममन्त्रपरित्यागेन प्राकृतानां वैकृतानाञ्च समुच्चयेन द्वादशत्वोपपत्तिर्नान्यथेति ॥ २६ ॥

## पौर्वापर्यञ्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥

चकारो हेत्वन्तरसमुच्चयार्थः । "षट्पूर्वाञ्जुहोति, षडुत्तरान्" इति आहुतिपौर्वापर्यञ्च वैकृतानां अभ्यासे नोपपद्यते । कुतः? नैमित्तिकत्वात् — पूर्वनिमित्तत्वादुत्तरशब्दस्य — उत्तरनिमित्तत्वाच्च पूर्वशब्दस्य, केवलं वैकृतानां अभ्यस्यमानानां, 'षट्पूर्वाञ्जुहोति — षडुत्तरान्' इत्येतन्नोपपद्यते । तस्मादपि प्राकृतानां मन्त्राणामहानमिति ॥ २७ ॥

---

१ .... .... महानिस्स्यात् ... ... क. ख.

१पृथक्त्वञ्च दर्शयति ॥ २८ ॥

चकारः उक्तयन्तर प्रदर्शनार्थः । 'ता उभयीर्जुहोत्याग्निकीश्चाध्वरिकीश्च' इत्याग्निकीनां आध्वरिकीनाञ्चाहुतीनां उभयीरिति पृथग्दर्शनाच्च प्राकृतवैकृत समुच्चय इति ॥ २८ ॥

न चाविशेषाद् व्यपदेशात्स्यात् ॥ २९ ॥

इतश्च हेतोः प्राकृतानां वैकृतानाञ्च समुच्चयः । "अध्वरस्य पूर्वं, अथाग्नेः, उपाग्नि ह्येतत्कर्म यदाग्निकम्" इति पूर्वमग्नेः; अथाग्नेः—इति व्यपदेशश्च अविशेषात्—विशेषाद्विना—ईदृशेन विशेषेण विना नोपपद्यते। नासतीदृशे ... ... परत्वविशेषे । तस्मात्प्राकृतानामुभयसाधारणान्तिमवर्जितानां षण्णां मन्त्राणां, वैकृतानाञ्च षण्णां समुच्चयेनैव द्वादशत्वोपपादनं, नान्यथेति ॥

प्रयोजनन्त्वनुष्ठानरूपम्—विशदप्रायम् ॥ ४ ॥

( पुनरुत्स्यूताधिकरणम्—५ )

अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥ (पू)

'भाग्ययशश्श्रीकामानां पुनरादधीत' 'योऽग्नीनाधाय भाग्यज्यानिं पुत्रज्यानिं वा जीयेत, स पुनरादधीत' इति श्रुते काम्यनैमित्तिके पुनराधाने, 'पुनरुत्स्यूतं वासो दक्षिणा—पुनरुत्सृष्टोऽनड्वान्' इति श्रुतम् ॥

प्रकृतावाधाने च, "एका देया, षड्देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः, षष्टिर्देयाः, शतं देयम्, सहस्रं देयम्, अयुतं देयम्, अपरिमितं देयम्" इति श्रुतम् ॥

तत्र संशयः—किं नैमित्तिके अग्न्याधेये प्राकृतीनां दक्षिणानां समुच्चयः? उत पुनरुत्स्यूतवासःप्रभृतिभिः प्राकृत्यो दक्षिणा निवर्त्यन्ते? इति ॥

---

१ तत्पृथक्त्वञ्च दर्शयति. क. ख.

तत्र अग्न्याधेयस्य ... ... ... तस्य गुणविकारे—भाग्यादिकामनावतीत्यर्थः । नैमित्तिके—भाग्यइज्यानि पुत्रज्यानि निमित्तके पुनराधाने, यत् दक्षिणादानं वैकृतं तत् प्राकृतात्—प्रकृतिवद्वाक्यप्राप्तात् एकादिदक्षिणादानात्—अधिकमेव स्यात्—प्राकृत्योऽपि समुच्चीयन्त इत्यर्थः । कुतः ? "ता उभयीर्ददात्याग्न्याधेयिकीश्च पौनराधेयिकीश्च" इति वाक्ये उभयीनां प्राकृतीनां वैकृतीनाञ्च दक्षिणानां संयोगात् । तस्मादेव—उभयीवाक्यादेव समुच्चयोऽवगम्यते नान्यथा ॥ ३० ॥

## शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥

कथमानुमानिकीनां प्राकृतीनां, प्रत्यक्षश्रुतानां वैकृतीनाञ्च समुच्चयो भविष्यति ? काम्यं नैमित्तिकं वा प्राकृतं बाधमानमेव निविशते, नान्यथा—इत्यस्खलितशङ्कापदोत्तरं सूत्रम्—'आग्न्याधेयिकीर्दत्त्वा पौनराधेयिकीर्ददाति' इति इतरासां—प्राकृतीनाञ्च शिष्टत्वात्—प्रत्यक्षवाक्यशिष्टत्वात् यथास्थानं—समुच्चय इत्यर्थः । अतस्त्वदुक्तं दूषणमलब्धावकाशमिति ॥ ३१ ॥

## विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥

तुना समुच्चयपक्षो व्यावर्त्यते । प्राकृतीनां दक्षिणानां विकारः—निवृत्तिरेव स्यात्, न समुच्चयः । कुतः ? अप्रकरणे—अप्राकृतप्रकरणे पठितानि काम्यानि नैमित्तिकानि चेत्यर्थः । तानि प्राकृतं पदार्थं बाधमानान्येव निवेशं लभन्ते, नत्वबाधमानानि । तस्मादत्रापि पुनराधानप्रकरणे पठितस्य दक्षिणादानस्य अप्राकृतप्रकरणमध्यपातित्वेन प्राकृताग्न्याधेयदक्षिणानां निवृत्तिरेव । यत्तु "आग्न्याधेयिकीः पौनराधेयिकीश्च" इति समुच्चयवचनमिव; तत्तु—अग्न्याधेये आग्न्याधेयिकीर्ददातीति, पुनराधेये पौनराधेयिकीर्ददाती"त्येवंरूपभूतार्थवादपरत्वेन न साधकं समुच्चये ॥ ३२ ॥

## [१]शङ्क्यते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥

---

१ शङ्कते च ... ... क. ख.

चकारः उक्तार्थे युक्त्यन्तरप्रदर्शनार्थः। प्राकृतीनां दक्षिणानां निवृत्तिः शङ्क्यते। निवृत्त्यां शङ्कास्ति। हिर्हेतौ। यतः कारणात् "यद्वैकृती-र्दक्षिणा ददाति उभय्योऽपि तेन दक्षिणाः प्रदत्ता भवन्ति" इति वैकृतदक्षिणा-दानेनैव प्राकृतदक्षिणानुग्रहश्रवणादपि प्राकृतीनां निवृत्तिः। अयञ्च फलितोऽर्थः— अग्न्याधेये आग्न्याधेयिक्यः, पुनराधेये पौनराधेयिक्यश्च दीयन्त इति न समुच्चयः॥ ३३॥

प्रयोजनन्त्वनुष्ठानरूपम्—समुच्चयनिवृत्तिभेदेन विशदतरम्॥ ५॥

(वासोवत्साधिकरणम्—६)

[1]वासोवत्सश्च सामान्यात्॥ ३४॥ (सि)

अस्त्याग्रयणम्—'आग्रयणं भवति हुताद्याय यजमानस्यापराभावाय, नवानामैन्द्राग्नः, पुराणानामाग्नेयः, सौम्यश्श्यामाकः, वैश्वदेवः पयसि चरुः, द्यावापृथिव्य एककपालः" इति। तत्र श्रूयते—'वासो दक्षिणा वत्सः प्रथमजो दक्षिणा" इति। प्रकृतौ त्वन्वाहार्यो दक्षिणेति च श्रुतम्॥

तदत्र संशयः—किं वासोवत्साभ्या मन्वाहार्यदक्षिणा समुच्चीयते? उत अव्यवहिताधिकरणवत् प्राकृतदक्षिणानिवृत्तिः? इति॥

वासोवत्सश्चेत्येकवद्भावः। चकारेण अनन्तराधिकरणसिद्धान्तोऽन्वा-दिश्यते। इदं वासोवत्समपि प्राकृतान्वाहार्यदक्षिणानिवर्तकम्। कुतो हेतोः? सामान्यात्—दक्षिणाकार्यस्थानमनस्य इहापि वासोवत्से दक्षिणा-शब्दश्रवणेन समानत्वात्। अथवा वैकृतदक्षिणादानं प्राकृतबाधकमेवेत्यस्य पूर्वतनन्यायस्यात्रापि समानत्वान्निवृत्तिरेव दार्शपूर्णमासिकान्वाहार्यदक्षिणायाः इति॥ ३४॥

प्रयोजनन्त्वनुष्ठानरूपम्—विशदतरम्॥ ६॥

---

१ इदं सूत्रं मातृकायां नास्ति, व्याख्यानं परं विद्यते।

(अर्थापत्त्यधिकरणम्—७)

**अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंयोगात् ॥३५॥ (सि)**

तत्रैव वाससि वत्से च अन्वाहार्यस्थानापातिनि सन्दिह्यते— किमन्वाहार्यधर्मा न कर्तव्याः ? उत कर्तव्याः ? इति ॥

तत्र वासोवत्सरूपपदार्थस्य **अर्थापत्तेः**— अन्वाहार्यरूपपदार्थस्थानापत्तेः **तद्धर्मा**— अन्वाहार्यधर्मा वासोवत्ससमुदायस्स्यात् । कुतः ? **निमित्ताभिसंयोगात्**— आनमननिमित्तदक्षिणारूपाख्यया नाम्ना अभिसंयोगात् । अयं भावः—वासोवत्सयोरन्वाहार्यस्थानापन्नत्वेन स्थानापत्तिप्रमाणेन तद्धर्मप्राप्तिर्वासोवत्सयोस्स्यात् ॥ ३५ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—अन्तर्वेद्यासादनादि न स्यात्पूर्वपक्षे, सिद्धान्ते तु स्यादिति ॥ ७ ॥

(दानपाकाधिकरणम्—८)

**दाने पाकोऽर्थलक्षणः ॥ ३६ ॥ (सि)**

तत्र वत्से संदिह्यते— किमन्वाहार्यवत् पाकः कार्यः ? उत निवर्तते ? इति । तत्र वत्सदाने अर्थलक्षणः— प्रयोजनमूलः पाको न स्यात् । अयं भावः—वत्सदानस्य चोदितत्वात्, विशसने च क्रियमाणे वत्सत्वाभावात्, अत्र च मांसपाकस्याविहितत्वेन संज्ञपनस्य चाविहितत्वात्, विशिष्टशिष्टविगर्हितत्वात् संज्ञपनलिङ्गालम्भशब्दाद्यभावाच्च न पाकः ॥ ३६ ॥

प्रयोजनन्त्वनुष्ठानरूपम्— पूर्वपक्षे विपरीतं, सिद्धान्ते तु न तथेति ॥ ८ ॥

(वासःपाकाधिकरणम्—९)

**पाकस्य चान्न[1]कारितत्वात् ॥ ३७ ॥ (सि)**

---

१ .... कारित्वात् ख.

तत्राग्रयणे वाससि संदिह्यते—अन्वाहार्यस्थानापन्ने वाससि कर्तव्यः पाकः ? उत न कर्तव्यः ? इति ॥

तत्र चकारः अन्वाचयार्थः । वाससि प्राकृतान्वाहार्यधर्मवति प्रकृतिवत् पाको न कर्तव्यः । कुतः ? पाकस्यान्नकारितत्वात्—अदनीयस्यैव पाको न त्वनदनीयस्येति वाससि पाकलोप इत्यर्थः ॥ ३७ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पाकतदभावप्रभेदेन स्पष्टम् ॥ ९ ॥

(अभिघारणाधिकरणम्—१०)

## तथाभिघारणस्य ॥ ३८ ॥ (सि)

तत्राग्रयण एव वाससि वत्से च प्रकृत्यभिघारणं कर्तव्यं ? उत न कर्तव्यम् ? इति ॥

तत्र तथापदेन पूर्वाधिकरणसिद्धोऽर्थोऽतिदिश्यते । वासोवत्से अभिघारणस्यापि भक्ष्यद्रव्यस्वादिमगुणमज्जनकस्य निवृत्तिः । कुतः ? वाससि वत्से चाभिघार्यमाणे भक्ष्यद्रव्यगतस्वादिमगुणस्य कर्तुमशक्यत्वात् अभिघारणस्यापि निवृत्तेः । प्रकृतौ त्वन्वाहार्ये भक्ष्यद्रव्यगतस्वादिम्नः कर्तुं शक्यत्वादुपपद्यते, नात्र तथेति ॥

प्रयोजनन्त्वनुष्ठानरूपम्—प्रसिद्धतरम् ॥ १० ॥

(द्रव्यविध्यधिकरणम्—११)

## द्रव्यविधिसन्निधौ संख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥ (पू)

ज्योतिष्टोमे समाम्नायते—“गौश्चाश्वश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च माषाश्च तिलाश्च तस्य द्वादशशतं दक्षिणा” इति ॥

तत्र संदिह्यते—किमेकैकस्य गवादेर्द्रव्यस्य द्वादशाधिकशतसंख्यान्वयः ? उत एकस्य द्रव्यस्य ?

यदा चैकस्य—तदा किमनियमो यस्य कस्यचित् ? उत माषाणाम् ? अथ वा सर्वद्रव्यसमन्वयिनी संख्या ? उत एकजातीयस्य ?

यदा चक्रजातीयस्य, तदा किमनियमो यस्यकस्यचित्? उत पशूनाम्?

यदा च पशूनां, तदा किमनियमो येषां केषांचित्? उत गवाम्? इति च बहवः पक्षास्संभवन्ति ॥

तत्र इदं विषयवाक्यं छान्दोग्यस्थं चेत् कृत्वाचिन्ता। तत्र च तच्छब्दस्यानन्वयः। आध्वर्यवकाण्डे चेत्, गवादीनि षोडशद्रव्याणि पठित्वा तस्य द्वादशशतमित्याम्नातम्। इतराणि षड्द्रव्याणि केवलं सहपठितानि, तत्र तु तच्छब्दो ... ... कस्य ... ... तदेवाध्वर्यवकाण्डस्थमुदाहरणम्; तस्मिन्पक्षे न कृत्वाचिन्ता ॥

तत्र द्रव्यविधिसन्निधौ—द्रव्याणां—गवादीनां दक्षिणा ... विधिसंनिधौ ... ... ... ... ... ... गवादिसन्निधावित्यर्थः। तत्सन्निधौ समाम्नाता द्वादशशतसंख्या प्रतिद्रव्यं अन्वयहीना स्यात्। कुतो हेतोः? गुणत्वात्—द्रव्याणां विधीयमानानां प्राधान्येन संख्यायाः गुणत्वात् (प्रति) प्रधानश्च गुणान्वयस्य न्याय्यत्वात् गवादिषु सकलद्रव्येषु द्वादशशत संख्या स्यात्। माषान्तेषु द्रव्येषु संख्यान्वयस्स्यादित्यर्थः ॥ ३९ ॥

## समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥

तुना प्रतिद्रव्यं संख्यान्वयपक्षो व्यावर्त्यते। एकस्य—यस्यकस्यचित् द्रव्यस्य द्वादशशतसंख्या स्यात्। कुतो हेतोः? द्रव्याणां—दक्षिणान्वयत्वानुगुणानां षट्संख्यादीनामपि दक्षिणान्वयस्य समत्वात्—अरुणादीनां क्रयभावनायामन्वय इव द्वादशशतसंख्याया अपि दक्षिणान्वयित्वेन साक्षात् द्रव्यान्वयाभावात् एकद्रव्यान्वये च चरितार्थत्वेन शास्त्रस्य श्रुतिसंयोगात् न प्रतिद्रव्यं संख्यान्वयः। अतोऽत्र एकेन येन केनचिद्द्रव्येण संख्यान्वयः न प्रतिद्रव्यम्। प्रतिद्रव्यमन्वये च तस्येत्येकवचनं नोपपद्यते, बहुवचनान्तमेव स्यात्। तस्मादेकद्रव्यान्वयिनी द्वादशशतसंख्येति ॥ ४० ॥

## यस्य वा सन्निधाने स्याद्वाक्यतो ह्यभिसंबन्धात् ॥ ४१ ॥

---

...... संबन्धः—क. ख. अत्रापि व्याख्या तथैव।

वाकारस्तत्रसूत्रारूढशङ्काव्युदासार्थः । असूत्रितशङ्कोत्तरमेव सूत्रं 'पदोत्तर'शब्देनोच्यते । अनियमपक्षेऽपि यस्यकस्यचित् द्वादशशतसंख्येत्येतन्नोपपद्यते । कुतो हेतोः? यस्य द्रव्यस्य सन्निधाने समीपे अयं संख्याशब्दस्स्यात्, तस्य द्रव्यस्यैव संख्याशब्दः परिच्छेदकस्स्यात् । माषशब्दस्य चात्र संख्याशब्दः प्रत्यासन्नः । तेषामेव माषाणां इयं द्वादशशतसंख्या परिच्छेदिका स्यात् । हि हेतौ । वाक्यतः — वाक्ये, अनन्तरेण अव्यवहितेनैव अभिसंबन्धो न्याय्यः । नतु व्यवहितेन गवादिपदेनेत्यर्थः । तस्मात् माषा एव द्वादशशतं देयाः ॥ ४१ ॥

[1]असंयुक्तातु तुल्यवदितराभि[2]र्विधीयते तस्मात्सर्वाधिकारस्स्यात् ॥ ४२ ॥

तुना माषसंख्यासंबन्धपक्षो व्यावर्त्यते । माषा न संख्यया संबध्येरन् । माषासंयुक्ता द्वादशशतसंख्या, इतराभिर्गवादिदक्षिणाश्रुतिभिस्सह तुल्यवदेव तत्तुल्यैव विधीयते । परत उच्चार्यमाणस्य चशब्दस्य पूर्वशिष्टद्रव्यसमुच्चयद्योतकत्वात्, गवादिसहितानां माषाणामियं संख्या । तस्मात् संख्यायाः सर्वाधिकारस्स्यात् — सर्वपरिच्छेदकत्वं स्यादित्यर्थः ॥ ४२ ॥

असंयोगाद्विधिश्रुतावेकजाताधिकारस्स्यात् [3]श्रुत्यकोपनात्क्रतोः ॥ ४३ ॥

नैतदुपपद्यते — सर्वद्रव्यसमन्वयिनी संख्या, नैकद्रव्यान्वयिनी इति । कुतो हेतोः? विधिश्रुतौ—गोश्वेत्यादिना विहितदानविधिश्रुतौ, द्वादशशतसंख्यायास्सर्वद्रव्यसमन्वयित्वेन असंयोगात् — गवादिराशेरियं द्वादशशतसंख्येत्येवमाकारकप्रापकवाक्याभावात्, एकजाताधिकार एव स्यात् — जातं — जातिः, एकजातं एकजातिः । तदधिकारः तत्समन्वय एव संख्यायास्स्यात्, न गवादि-

---

१ असंयुक्तास्तु .... ख.

२ ... विधीयन्ते .... क. ख.

३ ... श्रुत्या कोपात्क्रतोः. क. ख.

द्रव्यसमुदाये । अत्रैवार्थे उपपत्त्यन्तरम् – एवं सति तस्य क्रतोः इयं द्वादशशत दक्षिणेति श्रुत्यकोपनात् – श्रुत्यव्याकोपनात् । तदयमर्थः – तस्य द्वादशशतं दक्षिणेत्यत्र, तस्य गवादिद्रव्यराशेः इयं द्वादशशतसंख्या इत्येवमन्वये सति, दक्षिणायाः द्रव्यसंबन्धो वाक्यीयः, क्रतुसंबन्धस्तु प्राकरणिक इति श्रुतिशब्द-लक्षितवाक्यीयान्वयव्याकोपस्स्यात् । ततः श्रुत्यव्याकोपनाय क्रतुसंबन्ध एव संख्याया वक्तव्यः, क्रतुसंबन्धे च सति केवलक्रतौ संख्याया अनन्वयात् द्रव्यद्वारा संख्यायास्समावेशो वक्तव्यः । स चाविशेषात् यत्किञ्चिद्गवाद्यन्यतम-द्रव्यविषय इति एकजातीयसमन्वय एव स्यात् द्वादशशतसंख्याया इत्यर्थः । ४३ ॥

## शब्दार्थश्चापि लोकवत् ॥ ४४ ॥

चकारः उक्तेऽर्थे युक्त्यन्तरसमुच्चयार्थः । लोकवत् – यथा लोके 'शत मभ्यज्जीयतां' इत्युक्ते अभ्यञ्जने एकजातीयानामेव शतसंख्यान्वयो भवतीति शब्दार्थः, न भिन्नजातीयानां क्षत्रियवैश्यशूद्राणाम् । तद्वदत्रापि संख्यान्वयः एकजातीयानामेव, न नानाजातीयानाम् । अथवा लौकिकशब्दवदेव वैदिकशब्दा-नामपि संकेतग्रहात्, शतमभ्यज्जीयतामित्युक्ते यथा लोके समानजातीयान्वय-प्रतीतिः तद्वदिति लोकवेदाधिकरणन्यायेन स एवार्थोऽनुसंधेयः ॥ ४४ ॥

## सा पशूनामुत्पत्तितो विभागात् ॥ ४५ ॥

एकजातीयद्रव्यसमन्वये संख्यायास्सिद्धे सति, सा च संख्या ऋत्वि-गानमनसमर्थानां पशूनामेव स्यात् । न तु व्रीह्यादीनामल्पायसा मानमना-समर्थानाम् । न हि द्वादशशतव्रीहिभिः कश्चिदानमेत् । कुतो हेतोः ? पशूनामेव उत्पत्तितो विभागात् – पञ्चगोभिः क्रीतो दासः, पञ्चभिरश्वैः क्रीतो रथः इति पशूनामुत्पत्तिविषयोत्पत्तिनामकाद्विभागात्, क्रयसाधनसमर्थानां पशूनामेव विभागात् – विशेषेण भागान्वयात्, आनमने च समर्थानां पशूनामेव संख्या एव ... ... ... ... ... ... त्यादीनाम् । ऋतपेयेतु सोमचमसस्य आनमना-समर्थस्यापि दक्षिणात्वं ... ... ... प्रामाण्यात् । न द्रव्यशक्तितः तस्य दक्षिणात्वम् । अतो गवादीनामेव संख्यान्वय इति ॥ ४५ ॥

अनियमोऽविशेषात् ॥ ४६ ॥

संख्यायाः पशुमात्रान्वये समधिगते, गवादीनां पशुत्वाविशेषात् यस्य कस्यचित्पशोरियं द्वादशशतसंख्या। अतोऽनियम एव स्यात्। न तु नियमोऽस्तीति ॥ ४६ ॥

भागित्वाद्वा गवां स्यात् ॥ ४७ ॥

वाकारः अनियमपक्षव्यावर्तकः। द्वादशशतसंख्या गवामेव स्यात् नत्वनियमेन गवाद्यन्यतमस्येति। कुतो हेतोः? भागित्वात्। अयमर्थः – 'न केसरिणो ददाति' 'नोभयतोदतः प्रतिगृह्णाति' इति श्रुत्या च 'नाश्वं विक्रीणाति' इति स्मृत्या च अश्वानां महोपकारभागिनामपि निषिद्धत्वात्, अश्वतरादीनां तु अतितुच्छत्वात् गवान्तु क्षीर दधि घृत तक्राद्युपकाररूप महोपकार भागित्वात्, महाऽऽयासवतां च ऋत्विजां महोपकारेणोपकर्तव्यत्वाच्च गवामेव द्वादशशतसंख्या स्यादिति नानियमः ॥ ४७ ॥

प्रत्ययात् ॥ ४८ ॥

इतश्च गवान्वयिन्येव संख्या। कुतो हेतोः? देयद्रव्येषु मध्ये गवामेव प्रथमप्रत्ययात्। गवामसंजातविरोधित्वात् प्रथमातिक्रमे कारणाभावात् प्रागुक्तहेतोश्च गवामेव सा संख्या स्यात् ॥ ४८ ॥

लिङ्गदर्शनाच्च ॥ ४९ ॥

क्वचिद्विकृतिविशेषे सहस्रं दक्षिणा "सहस्रं स्तोत्रीयाः, यावदस्य सहस्रस्य उत्तराधरा गौर्गत्रि प्रतिष्ठिता, तावदस्माल्लोकादसौ लोक" इति प्रकृतितो गवामेव सहस्रसंख्यान्वयदर्शनात् "तामेतां शतशीयां समामनन्ति, इडे रन्ते हव्ये काम्ये-चन्द्रज्योते अदिते सरस्वति महि विश्रुति एतानि ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं प्रब्रूतात्" इति अघ्न्याशब्दवाच्यानां गवामेव मुख्यत्वेन श्रुतावाम्नानाच्च लिङ्गात् गवामेव संख्यान्वयः। व्रीह्यादीनां — खार्यादिमानेनाभिधानात् द्वादशशतसंख्यैः मुष्टिमात्रप्रमाणैः व्रीह्यादिभिः आनन्त्यसिद्धेः, नानाविधोपकार

संपादनक्षमाणां गवामेव द्वादशशतसंख्या। अत्र च व्रीह्यादिद्रव्येषु परिमाणविशेषश्चिन्त्यः ॥ ४९ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—पक्षयोर्विंशदमेवातो न विलिख्यते ॥ ११ ॥

( विभागेन दानाधिकरणम्—१२ )

## तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ५० ॥ (सि)

गवान्वयिनी द्वादशशतसंख्येत्येतावत्समधिगतम् ॥

तत्किं दानमृत्विग्भ्यो विभज्याविभज्य वा प्रतिपादनीयम्? उत विभज्यैवाध्वर्य्वादिभ्यः प्रतिपाद्यम्? इति संदेहे सति :—

तत्र ज्योतिष्टोमे दक्षिणादानं विभागेन तत्तद्योग्यभागविभागेनैव स्यात्। न तु परिषदे देयं, परिषद्विभजत इति। कुतो हेतोः? प्रदानानाम्—स्वत्वपरित्याग परस्वत्वापादनात्मकानां पृथक्त्वात्—पृथक्पृथगध्वर्य्वादिसंप्रदानकत्वात् अविभज्य न देयम्। विभज्य दान एव तत्तद्भागस्य तत्त्वमुपपद्यते। अन्यथा विभागाभावे कस्य भागः केन संबध्येत? तस्माद्विभज्यैव दक्षिणा देया ॥ ५० ॥

## परिक्रयाच्च लोकवत् ॥ ५१ ॥

चकारो हेत्वन्तरसमुच्चयः। लोकवत्—लोक इव वैदिके कर्मण्यपि परिक्रयात्—तत्तत्कर्मायासयोग्यानमन द्रव्यप्रमाणपणनात् स्वामिनैव विभज्य तत्तद्भागविभागेन विशेषसंप्रदानकं कर्तव्यम्। एवञ्च सति दानशब्दार्थ उपपद्यते। तस्माद्विभज्यैव दानमिति ॥ ५१ ॥

## विभागञ्चापि दर्शयति ॥ ५२ ॥

चकारो लिङ्गप्रदर्शनार्थः। "तुथो वो विश्ववेदा विभजतु" इति, "कृष्णाजिनेन वित्तस्य कृष्णाजिनकशया गास्सर्वाः पृथक्कृत्य दक्षिणां ददाति" इति मन्त्रश्च दक्षिणाविभागं दर्शयति। तस्मात्परिषदस्संमुग्धाकारायाः संप्रदानत्वानुपपत्तेः मन्त्रेण विभागोपपादनाच्च विभज्यैव देयम् ॥ ५२ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – अविभज्यदान विभज्यदानाभ्यां विवृतम् ॥

(समाधिकरणम्–१३)

## समं [1]स्यादश्रुतत्वात् ॥ ५३ ॥ (पू)

तत्र ज्योतिष्टोमे समांशकं दानम्? उत विषमांशकम्? इति संदेहे सति:–

दक्षिणादानं समं स्यात्–समांशकं स्यात्। कुतः? अश्रुतत्वात्–कर्मायासतारतम्यनिमित्तदानविभागस्य वैध विभागस्य वा अश्रुतत्वात्–श्रुत्यनुपदिष्टत्वात्। तदयमर्थः–यत्र प्रयासतारतम्यं, तत्र तदनुसारिन्यूनाधिकदानम्। यत्र तु प्रयासतारतम्यं न विद्यते तत्र समांशकं दानम्। ... ... ... ... यथे तारतम्यं श्रुतम्, तत्र तारतम्येन दानम्। नात्र तादृशम्। तस्मात्सम विभाग इति ॥ ५३ ॥

## [2]अपिवा कर्मकृतं वैषम्यम् ॥ ५४ ॥

अपिवेति समांशदानं प्रतिषिद्ध्यते। कर्मकृतम्–कर्मायासतारतम्यकृतम् अंशवैषम्यं स्यात्। ततस्तारतम्येनैव देयद्रव्यवि ... ... ... अध्वर्य्वादीनाञ्च आयासतारतम्येन भिन्नाः। तस्मादसमांशं दानम्। यस्य महायासः, तस्य भृतिर्महती, यस्यायासो लघुः तस्याल्पीयसी भृतिः इति तत्तत्प्रयासानुरूपं दानम् ॥ ५४ ॥

## अतुल्यास्स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शना द्विशेषस्य तथाभ्युदये ॥ ५५ ॥ (सि)

कर्मायासकृतं तारतम्यं–इत्येतन्नोपपद्यते। कुतः? परिक्रये–ऋत्विक्परिक्रये कर्तव्ये विभागा अतुल्या एव स्युः इत्यत्र न विवादः। नैतत्तारतम्यं कर्मकृतम्। यतः कारणात् विधिश्रुतौ–सत्रदीक्षाविधिश्रुतौ, अर्धिनः इत्यादिना विषमाख्या अध्वर्य्वादीनां, ततः कारणात् कर्मणि–कर्मकृते वैषम्ये सतीत्यर्थः। तत्तदनुरूपत्वात् परिक्रयात् भागतारतम्यमिति नोपपद्यते।

---

१ समं स्यादश्रुतित्वात् क. ख. २ अपि वा कर्मवैषम्यात्. क. ख.

शब्दकृतवैषम्य एव समाख्या उपपद्यते नान्यथा। विधिश्रुताविल्युक्तमर्थं सूत्रावयवेन विवृणोति – अभ्युदये – फले - ऋद्धिफते – ऋद्धिकामास्सत्रमासीरन् इति विहितसत्रद्वादशाहे। "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं, ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति – ब्राह्मणाच्छंसिनं ब्रह्मणः – प्रस्तोतारमुद्गातुः मैत्रावरुणं होतुः, ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति – आग्नीध्रं ब्रह्मणः – प्रतिहर्तारमुद्गातुः – अच्छावाकं होतुः, ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति – पोतारं ब्रह्मणः – सुब्रह्मण्य- मुद्गातुः – ग्रावस्तुतं होतुः – ततस्तमन्यो ह्यदीक्षितो दीक्षयति ब्रह्मचारी वा आचार्य प्रेषितः" इति ऋत्विग्भागतारतम्य हेतुभूतार्ध्यादिनाम विशेष- दर्शनात्। इदञ्च दीक्षाविधिदर्शनम्, तथा – अर्ध्यादीनां प्रकृतौ ज्योतिष्टोमे सिद्धवन्निर्देश एवोपपद्यते, नान्यथा। तस्मात् श्रुतिकृतमेव दानवैषम्यं न कर्मकृतमिति। कर्मकृतमपि वैषम्य मभ्युच्चीयते श्रुतिकृतेन. तदत्र संग्रहश्लोकः–

सोमे दानं तारतम्येन सिद्धं कर्मायासायत्तमे ... ... तन्न।
अध्वर्य्वाद्ये सत्रदीक्षाविधाने वाक्ये ह्यर्ध्याद्याख्यया श्रौतमेतत् ॥

अंशप्रकारेऽपि च याज्ञिकेभ्यो विज्ञेय इत्याह च तन्त्ररत्ने।
तथात्वहं वच्मि च याज्ञिकानां विभागरीतिं सुखबोधनाय ॥

देयद्रव्यं पञ्चविंशतिधा विभज्य अध्वर्य्वादिभ्यो गणाध्यक्षेभ्यस्त्रींस्त्रीन् भागानिति द्वादश। अर्धिभ्यस्सार्धैकभाग ... ... ... ... इति चतुर्णामपि षड्भागाः। तृतीयिभ्यः एकैक इति चत्वारः। पादिभ्यः पृथक् पृथक् त्रिपादिति त्रयो भागा इति पञ्चविंशति भागानामपि व्ययः ॥ ५५ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – स्पष्टमेव भेदेन ॥ १३ ॥

( धेन्वधिकरणम् – १४ )

तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात्सामान्यात्त- द्विकारस्स्याद्यथेष्टिर्गुणशब्देन ॥ ५६ ॥ (१)

क्वचिदाम्नायते—'अथैष भूर्वैश्वदेवस्त्रिवृदेव तस्य विश्ववत्यस्स्तोत्रीया धेनुर्दक्षिणा" इति ।

तत्र सन्दिह्यते—किमियं धेनुः दक्षिणा सजातीय प्राकृत गोमात्र निवर्तिका ? ततश्च प्रकृतौ गवादीनां पृथक् पृथक् दक्षिणात्वम् ? उत गवादि-सकल दक्षिणाद्रव्य निवर्तिका ? ततः प्रकृतौ समुदित दाक्षिण्यम् ? इति ॥

तत्र तस्य धेनुरिति—तस्य धेनुर्दक्षिणेत्यत्र श्रूयमाणा धेनुः ज्योतिष्टौमिकीनां गवामेव निवर्तिका स्यात्, नेतरेषां मापान्तानाम् । कुतो हेतोः ? प्रकृतौ ज्योतिष्टोमे गवादीनां, गौर्दक्षिणा—अश्वो दक्षिणा—इत्येवंरूपतया विभक्तत्वेन चोदितत्वात् । धेनोश्च सामान्यात् गोसामान्यात् वयोऽवस्थाविशेषविशिष्टत्वेऽपि गोजातीयत्वात् तद्विकारः—गोव्यावृत्तिरेव स्यात, धेनुत्वेन प्रकृतिलिङ्गेन संयोगात्, धेन्वा निवर्त्यन्ते गावो नान्यत् द्रव्यान्तरम् । तत्र धेनुत्वरूपप्रकृतिलिङ्गसंयोगात् प्राकृतकार्यनिवृत्तौ दृष्टान्तः—यथेष्टिरिति । यथा सौर्यं चरुं निर्वपेदित्यत्र सौर्येष्टिश्रुतप्रकृतिलिङ्ग निर्वपणरूप गुणशब्देन प्राकृताग्नेयनिर्वापः प्रत्यभिज्ञायत इति सौर्यनिर्वापेण प्राकृतनिर्वापो विक्रियते, तद्वत् प्रकृतिलिङ्गसंयोगाद्धेतोः धेनुर्गवामेव स्मारिका, ततश्च तन्मात्रस्य निवर्तिका ॥ ५६ ॥

**सर्वस्य वा क्रतुसंयोगादे[1]कत्वाद्दक्षिणार्थस्य गुणानाञ्चै-[2]कार्थत्वात् अर्थे विकृतौ श्रुतिभूतं स्यात् [3]समवायाद्धि कर्मभिः ॥ ५७ ॥ (सि)**

वाशब्दः प्रागुक्तं पृथक्पृथग्दक्षिणात्वमूलक गोमात्रनिवृत्तिपक्षं व्यावर्तयति । सर्वस्यैव गवादिद्रव्यस्य । 'तस्य द्वादशशतं दक्षिणा" इति क्रतुसंयोगात्, क्रतिगुत्साहानमनरूप दक्षिणार्थस्य—दक्षिणाकार्यस्य, एकत्वात्—गुणानां—दक्षिणां प्रति गुणभूतानां, एकार्थत्वात्—एकदक्षिणा-

१ एकत्वम्—क. ख. २ कार्यैकत्वात्—क. ख.

३ तस्मादिति अधिकमत्र, क. ख.

कार्यार्थत्वात्, विकृतावर्थे-विकृत्यर्थे, श्रुतिभूतं-तस्य धेनुर्दक्षिणेति श्रुत्युपदिष्टं धेनुकार्यमेव स्यात्, नतु गोव्यतिरिक्त द्रव्यान्तरानुप्रवेशः। हिर्हेतौ। समवायात् - धेन्वा समवायात् - प्राकृतगवादिदक्षिणा कार्यानमनसाधन-धेनुदक्षिणया संबन्धात् ऋत्विजः कर्मणे संपत्स्यन्ते। अतः अत्र दक्षिणाशब्द-रूपप्रकृतिलिङ्गसंयोगात् प्राकृती दक्षिणा धेन्वा विक्रियते; न गोमात्रमित्यर्थः॥

[1]चोदनानामाश्रयाल्लिङ्गेन नियमस्स्यात्॥ ५८॥

यदुक्तं सौर्यनिर्वापेण प्राकृताग्नेयनिर्वापप्रत्यभिज्ञानवत् प्राकृतगोद्रव्यस्य धेन्वा प्रत्यभिज्ञानात् तन्मात्रस्य निवर्तिका धेनुरिति, तत्परिहारार्थमिदं सूत्रम्। चोदनानाम् - प्राकृताग्नेयोपांशुयाजाग्नीषोमीयचोदनानाम्, आग्नेयादि धर्माणां अविशेषेण सौर्यादि विकृत्याश्रयात् तस्य कर्मणः किंविध्यन्त इत्यपेक्षायां, एकदेवतातद्धितलिङ्गेन आग्नेयविध्यन्तस्यैव सौर्यादिष्वेकदेवताकेषु नियम-स्स्यात्। अत्र तु गवादि सकल द्रव्यस्य आनमनरूपैक कार्य समावेशेन कार्य-पृथक्त्वाभावात् निर्वापवैषम्यम्। ततश्च गवादि सकलद्रव्यनिवृत्तिर्धेन्वेति। ५८॥

प्रयोजनन्त्वनुष्ठानरूपम् - विशदतरम्। १४॥

(पञ्चधेन्वधिकरणम् - १५)

[2]एकां पञ्चेति धेनुवत्॥ ५९॥ (पू)

प्रायश्चित्तकाण्डे श्रूयते - 'यस्य सोममपहरेयुः एकां गां दक्षिणां दद्यात्, [3]अपिदग्धे हविर्धाने पञ्च गाः' इति।

अत्रेयं विचिकित्सा - किमेकापञ्चगावः कृत्स्नदाक्षिण्यनिवर्तिकाः? उत गोमात्रस्य? इति।

तत्र, एकां गामित्यत्रापि एका गौः पञ्च गावश्च प्राकृतद्रव्यसमुदायस्य निवर्तिकाः नतु गोमात्रस्य। तत्र दृष्टान्तः धेनुवत् इति। यथा तस्य

---

१ चोदनानामनाश्रयात् ... क. ख.

२ एकापञ्चेति .... .... ख.    ३ अभिदग्धे ... क. ख.

धेनुर्दक्षिणेत्यत्र धेनुस्सजातीयगोमात्रस्य न निवर्तिका, किन्तु प्रकृतिलिङ्ग-संयोगादिना कृत्स्नक्रतुदाक्षिण्यस्य निवर्तिका – तद्वदिति ॥ ५९ ॥

( त्रिवत्साधिकरणम् – १६ )

## त्रिवत्सश्च ॥ ६० ॥ ( सि )

समानन्यायत्वात् एकाधिकरणत्वसिद्ध्यर्थं अन्तरागर्भिणीन्यायेन त्रिवत्सोदाहरणम् ।

साद्यस्के श्रूयते – ‘साण्डस्त्रिवत्सस्सोमक्रयणः स्पर्धमानानां’ इति ।

तत्रापि किं साण्डस्त्रिवत्सः क्रयसाधन ... प्राकृताजादि सकलक्रय-साधनद्रव्याणां निवर्तकः ? उत ऋषभमात्रस्य ? इति संदेहे सति :–

त्रिवत्सश्च कृत्स्नक्रयसाधनानां निवर्तकः क्रीणात्याख्यातेन अभि-संबन्धात् । साद्यस्के सोमक्रयश्च साण्डेन कृत इति प्राकृतानां चोदकप्राप्तानां क्रयसाधनानां निवृत्तिः ॥

## तथा च लिङ्गदर्शनम् ॥ ६१ ॥

लिङ्गदर्शनञ्च प्राकृतक्रयसाधनकात्स्न्र्यस्य निवृत्तिमेव दर्शयति । किन्त-लिङ्गम् ? साद्यस्कान्तरे – “स्त्री गौ स्सोमक्रयणी, व्यावृत्ता ह्येषां स्पर्धा” इति द्वितीय साद्यस्के अस्पर्धमानस्य सोमक्रयणीगौः, प्रथमसाद्यस्के स्पर्धमानस्य त्रिवत्सस्साण्ड स्सोमक्रयणः इति स्पर्धानिमित्तकत्रिवत्सानुवादेन ... ... ... सोमक्रयण्यां द्वितीये स्पर्धानिवृत्तिसंसूचनात् क्रयसाधनद्रव्यान्तरसमवाये च स्त्री गोस्पर्धाव्यावृत्तेरनुपपत्तेः प्राकृतक्रयणीय धेनु सुवर्णादीनां (समस्तानां) निवृत्तिरिति ॥ ६१ ॥

अन्तरागर्भिणीन्यायेनेदं फलितं–एका–पञ्चगावः कृत्स्नक्रतुदाक्षिण्यस्य निवर्तिकाः त्रिवत्सश्च कृत्स्न क्रयसाधनानां निवर्तक इति ॥

## एके तु श्रुतिभूतत्वात्संख्यया गवां लिङ्गविशेषेण ॥६२॥ ( सि )

अन्तरागर्भिणीन्यायप्रचारविलंबितात् प्रकृतेकापञ्चेति सूत्रोपक्षेपात् उत्तरमिदं सूत्रम् ॥

तुना कृत्स्नक्रतुदाक्षिण्यनिवृत्तिपक्षो व्यावर्त्यते। न गवाद्यर्थास्सर्वे निवर्तन्ते, एकेतु – गाव एव निवर्तन्ते। कुतो हेतोः? संख्यया – एकादिकया गवां संबन्धस्य श्रुतिभूतत्वात्–दक्षिणासंबन्धे संख्याया गवा व्यवधानात् संख्याया एकादिकायाः गोसंबन्धः प्रत्यक्ष इत्यर्थः। व्यवहिताव्यवहितयोश्च अव्यवहितं बलीयः इति न्यायेन प्रत्यक्ष संबन्ध एव बलवान्। इतरथाहि एकां गां दद्यात् अश्वादीन्न इति अश्वादिनिवृत्तौ लक्षणा स्यात् गोपदस्य। तस्मात् लिङ्गविशेषेण – सामर्थ्यविशेषेण। अव्यवहितसंबन्धरूप सामर्थ्यविशेषेण संख्या गवैवान्वेति, नतु दक्षिणया। दक्षिणान्वये च गोपदं अश्वादिनिवृत्तौ लक्षणावृत्तं स्यात्। तस्मात्प्रकृतौ गोनिष्ठा द्वादशशत संख्या एकादिसंख्यया निवार्यत इति सर्वं चतुरस्रम्॥ ६२॥

प्रयोजनन्त्वनुष्ठानरूपम् – कृत्स्ननिवृत्त्यनिवृत्तिभेदेन विशदम्। १६॥

(प्राकाशाधिकरणम्–१७)

## [1]प्राकाशौ च तथेति चेत्॥ ६३॥ (पू)

अश्वमेधे श्रूयते – "प्राकाशावध्वर्यवे ददाति" इति॥

तत्र संदिह्यते–किं प्राकाशौ कृत्स्नक्रतुदाक्षिण्यस्य निवर्तकौ, ततश्चाध्वर्युपदं अध्वरयोगनिमित्तं सर्वर्त्विक्साधारणम्, ततश्च सर्वभागनिवृत्तिः? उत अध्वर्युपदं लब्धात्मकरूपम्। ततश्चाध्वर्युभागमात्रनिवर्तकौ प्राकाशौ? इति॥

तत्र, तस्य धेनुरित्यत्र कृत्स्नदाक्षिण्यस्य निवर्तिका धेनुरिति पश्यसि चेत् इति प्रपूर्वाधिकरणेन संबन्ध ... ... प्राकाशौ च ददातिना संबद्धौ प्राकृतकृत्स्नक्रतुदाक्षिण्यस्य निवर्तकौ। अध्वर्युपदश्च प्रागुक्तरीत्या सर्वर्त्विक्साधारणम्–इति नास्त्यध्वर्युपदे लक्षणादोषः तस्मात् कृत्स्नक्रतुदाक्षिण्यनिवर्तकौ प्राकाशाविति॥ ६३॥

---

१ चकारो नास्ति क. ख.

[1]अपित्ववयवार्थवत्वा द्विभक्तप्रकृतित्वाच्च[2]गुणेदन्ताविकार-स्स्यात् ॥ ६४ ॥ (सि)

अपि तुभ्यां कृत्स्ननिवृत्तिपक्षो व्यावर्त्यते? कुतः? अवयवार्थ-वत्त्वात्–भागेनावयवार्थत्वात्, भागो देशार्थत्वात् अन्यतमभागप्रत्याम्ना-नत्वात् विभक्तप्रकृतित्त्वाच्च–प्रकृतौ भागानां, अध्वर्युभागो ब्रह्मभाग-इत्यादिना प्र ... ... ... ... क्तत्वाच्च गुणेदन्ताविकारस्स्यात्–गुणस्य–अध्वर्य्वादिभागरूपप्राकृतगुणस्य, इदन्तया–प्राकाशतया, विकारस्स्यात्–प्राकाशाभ्यामेवाध्वर्योरानतिः कर्तव्येति प्राकाशाभ्यां प्राकृतभागो विक्रियते, न तु कृत्स्नदक्षिणानिवृत्तिः। "लब्धात्मिका रूढिर्योगमपहरति" इति न्यायेन अध्वर्युशब्दस्य अध्वर्युकाण्डकर्मकारिणि ऋत्विग्विशेषे रूढत्वात्, तत्त्वेनानुपपत्तेः न कृत्स्ननिवृत्तिः। सकलदोषरिजिहीर्षुणा भाष्यकारेण शबरस्वामिना अध्वर्यु-संप्रदानकप्राकाशदानविशिष्टविधिरिति तदुक्तिश्च प्रौढिवादमात्रम्, तत्तत्प्रकारेणा-प्युपपत्तेरिति ॥ ६४ ॥

प्रयोजनन्त्वनुष्ठानरूपम्–अतिविशदम् ॥ १७ ॥

(अश्वदक्षिणाधिकरणम्–१८)

धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥ (सि)

अस्त्युपहव्योऽनिरुक्तः–तेनाभिशस्यमानं याजयेत्, अग्निष्टोमो यज्ञः पञ्चदशस्तोमो रथन्तरसामा, अश्वः श्वेतो दक्षिणा, उपहव्योऽनिरुक्तः, तेनाभि-शस्यमानं याजयेत्, उक्थ्यो यज्ञः, सप्तदशस्तोमो बृहत्पृष्ठोऽश्वः श्यावो रुक्म-ललाटो दक्षिणा" इति। तत्रापरमिदं श्रूयते–"सह्यनिरुक्तः स ब्रह्मणे देयः" इति ॥

---

१ .... त्ववयवार्थत्वात् ... क. ख.

२ चकारो नास्ति ... क. ख.

तत्र किमनिरुक्तसङ्ख्याख्याश्वदानं ब्रह्मभागमात्रं निवर्तयेत्? उत कृत्स्नं क्रतुदाक्षिण्यम्? इति संशये सति—

"अश्वः श्वेतो दक्षिणा" इत्यत्र श्रूयमाणा अश्वदक्षिणा धेनुवत्—प्रागुक्तधेनुदक्षिणावत् कृत्स्नक्रतुदाक्षिण्यनिवर्तिका स्यात्, प्रकृतिलिङ्गदक्षिणा शब्दसंयोगात्। "अश्वो दक्षिणे"त्यनेन प्राकृती कृत्स्ना दक्षिणा निवर्त्यते। कृत्स्नदक्षिणानिवर्तनपर मिदं वाक्यं "सब्रह्मणे" इति। "स ह्यनिरुक्तस्स-ब्रह्मणे देयः" इति वाक्यशात् ब्रह्मोपलक्षित सकल पुरुषापनयः क्रियते। "स ब्रह्मण" इति वाक्यं दक्षिणायाः पुरुषापनयपरम्। न तु "स्रज मुद्गाते" इत्यादिवत् तद्भागमात्रनिवर्तकम्। किन्तु "सर्वं ब्रह्मणे परिहरती"त्यत्र यथा हिरण्यस्य कृत्स्न क्रतु दाक्षिण्य निवर्तकत्वम्, तद्वदत्रापि कृत्स्ननिवर्तकम्। न तु ब्रह्मण इति कर्तृसंबन्धात् ब्रह्मभागार्थत्वात्, प्रकृतौ भागानां विभक्तत्वात् तद्भागमात्रस्यैव विकारः इत्यादि चोद्यं पूर्वपक्षयुक्तं चमत्काराय ॥ ६५ ॥

❀

## अपि वा तदधिकाराद्धिरण्यवद्विकारस्स्यात् ॥ ६६ ॥

"स्रजमुद्गाते" इत्यादिवत् अध्वर्युभागमात्रस्य निवर्तकं, न कृत्स्न-भागस्य" इति यदुक्तं तत्परिहारार्थमिदं सूत्रम्—अपिवेत्येवकारार्थे। तदधि-कारात्—अश्वो दक्षिणेति दक्षिणाधिकारात्—प्रकृतिलिङ्ग दक्षिणाशब्दसंयोगात्, हिरण्यवत्—'सर्वं हिरण्यं ब्रह्मणे परिहरति' इत्यत्र हिरण्यस्य कृत्स्नभाग-निवर्तकत्ववत् विकारस्स्यात्—कृत्स्नक्रतुदक्षिणाविकारः स्यात्, नतु तद्भाग-मात्रस्य। ६६ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—विशदतरम् ॥ १८ ॥

---

१ एके तु कर्तृसंयोगात् स्रग्वत्तस्य लिङ्गविशेषेण—इत्यत्राधिकं सूत्रमेकं, तद्व्याख्याच. क. ख.

(सोमचमसाधिकरणम् –१९)

## तथाच सोमचमसः ॥ ६७ ॥ (पू)

ऋतपेये श्रूयते–'औदुंबरस्सोमचमसो दक्षिणा, स प्रियाय सगोत्राय ब्रह्मणे देयः' इति।

तत्र संदेहः–किं "स ब्रह्मण – इति कर्तुरुपादानात् ब्रह्मभागमात्रनिवर्तकस्सोमचमसः? उत इतरर्त्विग्भागानामपि व्यावर्तकः? इति।

तत्र सोमचमसश्च तथा–'स्रजमुद्गात्रे' इत्यत्र यथा उद्गातृभागमात्र निवर्तिका स्रक्, नान्यभागानाम्, एवं सोमचमसोऽपि ब्रह्मभागमात्रस्य निवर्तक- इत्यर्थः ॥ ६७ ॥

## सर्वविकारो वा क्रत्वर्थे [1]पशूनां प्रतिषेधात् ॥ ६८ ॥ (सि)

सर्वविकारो वा–सर्वविकार एव स्यात्–सर्वक्रतुदाक्षिण्यनिवृत्तिरेव स्यात्, न ब्रह्मभागमात्रस्य। कुतो हेतोः? क्रत्वर्थे पशूनां प्रतिषेधात्– ऋतपेय एव श्रुतम्–"ऋतं वै सोमोऽनृतं पशवः, यः पशून्दद्यात् सोऽनृतं कुर्यात्, औदुम्बरस्सोमचमसो दक्षिणा" इति क्रत्वर्थे–क्रत्वर्थानमनार्थदानमात्रे पशूनां प्रतिषेधात् कृत्स्नदाक्षिण्यनिवृत्तिरेव नान्यथा ॥ ६८ ॥

## ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ६९ ॥

"यः पशून्दद्या' दिति पशुप्रतिषेधलिङ्गेन कृत्स्ननिवृत्तिं पश्यसि चेत्; तत्प्रतिषेधनं ब्रह्मदानेऽप्यविशिष्टम्। "ब्रह्मणे सोमचमसो देयः, यः पशून् दद्यात् ... ... ... ... ... ति ब्रह्मविषयत्वेनाप्युपपद्यते। अतस्त्वदुक्तप्रकारेण न कृत्स्ननिवृत्तिः ॥ ६९ ॥

## उत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थस्स दक्षिणानां स्यात् ॥ ७० ॥

---

१ ... प्रतिषेधात्पशूनाम् क. ख.

नैतदुपपद्यते ब्रह्मभागविषयत्वेनापि ... ... ... ... ... **उत्सर्गस्य**—सोमचमसदानस्य, ऋत्वर्थत्वात्—सोमचमसो दक्षिणेति दक्षिणाशब्दप्रकृति ... ... ... .... ... ... संवद्धसर्वर्त्विगानमनार्थत्वात् कृत्स्नदक्षिणानिवृत्तिः। तत्र "यदि पशून् दद्यात्" इति सर्वविषयत्वेन प्रतिषिद्धस्य पशुदानस्य ब्रह्मविषय ... .... ... ... ... ... ... उपपत्तिरस्तीति **कर्म**—अन्येभ्यो ब्रह्मव्यतिरिक्तेभ्यः पशुदानकर्म स्यात्। तदा दक्षिणाशब्दस्सर्वविषयी दक्षिणावयव ब्रह्मभागे निवेश्यमानस्सन् ... ... ... ... ... ... ... लाक्षणिकः स्यात्। न च संभवति मुख्ये दक्षिणाशब्दार्थे गौणस्य न्याय्यता। सोमचमसस्य च सर्वर्त्विगानमनदक्षिणाशब्दप्रत्यभिज्ञानात् प्रयोजनम्। अतस्सोमचमसरूपोऽर्थश्चमसरूपं द्रव्यं, दक्षिणानां—प्राकृतीनां दक्षिणान्वयिगवादीनां, व्यावर्तकं स्यात्—सोमचमस एक एव सर्वर्त्विगानमनार्थ इति गवादीनां निवृत्तिः॥

प्रयोजनन्त्वनुष्ठानरूपम्—अतिविशदमिति न विलिख्यते॥ १९॥

(प्रयोजनाधिकरणम्—२०)

## यदितु ब्रह्मणस्तदूनं तद्विकारस्स्यात्॥ ७१॥

## सर्वं वा पुरुषापनया त्तासां क्रतुप्रधानत्वात्॥ ७२॥

पूर्वाधिकरणप्रयोजन वर्णनार्थमिदं सूत्रं द्रष्टव्यम्। तुना प्रयोजनं वर्ण्यते। यदि सोमचमसो ब्रह्मण एव स्यात्, तदूनं—ब्रह्मभागव्यतिरिक्तं तत्प्राकृतं दक्षिणादानमिति कृत्वा ब्रह्मभागस्यैव विकारस्स्यात्॥

अथवा —

यदि तु ब्रह्मणः यः पशून् ददातीति प्रतिषेधात् तत्—प्राकृतदक्षिणादानं, ऊनं, तद्विकार एव—ब्रह्मभागविकार एव सोमचमसस्स्यात्। ब्रह्मभागः प्राकृतः सोमचमसेन व्यावर्त्यते नान्यभाग इति पूर्वपक्षप्रयोजनम्॥ ७२॥

**सर्वं वा**—इत्यादि सिद्धान्तप्रयोजनपरम्। वाकारः सिद्धान्तप्रयोजनकथनार्थः। यद्यश्वो दक्षिणेत्यनेन सर्वं दाक्षिण्यं निवर्त्यते, सर्वभागनिवृत्तौ च,

स ब्रह्मणे देय इत्यनेन वाक्यान्तरेण पुरुषापनयात् , तासां – दक्षिणासाधनगवादिव्यक्तीनां दक्षिणान्वयिनीनां क्रतुप्रधानत्वात् – क्रतुस्वरूपनिर्वाहकसर्वर्त्विगानमनार्थत्वादित्यर्थः । सिद्धान्ते – सोमचमसः सर्वभागनिवर्तक इत्यर्थः । इतरानमनन्तु लौकिकोपायेनेति ॥ ७२ ॥

अधिकरणान्तरं वा :—

## यदि तु ब्रह्मणस्तदूनं तद्विकारस्स्यात् ॥ (पू)

तत्र पूर्वभागेन पूर्वपक्षः । अपरभागेन सिद्धान्त इति ।

तत्र संदिह्यते – सोमचमसः किं ब्रह्मण एव भागः इतरेषान्तु प्राकृतो भागः ? उत कृत्स्नभागव्यावर्तकः ? इति ॥

तत्र सोमचमसो दक्षिणेत्येतद्वाक्यं असत्कृत्वा चिन्त्यते –

यदि "स ब्रह्मणे देयः" इति सोमचमसो ब्रह्मण एव स्यात्, तत्प्राकृतदक्षिणादानं तदूनं–ब्रह्मभागन्यूनं इति कृत्वा ब्रह्मभागस्यैव विकारस्स्यात् । नत्वितरभागव्यावर्तकः ।

## सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ (सि)

इदञ्च सूत्रं प्रयोजनानुवर्णनपक्षे व्याख्यातमिति न पुनर्व्याख्यायते । अत्र च प्रयोजनं न वर्णनीयम् । न हि प्रयोजनाधिकरणे प्रयोजनं भवत्यनुष्ठानरूपम् ॥

( यजुर्युक्ताधिकरणम् – २१ )

## यजुर्युक्ते त्वध्वर्योर्दक्षिणाविकारस्स्यात् ॥ ७३ ॥ (पू)

वाजपेये समाम्नायते – " यजुर्युक्तं रथमध्वर्यवे ददाति " इति ॥

तत्र संदिह्यते–किं यजुर्युक्तो रथः अध्वर्युभागस्य निवर्तकः ? उत ऋगादियुक्तानामपि रथानां पक्षे प्राप्तौ यजुर्युक्तो रथोऽध्वर्योरेवेति नियमः क्रियते ? इति ॥

तत्र तुः एवकारार्थे। यजुर्युक्ते रथे श्रूयमाणे ब्रूमः – अध्वर्योर्या दक्षिणा – दक्षिणाभाग इत्यर्थः, तद्विकार एव स्यात् – अध्वर्युभागव्यावर्तक एव स्यात्। अध्वर्योः केवलं रथ एव स्यादिति चोदकप्राप्तद्रव्यनिवृत्तिः ॥ ७३ ॥

अपिवा श्रुतिभूतत्वात्सर्वासां तस्य भागो [1]नियम्येत ॥
॥ ७४ ॥ (सि)

अपि वेति अध्वर्युभागव्यावृत्तिपक्षो निवार्यते। 'सप्तदश शकटानि, सप्तदश रथाः, सप्तदश निष्काः, सप्तदश दास्यः, सप्तदश वासांसि, सप्तदश च युग्मानि[2], सप्तदश वयसो वयस्यश्च सप्तदश' इति सर्वासां शकटादि दक्षिणानां श्रुतिभूतत्वात् – श्रुत्युपात्तत्वात्, अयमस्येति च भागानिर्देशात् ऋगादि-युक्तानामपि रथानां पक्षे प्राप्तौ, तस्य – अध्वर्योः यजुर्युक्त एव रथो दक्षिणेति-नियम्यते। एवञ्च सति, अध्वर्योश्चोदकप्राप्तदक्षिणाभागस्य न निवृत्तिरिति ॥

प्रयोजनन्तु कोटिभ्शामेव व्याख्यातप्रायम् ॥ २१ ॥

इति जैमिनिसूत्रवृत्तौ फलवत्यां दशमस्याध्यायस्य तृतीयः पादः

ओम। ओम। ओम्। ओम्

स्वप्नवाराह्यै नमः

अद्वैताश्रमयतीन्द्रेभ्यो नमः .

---

१ .... नियम्यते. क. ख.

२ सप्तदश गवां शतानि-इत्यत्र योज्यम्.

## दशमस्याध्यायस्य चतुर्थः पादः

(प्रकृतिलिङ्गसंयोगाधिकरणम् –१)

[1]प्रकृतिलिङ्ग संयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ ॥ १ ॥ (सि)

अग्नौ श्रूयते नक्षत्रेष्टिः – "अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्, सोऽत्र जुहोति, अग्नये स्वाहा कृत्तिकाभ्यस्स्वाहा, अंबायै स्वाहा दुलायै स्वाहा, नितत्न्यै स्वाहा, अभ्रयन्त्यै स्वाहा मेघयन्त्यै स्वाहा, वर्षयन्त्यै स्वाहा. चुपुणीकायै स्वाहेति" इति। सन्ति च प्राकृता दर्शपूर्णमासादयो नारिष्ठा होमाः – नारिष्ठान् जुहोति" इति।

तथा श्येने श्रूयते–'लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति' इति। सन्ति तु प्रकृतौ, 'निवीतं मनुष्याणां प्राचीनावीतं पितॄणा मुपवीतं देवानमुपव्ययते देवलक्ष्ममेव तत्कुरुते' इति।

तथा पृष्ठ्ये षडहे श्रूयते– 'मध्वाशयेत् घृतं वा' इति। [[2]अस्तितु प्रकृतौ, 'पयो व्रतं ब्राह्मणस्य, यवागूराजन्यस्य, आमिक्षा वैश्यस्य" इति ॥]

तत्रैषु त्रिषु स्थलेषु संदेहः – किं नक्षत्रेष्ट्युपहोमेन प्राकृतनारिष्ठहोमानां निवृत्तिः? उत समुच्चयः?

श्येननिवीतेन च किं प्राकृतोपवीतनिवृत्तिः? आहोस्वित्समुच्चयः?

तथा पृष्ठ्यषाडहिकेन घृताशनेन किं प्राकृतपयोव्रतनिवृत्तिः? उत समुच्चयः? इति।

तत्र उपहोमनिवीतघृताशनैः प्राकृतनारिष्ठहोमोपवीतपयोव्रतानां क्रमेणानिवृत्तिः–समुच्चय एव स्यात, न तु जुहोतिना, प्रचारेण, अशनेन च

---

१ प्रकृतिलिङ्गासंयोगात ... क. ख. पाठः साधुः।

२ धनुश्चिह्नान्तर्गतो भागो मातृकायां नास्ति, अस्माभिर्योजितः।

प्रकृतिलिङ्गेन अनन्तरपादोक्तन्यायेन प्राकृतानां बाधः। किन्तु प्रकृतिलिङ्ग-संयोगाद्व्यावृत्तिः। प्रकृतिलिङ्गसंयोगस्तत्रैव स्यात् प्राकृतव्यावर्तकः, यत्र विकृतौ किञ्चित् प्राकृतानुवादेन मन्त्रान्तरादिविधानं भवति, [[1]तत्रैव प्रकृति-लिङ्गसंयोगः प्राकृतव्यावर्तको भवति,] यथा—धेनुर्दक्षिणेत्यादौ प्राकृतवरवादे-र्व्यावृत्तिः। इह तु, उपहोमाञ्जुहोति, सोऽत्र जुहोति— अग्नये स्वाहा ...” इति वाक्याभ्यां होमकर्ममन्त्रयोर्व्यवधानात् न यत्क्रियते ... ... ... ... कृता न चानेन प्रकृतिलिङ्गसंयोगः। अत ईदृशं क्रतुं कृतौ नक्षत्रेष्ट्याद्यन्तसंस्कारं अपूर्वकर्म स्यात्। होममन्त्रयोरिह पृथग्विधानात् प्रकृतिलिङ्गसंयोगहेतूनाञ्चा-भावात् नैककार्यकरत्वम्। यतः प्राकृतव्यावृत्तिः स्यात्। प्रकृतिलिङ्गसंयोगहेतवश्च नाना। प्रत्यक्षदर्शनम्, अभावविधानम्, विकारः, स्वशब्दः, प्रतिषेधः इति। क्रमेण चोदाहरणानि—नैवारश्चरुर्भवतीति प्रत्यक्षदर्शनस्य। “जुहूर्वाव एतर्हि वाग्भवति, यर्हि पृष्ठ्यस्सन्तिष्ठते, न बहु वदेत् नान्यं पश्येत् नान्यस्मै प्रब्रूयात् मध्वाशयेत् घृतं वा” इति प्राकृतपयोव्रताभावे विधानस्य। “नैर्ऋत-श्चरुर्नखावपूतानां” इति विकारस्य। “परिधौ पशुं नियुञ्जीत” इति स्वशब्दस्य। “न गिरागिरेति ब्रूयादात्मानमेव तदुद्गातोद्गिरेत् ऐरं कृत्वोद्गेयम्” इति प्रतिषेधस्य। अन्येन वा येन केनचिदिति षष्ठोदाहरणं प्रौढिवादेन। प्रकृति-लिङ्गप्रदर्शकप्रत्यक्षादिप्रमाणपञ्चकव्यतिरेकेण षष्ठस्य प्रमाणस्यानुपपत्तेरिति। समुच्चय एव, न प्राकृता निवर्त्यन्ते उपहोमैः॥ १॥

## चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २॥

यदुक्तं “शरमय”मित्यत्रैव, उपहोमैः प्राकृतनारिष्ठहोमानां निवृत्ति-र्भविष्यतीति—तत्रोत्तरम्—चोदनालिङ्गसंयोगे—चोदनाशब्देन प्रकृतिरेवाभि-धीयते—प्रकृतिलिङ्गसंयोगे सतीत्यर्थः। तत्र बर्हिः कुशविकारः प्रतीयेत—कुशनिवृत्तिस्स्यादित्यर्थः। कुतो हेतोः? प्रकृतिसन्निधानात्—प्रकृतिलिङ्ग-बर्हिश्शब्दस्य कुशमयस्थले सन्निधानात्—कुशमयस्थले प्रकृतिलिङ्गसंयोगात्

१ धनुश्चिह्नान्तर्गतो भागः पुनरुक्त इव।

प्राकृतदर्भनिवृत्तिर्युक्ता, एककार्यकरत्वात् । इहतु नारिष्ठहोमयोः भिन्नकार्यत्वे एककार्योपनिपाताभावात् प्रत्यक्षदर्शनादि प्रकृतिलिङ्गान्यतमस्याप्यभावात् समुच्चय एव ॥ २ ॥

प्रयोजनन्त्वनुष्ठानरूपम् — असमुच्चय समुच्चय भेदेन स्पष्टम् ॥ १ ॥

एवं वा —

## चोदना लिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात ॥ (सि)

क्वचिच्छ्रूयते सोमारौद्र चरौ 'शरमयं बर्हिर्भवति" इति ।

तत्र सन्दिह्यते— किं प्राकृतबर्हिस्समुच्चयः ? उत शरैर्दर्भनिवृत्तिः ? इति ॥

चोदकश्रुत्यवगतयोः कुशशरयोः प्रमाणावगतत्वाद् समुच्चयः — इत्युत्सूत्रं पूर्वपक्षं ... ... ... ... ... ... ... ... प्रकृतिलिङ्गबर्हिश्शब्दसंयोगात् निवृत्तिरेव दर्भाणाम् ॥

सूत्रन्तु पूर्वमेव व्याख्यातमिति न पुनर्व्याख्यायते ॥

प्रयोजनन्त्वनुष्ठानरूपम् — प्राग्वद्वर्णनीयम् ॥ २ ॥

एवं वा :—

## चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ (सि)

वाजपेये श्रूयते— "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति, दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति" इति । श्रूयते च प्रकृतौ— "उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति" इति । तच्च प्रकृतिवद्वाक्येन वाजपेये प्राप्तम् ॥

तत्र संदिह्यते — किं घोषो — घोषसामान्यात् प्राकृतोपावर्तध्वमिति मन्त्रस्य निवर्तकः रथ दुन्दुभी तु द्रव्यसामान्यात् प्राकृतस्तोत्रोपाकरण साधन दर्भनिवर्तकौ ? अथवा रथ दुन्दुभिघोषौ मन्त्रदर्भयोरक्रमेण निवर्तकौ ? इति ।

चोदनालिङ्गसंयोगे—प्रकृतिलिङ्गसंयोगे सति वैकृतविशेषेण तद्विकारः—प्राकृतविकार एव प्रतीयेत। उपाकरोतीति प्रकृतिलिङ्गोपाकरणशब्दसंयोगात् प्राकृतोपाकरणस्य विकारत्वं प्रतीयेत, न तु तत्पुरुषसमासाश्रयणेन रथो द्रव्यस्य दर्भस्य निवर्तको घोषो मन्त्रस्येति। किन्तु रथविशिष्टो घोषो रथघोष इति विग्रहात् उभयमुभयस्य निवर्तकम्। कुतो हेतोः? प्रकृतिसन्निधानात्—प्रकृतिलिङ्गोपाकरणशब्दसन्निधानात्—प्रकृतिलिङ्गोपाकरणशब्दस्य विकृतौ श्रुतत्वादित्यर्थः। अतो रथविशिष्टदुन्दुभिविशिष्टघोषाभ्यां प्राकृतमुपाकरणं विक्रियत इति ॥ २ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—अन्वेषणीयम् ॥ ३ ॥

## [1] सर्वस्य ग्रहाम्नानमधिकं स्यात् प्रकृतिवत् ॥ ३ ॥ (सि)

विकृतिविशेषेषु श्रूयते—बृहस्पतिसवे, "बार्हस्पत्यं गृह्णाती"ति। महाव्रते "शुक्रं गृह्णाती"ति। विषुवति "अर्कं गृह्णाती"ति। अश्वमेधे "सौवर्णराजताभ्यां महिमानौ ग्रहौ गृह्णाती"ति। प्रकृतितश्चैन्द्रवायवादयो ग्रहाश्चोदकतः प्राप्ताः ... ... ... ... ॥

तत्र संदिह्यते—किं बार्हस्पत्यादिभिर्वैकृतैः प्रत्यक्षपठितैः ग्रहविशेषैः प्राकृतैन्द्रवायवादयो ग्रहा निवर्त्यन्ते प्रकृतिलिङ्गसंयोगात्? उत ग्रहविशिष्टग्रहणान्तरं विधीयते, ततस्समुच्चयः? इति ॥

तत्र सर्वस्य—बृहस्पतिसवान्तर्विकृतिविशेषस्य ... ... दिग्रहविशेष समाम्नानं चोदकप्राप्तेभ्यो ग्रहेभ्योऽधिकं स्यात्। न तु प्राकृतैन्द्रवायवग्रहनिवृत्तिः किन्तु समुच्चयः। तत्र दृष्टान्तः—प्रकृतिवदिति। यथा प्रकृतौ ज्योतिष्टोमे ऐन्द्रवायवादि ... ... ... ... ... ... ... ... ... समुच्चय एव ... ... ... ग्रहबाधः इहापि तथा। तदयमर्थः—यदि ग्रहानुवादेन ग्रहणविधिस्स्यात्, तत एककार्यनिपातात् देवतासंबन्धादिविधिशङ्कावतरति, इहतु ग्रहणान्तराणि विधीयन्त इति न ग्रहशब्देन प्राकृतग्रहप्रत्यभिज्ञानम्। किन्तु बार्हस्पत्यग्रहणं गृह्णातीत्येवार्थः। तस्मात प्राकृतास्समुच्चीयन्त इति। ३ ॥

---

१ सर्वस्य तु ग्रहाम्नान ... क. ख.

## अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥

चकारो हेत्वन्तरसमुच्चयार्थः। विकृतौ [1]"सप्तदश वै ग्रहा गृह्यन्ते द्वये प्राजापत्यास्सोमग्रहाश्च सुराग्रहाश्चे"ति प्राकृतानामैन्द्रवायवादीनां विकृतिपठितैरधिकैर्ग्रहैरेकवाक्यत्वात्समुच्चीयमा[2]नत्वादित्यर्थः। अतः इतोऽन्यत्रापि विकृतिविशेषे यत्र यत्र ग्रहाम्नानं प्रकृतिलिङ्गसंयोगि, तत्र सर्वत्र प्राकृतसमुच्चय एव ।४।

## लिङ्गदर्शनाच्च ॥ ५ ॥

चकारस्समुच्चयार्थः। "[3]रण्यो वा एष यज्ञक्रतुर्यद्वाजपेयः अतीव ह्यग्निष्टोमं क्रामत्यत्युक्थ्यमतिषोडशिनं नातिरात्रमाप्नोती"ति विस्तीर्णपर्याय विरण्यशब्देन च प्राकृतग्रहसमुच्चय एव प्रतीयते। ग्रहबाधे हि विस्तीर्णत्वानुपपत्तिरेव स्यात्। कुतः? प्राकृता ग्रहा वैकृतैर्ग्रहैः एकलोलीभवन्ति ॥ ५ ॥

प्रयोजनन्त्वनुष्ठानरूपम् — बाध-समुच्चयाभ्यां प्रद्योतितम् ॥ ४ ॥

(प्राजापत्यसमुच्चयाधिकरणम् —५)

## प्राजापत्येषु चाम्नानात् ॥ ६ ॥ (सि)

वाजपेये श्रूयते — "सप्तदश प्राजापत्यान् पशूनालभत" इति। सन्ति च प्रकृतौ सुत्याकालीना आग्नेयादयः [4]क्रतुपशवः ॥

तत्र संदिह्यते — किं प्राजापत्याः पशवः क्रतुपशुव्यावर्तकाः? उत समुच्चीयन्ते प्राजापत्यैः? इति ॥

तत्र प्राजापत्येषु च सप्तदशपशुष्वाम्नातेषु, प्राकृतसौत्याग्नेयादिसमुच्चय एव ... ... ... ... ... ... ... ... प्रकृतिलिङ्गेन सवनीयादिबाधः। कुतः? आम्नानात् — वाजपेये हि — यज्ञाग्निष्टोमो नोक्थ्यः। न षोडशी नाति-

---

१ सप्तदशैते इति पाठान्तरम्।

२ ... नत्वादिति — इत्येतावतालम्। अर्थशब्द आम्रेडितः।

३ विरण्य इति साधु पाठः।

४ त इह चोदकेन प्राप्ताः — इति पूरणीयम्।

रात्रः । अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति । पशुभिरिति ब्रूयात् । यथाग्नेयं पशुमालभते । अग्निष्टोममेव तेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनम् । सारस्वत्यातिरात्रम् । इति क्रतुपशूनामपि समुच्चयाम्नानात् प्राकृत सवनीयाग्नेयादीनां समुच्चय एव स्यात् । न व्यावृत्तिरिति । यदि प्राकृतालम्भा(नुवादेन) प्राजापत्यपशुविधानं स्यात्, तदा प्राकृतनिवृत्तिः स्यात् । इदन्तु कर्मान्तरम् । अतो न प्रकृतिलिङ्गसंयोगः । ततस्समुच्चय इति ॥ ६ ॥

प्रयोजनन्त्वनुष्ठानरूपम् — विशदतरम् ॥ ५ ॥

( आमनाधिकरणम् — ६ )

## [1]आमने च लिङ्गदर्शनात् ॥ ७ ॥ (सि)

वैश्वदेव्यां सांग्रहण्यां श्रूयते — " आमनमस्यामनस्य देवा ये सजाता ... ... इति तिस्र आहुतीर्जुहोति " इति। सन्ति च प्रकृतौ त्रित्वविशिष्टा अनुयाजाः । ते चोदकतस्सांग्रहण्यां प्राप्ताः ॥

तत्र संदिह्यते — किमामनहोमाः त्रित्वसंख्याविशिष्टाः त्रिसंख्याविशिष्टानुयाजानां निवर्तकाः? उत प्रकृतिलिङ्गस्यासाधारण्याभावात् भिन्नकार्यत्वात् अनिवृत्तिरनुयाजानां समुच्चय एव? इति ॥

चकारः प्राक्तनाधिकरणसिद्धान्तातिदेशार्थः । आमने — आमनहोमे च प्राकृता अनुयाजास्समुच्चीयेरन् । कुतो हेतोः? लिङ्गदर्शनात् — " [2]बहिरात्मं वै प्रयाजानुयाजाः आत्मा देवता, यत्प्रयाजानुयाजानां पुरस्ताद्वोपरिष्टाद्वा जुहुयात् बहिरात्मं सजातान् संदधीत । अथ यन्मध्यतो जुहोति मध्यत एव सजातानात्मन् धत्ते " इति अनुयाजसद्भावलिङ्गदर्शनाच्च । त्रित्वस्य परिधिमुष्टिसाधारणस्य अनुयाजासाधारण्याभावात् प्रकृतिलिङ्गत्वमेवापास्तम् । तस्मादनुयाजानामनिवृत्तिरिति ॥ ७ ॥

प्रयोजनन्त्वनुष्ठानरूपम् — अनुयाजव्यावृत्त्यव्यावृत्तिभ्यां प्रस्फुटमिति न विलिख्यते ॥ ६ ॥

---

१ आमने लिङ्गदर्शनात् क. ख.   २ अत्र आकरे पाठोऽन्यथा ।

( उपगात्रधिकरणम् –७ )

[1]उपगातृषु शरवत् स्यात्प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥ ( पू )

महाव्रते श्रूयते – "पत्नय उपगायन्ति, पिच्छोलिकाभिरुपगायन्ति, काण्डवीणाभिरुपगायन्ति" इति। अस्ति च प्रकृतौ 'ऋत्विज उपगायन्ति' इति। तच्चेह महाव्रते चोदकतः प्राप्तम् ॥

तत्र संदिह्यते–किं गायन्त्यः पत्न्यः ऋत्विजां प्राकृतानां निवर्तिकाः? उत पत्नीभिः ऋत्विजस्समुच्चीयन्ते? इति ॥

तत्रापि किमिह श्रूयमाणं ... ... ... ... ... ... ... ... प्राकृतकार्यत्वात् प्राकृतनिवृत्तिः? उत वादित्रोपगानम्, तत एककार्यानिपातात् उपगानान्तरमेव ... ... इति न प्राकृतनिवृत्तिरिति ॥

तत्र उपगातृषु – स्त्रीजनेषु श्रूयमाणेषु महाव्रते चोदकप्राप्तोपगात्रृत्विजः व्यावृत्तिरेव स्यात शरवत्–यथा शरमयं इति श्रुतश्शरो विकृतिविशेषे दर्भनिवर्तकः, तद्वदेवोपगानरूपप्रकृतिलिङ्गसंयोगात प्राकृतगानकर्तृणां निवृत्तिः। ततो गानसजातीयं गानमिति फलितम्। अतो निवृत्तिरेव प्रकृतितः प्राप्तानाम् ॥ ८ ॥

आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥ ( सि )

तुना प्रागुक्तपक्षो व्यावर्त्यते। समुच्चय एव स्यान्महाव्रते। पत्नीकर्तृकमुपगानं प्राकृतगानादधिकं स्यात्। कुतो हेतोः? आनर्थक्यात्–गानानुवादेन कर्तृविशेषपत्नीविधाने चोदकानर्थक्यादित्यर्थः। तदयमभिसंधिः–"पिच्छोलिकाभिः काण्डवीणाभिश्चोपगायन्ती"ति वादित्रोपगानविधानेन प्राकृतशारीरगानानिपातात, गानान्तरमेव सपरिकरं विधीयत इति न प्राकृतानां चोदकप्राप्तानां गातॄणामृत्विजां निवृत्तिः ॥ ९ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – निवृत्त्यनिवृत्त्यभिधानेन स्पष्टम् ॥ ७ ॥

---

१ उपगेषु ... ... क. ख.

(संस्काराधिकरणम्–८)

## संस्कारे चान्यसंयोगात् ॥ १० ॥ (सि

अञ्जनाभ्यञ्जनाख्ये एकादशपञ्चाशद्रात्रे श्रूयते "गौग्गुलवेन प्रातस्सवने आञ्जते, अभिवाञ्जते, पौतुद्रवेण मध्यन्दिने सवने, सौगन्धिकेन तृतीयसवने" इति। अस्ति च प्रकृतौ ज्योतिष्टोमे "नवनीतेनाभ्यंक्ते" इति नवनीताभ्यञ्जनम्। तदिह प्रकृतिवच्छब्दप्राप्तम् ॥

तत्र संदिह्यते– किं गौग्गुलवाभ्यञ्जनं प्राकृतदीक्षाकालीननवनीताभ्यञ्जननिवर्तकम्? उत तिष्ठन्तं पशुं प्रयजति इतिवत् अन्यकालमपि प्राकृतकार्यनिर्वाहकम्, अथवा अप्राकृतकार्यनिपाति अपूर्वाञ्जनम्, ततश्च प्राकृतानिवर्तकमिति ॥

तत्र संस्कारे –यजमानसंस्कारके अञ्जनाभ्यञ्जने च प्राकृतनवनीताभ्यञ्जनानिवृत्तिरेव स्यात्। कुतो हेतोः? अन्यसंयोगात्–गौग्गुलवाभ्यञ्जनस्यान्यकालेन–सुत्याकालेन संयोगात्। तदयमर्थः– सुत्याकालीनत्वात् गौग्गुलवाभ्यञ्जनस्य, अप्राकृतकार्यकरत्वात् नाभ्यञ्जनमात्रप्रधानकेवल ... ... प्राकृतनवनीताभ्यञ्जननिवृत्तिरिति ॥ १० ॥

## [1]प्रयाजवदिति चेदन्यार्थत्वात् ॥ ११ ॥

यदुक्तं प्रयाजवदन्यकालसंबध्यमानं प्राकृतकार्यनिर्वाहकं गौग्गुलवादीति, तत्परिहारार्थमिदं सूत्रम् ॥

प्रयाजवदिति चेत् इत्यनुवादः। तन्नोपपद्यते। कुतो हेतोः? अन्यार्थत्वात्– अन्यप्रयोजनार्थत्वात्। विरूक्षीकरणार्थत्वात् गौग्गुलवाभ्यञ्जनस्येत्यर्थः। प्रयाजस्थले कालान्तरसंबद्धा अपि प्रयाजाः प्राकृतमेव कार्यमभिनिर्वर्तयन्ति। गौग्गुलवाभ्यञ्जनस्य तु स्नेहनार्थत्वाभावेन रूक्षतानिवृत्त्यर्थत्वात् नैककार्यकरत्वम्। अतो नानाप्रयोजनवत्त्वात् न प्राकृतनवनीताभ्यञ्जननिवृत्तिरिति ॥ ११ ॥

---

१ प्रयाजवदिति चेत्। नार्थान्यत्वात् इति सूत्रद्वयम् क. ख.

प्रयोजनन्त्वनुष्ठानरूपम् – निवृत्त्यनिवृत्तिभ्यां व्याख्यातम् ॥ ८ ॥

(आच्छादनाधिकरणम्–९)

## आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारस्स्यात् ॥ १२ ॥ (पू)

महाव्रते श्रूयते–"तार्प्यं यजमानः परिधत्ते, दर्भमयं पत्नी" इति। प्रकृतौ तु, 'अहतं वासः परिधत्ते' इत्याम्नातम् ॥

तत्र संदिह्यते–किं तार्प्यं दर्भमयं च वासः प्राकृताहतवाससो बाधकम्? उताबाधकम्? ... ... ... ... समुच्चयः? इति ॥

तत्र तुः एवकारार्थे। 'तार्प्यं यजमानः परिधत्ते' इति श्रूयमाणे आच्छादने प्राकृतस्य अहतवाससः विकारः स्यात्–निवृत्तिः स्यादित्यर्थः। कुतो हेतोः? ऐकार्थ्यात् अहतवासस्तार्प्यदर्भमयानां कौपीनाच्छादनार्थस्यार्थस्य एकत्वात्। एकार्थोपनिपाते च प्रकृतिलिङ्गपरिदधाति साधकत्वात् प्राकृताहतवाससो निवृत्तिरेव, नतु समुच्चय इति ॥ १२ ॥

## अधिकं वान्यार्थत्वात् ॥ १३ ॥ (सि)

वाकारः पक्षव्यावर्तकः। अनिवृत्तिः प्राकृतानाम्, अधिकं समुच्चय एव स्यात्। कुतः? अन्यार्थत्वात्–उपरिवासःकार्यार्थत्वात्। उपरिवासःपरिधानेऽपि परिधत्त इति भवति–कंबलं परिधत्त इति। परितो धत्ते–परिधत्ते इत्यन्यत्रप्रसिद्ध्यापि उपरिवाससि परिदधातिरुपपद्यते। ततोऽप्राकृतकार्यनिपातात् समुच्चय एव [1]स्यात्। वासांसि वाराही चोपानहावुपमुञ्चते" "कृष्णविषाणया वासांसि विस्रंसयति" इति वासोबहुत्वदर्शनाच्च तार्प्यादिना प्राकृताहतवाससोऽनिवृत्तिः ॥ १३ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – विशदतरं निवृत्त्यनिवृत्तिभ्याम् ॥ ९ ॥

---

१ समुच्चयं च दर्शयति-इति सूत्रमेकमधिकं क. ख. तद्व्याख्यारूपश्चायमुपरितनग्रन्थः। अत्रतु तत्सूत्रं न दृश्यते।

( सामाधिकरणम् –१० )

## सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १४ ॥ (सि)

महाव्रते श्रूयते – श्लोकेन पुरस्तात्सदसस्स्तुवते अनुश्लोकेन पश्चाद्, क्रौञ्चेन चात्वालमभिवीक्षमाणाः" इति। सन्ति च प्रकृतावाज्यादिस्तोत्र-साधनानि सामानि। तानि प्रकृतिवच्छब्देनात्र प्राप्तानि ॥

तत्र संदिह्यते – किं प्राकृतानि स्तुतिसाधनानि सामानि निवर्त्यन्ते – श्लोकादिभिः सामभिः? उत न निवर्त्यन्ते, समुच्चयः? इति ॥

तत्र सामसु – श्लोकानुश्लोकक्रौञ्चादि सामसु श्रूयमाणेषु, प्राकृतानां स्तुतिसाधनानां साम्नां अविकारः – ... ... ... ... ... ... ... ... ... ... ... ... ... .... .... ... काण्वं भवति, वसिष्ठस्य जनित्रे भवतः, इत्यादिष्विव प्रकृतिलिङ्गसंयोगेन प्राकृतनिवृत्तिः, किन्तु देशसामविशिष्टा स्तुतिरपूर्वा विधीयत इति। ... ... ... प्रकृतिलिङ्गसंयोगशङ्का। कुतो हेतोः? अर्थान्तर-श्रुतेः – सदसः पुरस्तात् स्तुवत इति पुरोदेशादि श्लोकादिसामविशिष्टार्थान्तर-श्रवणात्, न प्राकृतदेशाद्यनुवादेन सामविशेषविधानम्। यतः प्रकृतिलिङ्ग-संयोगेन प्राकृतनिवृत्तिः स्यात् ॥ १४ ॥

## अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारस्स्यात् ॥ १५ ॥

कौत्सादिवदिति यदुक्तं पूर्वपक्षिणा तत्परिहारार्थमिदं सूत्रम्। तुः पूर्वपक्षव्यावृत्त्यर्थः। अर्थे – अर्थान्तरे अश्रूयमाणे – अप्राकृतकार्ये अश्रूयमाणे सति, कौत्सादिस्थले प्राकृतस्य स्तुत्यादिसाधनस्य सामनिकरस्य विकारः निवृत्तिः स्यात्। कुतो हेतोः? शेषत्वात् – कौत्सादिसाम्नां प्राकृतस्तुतिरूपकार्य-शेषत्वात्। अयं भावः – कौत्सादिस्थले देशादिविशेषार्थान्तराश्रवणात् प्राकृत-कार्यस्यानुवर्तनात् युक्तं तत्र कार्यैक्यात् तत्साधनसामनिवृत्तिः। इह तु प्राकृतानां दे ... ... ... ... ... ... ... ... ... कार्यत्वात् उभयोरपि निवेशेऽविरोधः – इत्यर्थः ॥ १५ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – प्राकृतनिवृत्त्यनिवृत्तिभ्यां स्पष्टमेव ॥ १० ॥

( कौत्सकाण्वाद्यधिकरणम् – ११ )

एवं वा –

## अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारस्स्यात् ॥ ( सि )

क्वचिद्विकृतिविशेषे श्रूयते – " कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भार्गवयशसीये भवतः, क्रौश्चानि भवन्ति " इति । प्रकृतितश्च चोदकात् नानासामानि प्राप्तानि ॥

तत्र संदिह्यते – किं प्राकृतानां साम्नां कौत्सादिसामभिरनिवृत्तिरप्रकृतिलिङ्गसंयोगात् ? उत प्राकृतानां निवृत्तिः ? इति ।

तत्र साममात्रस्य अप्रकृतिलिङ्गत्वात्, प्रकृतिलिङ्गस्य च स्तुवत इत्यस्यासाधारणस्यानुपलंभात् प्राकृतानां चोदकप्राप्तानां कौत्सादिभिरनिवृत्तिरेव स्यात् – इति उत्सूत्रे पूर्वपक्षे ;

प्राकृतकार्य एव शेषभूतस्य सामान्यस्य श्रवणात् शेषभूतसामभेदमात्रतया शेषिभेदाभावात् कार्यैक्यान्निवृत्तिः । सूत्रन्तु पूर्वं ... ... व्याख्येयमिति न पुन ... ... ... ... ॥

प्रयोजनन्त्वनुष्ठानरूपम् – अनिवृत्तिनिवृत्तिभ्यां स्पष्टम् ॥ ११ ॥

( सर्वानिवृत्त्यधिकरणम् – १२ )

## सर्वेषामविशेषात् ॥ १६ ॥ ( पू )

विकृतिविशेषे श्रुतैः कौत्सादिभिः प्राकृतानां निवृत्तिरित्येतावत् समधिगतम् ॥

तत्र संदिह्यते – किं सर्वं सर्वस्य निवर्तकम् ? उत एकसंख्याकं वैकृतं साम ... ... ... ... ह्येकस्य साम्नो निवर्तकं, द्वे द्वयोः, बहूनि बहूनाम् ? इति ॥

तत्र कौत्सादिसामानि सर्वेषाम् – प्राकृतानां निवर्तकानि । नत्वेकमेकस्येत्यादिव्यवस्था । कुतो हेतोः ? अविशेषात् – एकमेकस्य निवर्तकम्,

द्वे द्वयोः, बहूनि बहूनाम्—इति विशेषाश्रवणात्। एकं सर्वेषां निवर्तकं, द्वयं बहूनामित्यनियमेन प्राकृतनिवर्तकत्वमिति ॥ १६ ॥

## एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् ॥ १७ ॥ (सि)

वाकारः अनियमपक्षव्यावर्तकः। एकस्य प्राकृतस्य साम्न एकं वैकृतं साम निवर्तकम्। एकस्येति द्वयोः बहूनाञ्चोपलक्षणम्। कुतो हेतोः? श्रुतिसामर्थ्यात्—कौत्सादिषु एकवचनादिश्रुतेः एकादिनिवर्तनमात्रे समर्थत्वात्। एकनिवर्तने चरितार्थं कौत्सं न द्वे निवर्तयितुं उत्सहते। एवं बहूनाम्। चः समुच्चयार्थे। एकादीनामेकादिनिवृत्तिपरत्वे सति प्रकृतेः—प्रकृतितः प्राप्तानां [1]निवारितेतरेषां साम्नां अविकारात्—अनिवर्तनात्—चोदकानुग्रहादित्यर्थः। एकमेकस्येति व्यवस्थिते चोदकतस्तदितरसामानि विकृतौ निवेशं लभन्त इत्यर्थः ॥ १७ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—विशदतरम् ॥ १२ ॥

(स्तोमविवृद्धयधिकरणम्—१३)

## स्तोमविवृद्धौ त्वधिकं स्या[2]दवृद्धौ द्रव्यविकारस्स्यादितरस्याश्रुतित्वात् ॥ १८ ॥ (सि)

सन्ति विवृद्धस्तोमकाः क्रतवः—"एकविंशेनातिरात्रेण प्रजाकामं याजयेत्," त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन ब्रह्मवर्चसकाम"मिति। तथा अविवृद्धस्तोमकाः—

[3]"पुनस्सोमस्य यज्ञस्य तथापचितिरन्त्यतः।
(पुनस्तोमस्य सवनं) मध्यमं द्वादशं स्मृतम् ॥
[4]कार्या नव दश स्तोमा अमितस्सवने उभे।" इति।

---

१ निवारितेतराणां—इति साधु।
२ ... ... दविवृद्धौ च ... ... क. ख.।
३ पुनस्स्तोमस्य—इति साधु।　४ कार्यौ नवदशस्तोमौ—इति च।

तत्र किं विवृद्धस्तोमकेषु अविवृद्धस्तोमकेषु च क्रतुषु प्राकृतसाम्नां निवृत्तिः? उत विवृद्धस्तोमकेष्वनिवृत्तिः, अविवृद्धस्तोमकेषु निवृत्तिः? इति संदेहे सति–

तुः एवकारार्थे। स्तोमविवृद्धौ श्रूयमाणायां ... ... स्थले अधिकं स्यात्– ... ... ... मा ... ... संख्याधिक्यं स्यात्। अविवृद्धौ हीनस्तोम-पुनस्तोमादिस्थले– द्रव्यविकारस्स्यात्– द्रव्यस्य प्राकृतस्य सा ... ... ... ... ... विकारस्स्यात् ... ... ... ... ... ... ... ... न तत्र प्राकृतहानिस्स्यादित्यर्थः। कुतो हेतोः? इतरस्य–निवर्त्यांशस्य अश्रुतित्वात्– अश्रौतत्वात्। अकर्मविवृद्धिस्थले प्राकृतसामनिवृत्तिस्स्यात् संख्या ... ... ... ... ... ... णात् न तत्र प्राकृतसामापनयः। ... ... तु प्राकृतसंख्याह्रासात्, यावता प्राकृतेन निवर्तितेन हान्युपपत्तिस्स्यात् तावत्प्राकृतं निवर्तयति। प्रकृतिहान्युदाहरणन्तु वृद्ध्युपयोगित्वेन कृतम्, न पुनरिदमधिकरणशरीरमिति तन्त्ररत्नोक्तिः। सामोत्पत्तिपरत्वे तु सामान्तरविधानम्। ततश्च कतमसादिस्थल इव प्राकृतं निवर्ततेत्येतादृशं पूर्वपक्ष्युक्तं सपरिकरचोद्केन आर्षया बाधया निरस्तमिति वेदितव्यम् ॥ १८ ॥

प्रयोजनन्त्वनुष्ठानरूपम्– विशदतरम् ॥ १३ ॥

(आवापेऽनुद्वापाधिकरणम्–१४)

**पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ १९ ॥ (सि)**

विवृद्धस्तोमकेषु क्रतुविशेषेषु प्राकृतसाम समुच्चय इति समधिगतम्।

तत्रायमपरस्संदेहः– किं यत्र कुत्रचित् स्तुतौ? पवमाने वा? आवापः। यतः कुतश्चित् स्तुतेः? पवमानाद्वा? उद्वापः इति।

तत्र आवापोद्वापौ– वृद्धिह्रासौ पवमान एव स्याताम्। न तु यत्र कुत्रचित् सामनिकरे। कुतो हेतोः? तस्मिन्– पवमान एव "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्च, अत्र ह्येवावपन्ति, अत एवोद्वपन्ति" इति

पवमानेष्वेवावापोद्वापदर्शनात्, पवमानेष्वेवावापोद्वापौ व्यवस्थिताविति, न यत्रकुत्रचिदावापः यतः कुतश्चिदुद्वापः इति ॥ १९ ॥

अधिकरणान्तरन्यायप्रदर्शने च कर्तव्ये :-

## वचनानि त्वपूर्वत्वात् ॥ २० ॥

इति सूत्रेण न्यायाभावे इमानि वचनान्येव ॥ २० ॥

प्रयोजनन्त्वनुष्ठानरूपम् - अनियमनियमाभ्यां प्रद्योतितम् ॥ १४ ॥

( विधिशब्दाभिधानाधिकरणम् - १५ )

## विधिशब्दस्य मन्त्रत्वे भावस्स्यात्तेन चोदना ॥ २१ ॥ (सि)

दर्शपूर्णमासयोः श्रूयते - "आग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति" इति। सन्ति चाग्निपर्यायाः - अग्निः, शुचिः, पावकः, धूमकेतुः, कृशानुः, वैश्वानरः, शाण्डिल्यः इति ॥

तत्र संदेहः - किमाग्नेयादि[1] निगदेषु येन केनचिदग्न्यभिधानेनाग्नेरभिधानं कर्तव्यम्? उत विधिगतेनाग्निपदेनैव निगदेष्वभिधानं कर्तव्यम्? इति ॥

तत्र विधिशब्दस्य — आग्नेयपुरोडाशविधिवाक्यगताग्निशब्दस्यैव, मन्त्रत्वे - मन्त्रत्वेनाभिमते आवाहनादिनिगदे, भावस्स्यात् - सद्भावस्स्यात्। नत्वग्निपर्यायेष्वन्यतमस्य यस्य कस्यचिच्छब्दस्य निगदेष्वनुप्रवेशः। यतः केवलं ज्वालारूपार्थप्राधान्यात् यत्किंचिदभिधानं स्यात्। तत्र हेतुमाह - यत इत्यध्याहर्तव्यम्। यतः अग्निशब्देनैव हविषश्चोदना - यस्मात् तेनैवाग्निशब्देन हविषस्संबन्धो दृष्टः, तस्माद्विधिगताग्निपदेनैवाग्न्यभिधानम्। तस्य शब्दस्यैव हविस्संबन्धात् न शुच्यादिशब्दैरग्न्यभिधानं कर्तव्यम्। एवञ्च सति, अग्निशब्देनैवाग्न्यभिधाने कृते नियमापूर्वं फलिष्यति। शब्देन हविषस्संबन्धे शब्ददेवतात्वप्रसक्तिर्यद्यप्यनभिमतैषाम्; तथापि परमते शब्ददेवतापक्षेऽपि अग्निपदेनैवाभि-

१ निगमेषु—इति भाष्यपाठः।

धानमिति सुतरां शुच्यादिपदानामप्रसङ्ग इत्येतदर्थम्, नतु तदभिमत-मित्युपन्यस्तम् ॥ २१ ॥

*

प्रयोजनन्त्वनुष्ठानरूपम् – विशदतरम् ॥ १५ ॥

( उत्तरतन्त्राधिकरणम् – १६ )

## तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २२ ॥ (सि)

"सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इति श्रुतम्। तत्र सूर्यस्याभि-धानानि–सूर्यः, आदित्यः, भास्करः, सविता, अर्यमा इत्येवमादीनि ॥

तत्रापि प्राग्वदेव कोट्युपपादनम् ॥

उत्तरस्यां ततौ – विकृतौ च सौर्यादिकायाम्, तथा प्राग्वत्–विधिगतदेवतावाचकपदेनैव निगदेष्वभिधानं स्यात्, नतु येन केनचित् पर्यायशब्देन। कुतो हेतोः? तत्प्रकृतित्वात् –सूर्यचरोर्दर्शपूर्णमासपठिताग्नेय-प्रकृतिकत्वादित्यर्थः। प्रकृतिवद्विकृतिः कर्तव्येत्येवंरूपश्चोदकः, प्रकृतिवदेव विधिगतमेव देवताशब्दं ब्रूयात्, न पर्यायान्तरम् इति प्रापयति, नान्यथा। तस्माद्विधिगतशब्दाभिधानस्य श्रौतत्वेन आर्थिकत्वाभावात् विकृतावपि तथैवा-भिधानं स्यात् ॥ २२ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – प्राग्वत् स्पष्टम् ॥ १६ ॥

( गुणाभिधानाधिकरणम् – १७ )

## प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २३ ॥ (सि)

आधाने श्रूयते–"अग्नये पवमानायाष्टाकपालं निर्वपेत् अग्नये पावकाय अग्नये शुचये" इति।

---

* अत्र – शेषाणाञ्चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते – इति सूत्रमेकमधिकं तद्व्याख्या च. क. ख.

तत्र संदिह्यते—किं प्राकृतमग्नेरभिधानं सगुणं कर्तव्यम्? उत निर्गुणमग्नेरभिधानम्? इति।

तत्र प्राकृतस्य – दार्शपूर्णमासिकस्य ... ... ... ... ... ... ... गुणश्रुतौ – पावक पवमानादिगुणश्रुतौ सत्याम्, पवमानहविषि सगुणेन – गुणसहितेन ... ... ... ... पावकादिगुणसहितेन अग्निशब्देन निगदेष्वभिधानं स्यात्। सगुणस्याग्नेर्विकृतौ श्रूयमाणत्वात्, केवलाग्निपदेनाभिधाने ... ... ... ... ... त्वात् सगुणाग्न्यभिधानस्य चावश्यकत्वात् निगदेषु पावकादिगुणवचनं कर्तव्य मिति ॥ २३ ॥

## अविकारो वार्थशब्दानपायात् स्याद्द्रव्यवत् ॥ २४ ॥

वाकार स्सगुणाभिधान पक्षव्यावर्तकः। अविकार एव स्यात्। विकारो गुणाभिधानम्, तद्राहित्यमेव स्यात्। कुतो हेतोः? अर्थशब्दानपायात् – पवमानहविष्यपि अर्थशब्दस्य अग्न्यर्थशब्दस्य अनपायात्। अयं भावः—पावमानीषु प्राकृताग्निदेवता वाचकाग्निशब्दस्यानुवर्तनात्, प्रकृतौ च केवलदेवताया एवाभिधानात्, अत्रापि प्रकृतिवत् केवलाभिधानमेव स्यात्, न तु सगुणस्य। सगुणस्याग्नेर्विधिवाक्यान्वयेऽपि निगदेष्वावाहनादिषु निर्गुणाभिधानमेव स्यात्। तत्र दृष्टान्तः – द्रव्यवदिति। यथा – "सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत भूतिकामः" इति विधिवाक्यगतोऽपि वशागुणो निगदेषु नाभिधीयते, तद्वदत्रापि चोदनायां सगुणाग्न्यभिधानेऽपि केवलस्याभिधाने प्रकृत्यनुग्रहात् केवलाभिधानम् ॥ २४ ॥

## [1]सगुणाभिधानं वाऽऽरंभसमवायात् ॥ २५ ॥

वाकारो निर्गुणाभिधानपक्षव्यावर्तकः। सगुणस्यैवाग्नेरभिधानं पावमानेषु स्यात्। कुतो हेतोः? आरंभसमवायात् – आरभ्यते – विधीयते कर्मानेन इत्यारंभो विधिवाक्यम्। तत्र सगुणाग्निसमवायात् अव्यवहिताधिकरणे विधिगतदेवताशब्दाभिधानमात्रस्य सिद्धान्तितत्वात्, अत्रापि सगुणाग्ने-

१ इदं सूत्रं क. ख. नास्ति।

विधिसमन्वयात्, गुणपरित्यागे च गुणाभिधानस्यानर्थक्यात् गुणाभिधानमेव स्यात् ॥ २५ ॥

*

## द्रव्येष्वारंभगामित्वादर्थे विकारसामर्थ्यात् ॥ २६ ॥

यदुक्तं "सा वा एषा सर्वदेवत्या यदजा ... "इत्यादिषु छागशब्दाभिधानं ... ... ... ... तत्परिहारार्थमिदं सूत्रम्। युक्तं द्रव्येष्वजादिषु [२]आरंभभागित्वात्—आरंभे ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... छागस्य सगुण ... ... सगुणरूपेण भागित्वात्, हविर्भागित्वात्, छागशब्देनैवाभिधानं ... ... ... ... ... ... ... ... ... .... ... कुतो हेतोः? अर्थे विकारसामर्थ्यात् ... ... ... ... ... ... ... ... ... ... ... विकारे—विकारस्थले वायव्यादिके छागशब्दस्य हविर्वाचनसमर्थत्वात्। अयमर्थः—छागस्य छागत्वरूपेणैव प्रकृतौ ... ... ... ... ... न भावात् देवतावैषम्य ... ...। तत्रानिगदेषु पशुगुणानामनभिधानमेव स्यात्। इह तु देवतायां गुणाभिधानात् सगुणाग्न्यभिधानमावाहनादिनिगदेषु स्यात्। एवं सति प्रकृतिवदनुष्ठानात् चोदकोऽनुग्रहीष्यते ॥ २६ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—विशदमेव ॥ १७ ॥

(बुधन्वदधिकरणम्—१८)

## बुधन्वान्पवमानवद्विशेषनिर्देशात् ॥ २७ ॥ (पू)

आधानाम्नात पवमानेष्टौ, आज्यभागौ प्रकृत्य श्रूयते—"बुधन्वानाग्नेयः कार्यः, पावकवान् सौम्यः" इति।

---

* "तथाऽऽरंभासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वा दवचने च गुणशास्त्रमनर्थकं स्यात्" इत्येकं सूत्रं अत्र तद्व्याख्या च. क. ख. अत्र तु पूर्वसूत्रेणायं भागः गतार्थः।

२ आरंभगामित्वात्—इत्येव सूत्रस्थं पदम्।

तत्र संदिह्यते – अत्र किं पूर्ववत् बुधन्वत्पावकवद्गुणाभिधानं कर्तव्यम्? ततश्च देवतानिर्देशोऽयम्; उत निर्गुणमेवाभिधातव्यम्? ततश्च मन्त्रस्यैव बुधन्वदादिगुणवत्ता – इति।

तत्र बुधन्वान् – बुधन्वदादिगुणः पवमानवत् – पवमान पावक-शुच्यादिगुणवत् अग्नेरेव स्यात्, न मन्त्रस्य। कुतो हेतोः? विशेषनिर्देशात् – अग्निरेवाग्नेयः, सोम एव सौम्यः, इति कृत्वा "बुधन्वानाग्नेयः कार्यः" इत्यादिना देवतागुणस्यैव निर्देशात् देवतागुण एवायम्। अतो देवतागुणत्वात् पवमानादिगुणाभिधानवत् बुधन्वद्गुणाग्न्यभिधान निगदेषु स्यादित्यर्थः। अप्राप्त-बुधन्वदादिगुणविधाने च वाक्यमर्थवत्स्यात्॥ २७॥

## मन्त्रविशेषनिर्देशान्न देवताविकारस्स्यात्॥ २८॥ (सि)

तुना सगुणाग्न्यभिधानपक्षो व्यावर्त्यते। देवताविकारो न स्यात् बुधन्वदादिः। कुतो हेतोः? "बुधन्वानाग्नेयः कार्यः" इत्यत्र आग्नेयः अग्नि-देवताको यागो बुधन्वान् बुधन्वद्गुणकमन्त्रवान् कर्तव्य इति यागे मन्त्रविशेष-विधानात्, देवतागुणविधाने च सापेक्षत्वेनाग्नेय इत्यादिदेवतातद्धितव्यापत्तेः मन्त्रगुण एव बुधन्वदादिः। अतो न निगदेषु बुधन्वदग्न्यभिधानम्। एवञ्च सति चोदकानुग्रहस्स्यादित्यर्थः॥ २८॥

प्रयोजनन्त्वनुष्ठानरूपं निगदव्याख्यातम्॥ १८॥

(विधिनिगमभेदाधिकरणम् – १९)

## विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदस्स्यात् ॥ २९॥ (पू)

ज्योतिष्टोमे श्रूयते – "मैत्रावरुणीं वशामालभेत" इति। विकल्पेन च श्रुतम् – गौरनूबन्ध्योऽग्नीषोमीयः" इति। सन्ति च गोपर्यायाः उस्रा उस्रिया अही मही अदितिः इडा इति। तथा पशौ श्रूयते "पृषदाज्येन वनस्पतिं यजति" इति। सन्ति च वनस्पतिपर्यायाः – वृक्षः पादपो द्रुमो ... ... रिति॥

तत्र संदेहः—किं विधिनिगमभेदात् येन केनचित् गोपर्यायेण, वनस्पतिपर्यायेण चाभिधानं कर्तव्यम्? उत यथा ... ... ... ... के ... ... ... ॥

तत्र प्रकृतौ ... ... ... ... यदग्नीषोमीयं पशुमालभेत "छागस्य वपाया मेदसोऽनुब्रूहि" इति विधिनिगमयोः पशुवाचक शब्दभेदात् प्रकृतौ, दर्शपूर्णमासयोः "अग्निं स्विष्टकृतं यजति" इति स्विष्टकृद्गुणकाभिधानात्, स्विष्टकृति च—"पिप्रीहि देवाँ उशतो यविष्ठ" इति निगदे तदनभिधानेन तत्रापि विधिनिगमभेदात्, आनुबन्ध्ये वनस्पतौ च तत्प्रकृतित्वात् तयोः अग्नीषोमीय दार्शपूर्णमासिकयोः—अग्नीषोमीय दार्शपूर्णमासिकस्विष्टकृतोः आनुबंध्य वनस्पति प्रकृतित्वात् विकृतौ आनुबन्ध्ये वनस्पतौ च विधिनिगमयोर्भेदस्स्यात्। विधिनिगमभेदे च विधिगत शब्दापायात् विधिगतशब्दापाये च येन केन चित् गवाभिधानेन वनस्पत्यभिधानेन चाविरोधात् प्रकृतिवन्न्यायानुग्रहाच्च येन केनचिदभिधानं स्यात् ॥ २९ ॥

## यथोक्तं वा विप्रतिपत्ते[1]रचोदना ॥ ३० ॥ (सि)

वाकार एवकारार्थे। यथोक्तमेव—निगमोक्तमेव देवतावचनं स्यात्, न यत्किञ्चित्पर्यायेण गोर्वनस्पतेश्चाभिधानम्। कुतो हेतोः? विप्रतिपत्तेः—विप्रतिपन्नार्थस्य प्रकृतावार्थिकत्वात् विधिनिगमभेदस्य, आर्थिकस्य च विकृतावचोदनात् विकृतौ च विधिनिगमभेदेऽपि "उस्रायै मेदसोऽनुब्रूहि" इति निगदाम्नानात्, वनस्पतियागे च देवताम्नानात्सामर्थ्यात्, नैगमिकेनैव शब्देनाभिधानं स्यात्, न येन केनचिद्गवाभिधानेन वनस्पत्यभिधानेन वा ॥ ३० ॥

प्रयोजनन्त्वनुष्ठानरूपम्—अनतिगहनम् ॥ १९ ॥

(स्विष्टकृदधिकरणम्—२०)

## स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ ३१ ॥ (पू)

वारुणैककपालावभृथेष्टौ श्रूयते—"अग्नीवरुणौ स्विष्टकृतौ यजति" इति ॥

---

१ यथोक्तं वा विप्रतिपत्तेर्न चोदना. क. ख.

तत्र संदिह्यते—किं स्विष्टकृद्याग 'अग्नीवरुणौ यज" इति केवलं स्विष्टकृच्छब्दरहितमेवाभिधानं कर्तव्यम्? ततश्च केवलरूढ एव प्रकृतौ स्विष्टकृच्छब्दः ; अथवा 'अग्नीवरुणौ स्विष्टकृतौ यज' इति स्विष्टकृद्वचनं कर्तव्यम्? ... ... ... ... ... ... ... ... स्विष्टकृत् इति प्राकृतः स्विष्टकृच्छब्दः वारुणेष्टौ स्विष्टकृद्यागे, अग्नीवरुणरूप देवतान्यत्वे वारुणस्विष्टकृन्निगदो निवर्तते। कुतः? तच्छब्दत्वात् - प्रकृतौ स्विष्टकृच्छब्दस्य तच्छब्दत्वात्— अग्निशब्दत्वात्— अग्निवाचकत्वात्। न च स्विष्टं कृतवानिति यौगिकव्युत्पत्त्या विकृतावपि निवेशः, यागकाले स्विष्टकृत्त्वाभावात्। अतः केवलरूढेर्लब्धात्मकत्वात् स्विष्टकृच्छब्देन प्रकृतौ सौविष्टकृताग्निरेवाभिधीयते। ततश्च विकृतौ वारुणेष्ट्यां आग्निवारुणे स्विष्टकृद्यागे 'अग्नीवरुणौ यज' इत्येव वचनं कर्तव्यं नान्यथा ॥ ३१ ॥

## संयोगो वार्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३२ ॥ (सि)

वाकारः पक्षव्यावर्तकः। संयोगः—स्विष्टकृच्छब्दसंयोगः स्यादेवाग्निवारुणस्विष्टकृष्टकृद्यागे। कुतो हेतोः? अर्थापत्तेः—अग्नीवरुणयोः प्राकृतस्विष्टकृत्स्थानापत्तेरित्यर्थः। स्थानापत्त्या च प्रमाणेनाग्नीवरुणयोः स्विष्टकृच्छब्दानुबन्धस्स्यात्। कुतो हेतोः? अभिधानस्य—स्विष्टकृदभिधानस्य, स्विष्टं कृतवान् पूर्वगतयागेष्विति पूर्वतनस्विष्टकरणरूप कर्मजत्वात् यौगिक एव स्विष्टकृच्छब्दः। ततो विकृत्यन्तरेषु स्विष्टकृदेवतान्यत्वे सत्यपि स्विष्टकृच्छब्दानुप्रयोगस्स्यादित्यर्थः ॥ ३२ ॥

प्रयोजनन्त्वनुष्ठानरूपम्— विशदतरमिति न विलिख्यते ॥ २० ॥

(सगुणस्य गुणलोपाधिकरणम्—२१)

## सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात ॥ ३३ ॥ (पू)

अग्नीषोमीये पशौ, अग्नीषोमीयं पशुपुरोडाशं विधाय छिद्रापिधान्यां स्विष्टकृत इति गुणलोपः श्रूयते "अग्निं यजती"ति ॥

तत्र संदिह्यते – किं स्विष्टकृद्यागमात्रे केवलाग्निश्रवणात् तावन्मात्रे स्विष्टकृद्रूपगुणलोपस्स्यात्, इतरेषु उज्जित्यादिनिगदेषु गुणाभिधानमग्नेस्स्यात्? उत सर्वत्र निगदेषु स्विष्टकृद्रूपगुणलोपः? इति ॥

सगुणस्य – प्राकृतस्विष्टकृ … … … … … गुणलोपे श्रूयमाणे सति स्विष्टकृद्यागमात्र एव गुणलोपस्स्यात्। इतरेषु तूज्जित्यादि निगमेषु यावदुक्तम् – … … … … … … … … … … स्विष्टकृद्गुणाभिधानं कृतं, तत्तथैव स्यात् यत्र गुणार्थोपश्रूयते तावन्मात्रश्रवणात् लोपस्स्यात्। इतरेषु प्रकृतिवदेव स्यात्। तत्र स्विष्टकृदादेव … … … … ॥ ३३ ॥

## सर्वस्य वैककर्म्यात् ॥ ३४ ॥ (सि)

वाकारः पूर्वपक्षव्यावर्तकः। सर्वस्य वा–सर्वस्यैव स्विष्टकृत्प……क्तस्य निगद … … … रुद्रस्य स्विष्टकृद्गुणलोपस्स्यात्, न यागमात्रस्य। कुतो हेतोः? ऐककर्म्यात्–प्रयोगवचनापरपर्यायस्य "अग्निं यजती"त्यग्नियागस्य ऐककर्म्यात् एककर्मत्वात्। स्विष्टकृन्निगद … … तस्विष्टकृद्यागत्वेनैककर्म्यात्। एककर्मत्वे च अवयवशो निवारयितुमशक्यत्वात् सर्वत्र गुणलोपस्स्यादित्यर्थः ॥

प्रयोजनन्त्वनुष्ठानरूपम् – … … … … ॥ २१ ॥

(स्विष्टकृदावापिकाधिकरणम् – २२)

## स्विष्टकृदावापिकोऽनुयाजेषु स्यात्प्रयोजनवदङ्गानामर्थ संयोगात् ॥ ३५ ॥ (सि)

दर्शपूर्णमासयोः स्विष्टकृदनुयाजेषु श्रूयते – "अग्निं स्विष्टकृतं यजति" इति ॥

तत्र किमानुयाजिकः स्विष्टकृत् अनुयाजानामारादुपकारकः? उत प्रधानाग्निसंस्कारक श्रुति … … … … … … … ।

अनुयाजे श्रूयमाणः स्विष्टकृत् आवापिकस्स्यात्। आज्यभागस्विष्टकृदन्तरालं आवापस्थानम्। तत्र भवः–आवापिकः। आवापस्थानीय … …

धानाग्निसंस्कारक एव, नत्वारादुपकारक इत्यर्थः । कुतो हेतोः प्रयोजनवदङ्गानां फलवदाग्नेयाद्यङ्गानाम् –अथवा– देवतास्मरणरूपफलवदङ्गानामीदृशानां अर्थसंयोगात् – प्रयोजनसंयोगात् । तदयमर्थः– आरादुपकारकेभ्यस्सामवायिकानि दृष्टार्थानि गरीयांसीति ... ... त् अनुयाजारादुपकारकत्वे अदृष्टार्थत्वात्, प्रधानाग्निसंस्कारकत्वे च प्रधानाग्निदेवतासंस्कारस्मरणरूपदृष्टार्थत्वात्, आवापिक एवायं स्यात्, संस्कारकर्मैव स्यात् । अत्र चानुयाजिकस्विष्टकृत्कथनं अग्निदेवतायाः अत्रापि सद्भावात् स एवाग्निरित्यसमञ्जसमिदमधिकरणमिति वार्तिकोक्तमनुसंधेयम् ॥ ३५ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – यक्षानुरूपो बलिरिति न्यायेन तदनुरूपमुन्नेयम् ॥ २२ ॥

(याज्यानुवाक्ययोस्संस्कारकर्मत्वाधिकरणम् –२३)

## अन्वाहेति च शस्त्रवत्कर्म स्याच्चो[1]दकान्तरात् ॥ ३६ ॥(पू)

दर्शपूर्णमासयोश्श्रुतम्–"पुरोऽनुवाक्यामन्वाह" "याज्यामन्वाह" इति ॥

किमिदं पुरोऽनुवाक्यायाज्यावचनं प्रधानकर्म ? उत संस्कारकर्म ? इति संदेहे सति :—

अन्वाहेति श्रूयमाणे ब्रूमः, कर्म – प्रधानकर्म स्यादनुवचनम् । कुतो हेतोः ? चोदकान्तरात् ... ... ... ... .... ... यातीति चोदकापेक्षया चोदकान्तरं – विध्यन्तरमित्यर्थः । तत्र दृष्टान्तः – यथा स्तुतिं स्तौति – शस्त्रं शंसति– इति स्तुति शस्त्रं प्रधानकर्म, एवमिदमपि प्रधानकर्मेति । न तु संस्कारकर्मत्वमित्यर्थः ॥ ३६ ॥

## [2]संस्कारो वा चोदितशब्दस्य वचनार्थत्वात् ॥ ३७ ॥ (सि)

---

१ ... ... चोदनान्तरात् क. ख. ।

२ ... ... चोदितस्य शब्दवचनार्थत्वात् क.

... ... शब्दस्य ..., ... ख.

वाकारः प्रधानकर्मत्वपक्षव्यावर्तकः । संस्कारः – पुरोऽनुवाक्यायाज्या संस्कार एव स्यात् । कुतो हेतोः ? चोदितशब्दस्य–द्रव्यदेवते हि कर्मणो रूपम्" इति चोदितदेवतावाचकयाज्या पुरोऽनुवाक्या शब्दस्य वचनार्थत्वात्– देवतावचनार्थत्वात् – देवतास्मृतिरूपदृष्टार्थत्वात् । प्रधानकर्मत्वे ह्यदृष्टं कल्पयितव्यं स्यात् । तस्माद्देवतास्मरणरूपदृष्टफलकत्वेन देवतासंस्कारार्थत्वात् न प्रधानकर्मत्वं पुरोऽनुवाक्यायाज्ययोः ॥ ३७ ॥

[1]अवाच्यत्वान्नेति चेत् ॥ ३८ ॥

देवतास्मरण ... ... ... ... ... ... ... ... याज्या पुरोऽनुवाक्ययोः अवाच्यत्वात् प्रधानकर्मत्वमिति यदुक्तं तन्न इति पक्षानुवादः ॥ ३८ ॥

स्याद्गुणार्थत्वात् ॥ ३९ ॥

"तिष्ठन् याज्यामन्वाह" 'आसीनः पुरोऽनुवाक्याम्" इति स्थानासनगुणार्थत्वात् याज्यापुरोऽनुवाक्यापुनर्वचनं स्यात् । अतो न पुनरभिधानवैयर्थ्यम् । तस्मात्संस्कारकर्मेति ॥ ३९ ॥

प्रयोजनन्त्वनुष्ठानरूपम् – अनतिगहनम् ॥ २३ ॥

( मनोताधिकरणम् –२४ )

मनोतायान्तु वचनादविकारस्स्यात् ॥ ४० ॥ (सि)

... ... ... ... काण्डे श्रूयते–'वायव्यं श्वेतमालभेत भूतिकामः' इति । प्रकृतावग्नीषोमीये पशावाम्नातो मनोतामन्त्रः, 'त्वं ह्यग्ने ! प्रथमो मनोता' इति । स इह चोदकप्राप्तः ॥

तत्र संदिह्यते– किं वायव्ये पशाविह मनोतामन्त्र ऊहितव्यः ? ततः प्रकृतौ समवेताभिधायी मनोतामन्त्रः ? उत अनूह एवास्य, ततः प्रकृतौ मनोतामन्त्रस्साविज्ञायिकः ? इति ॥

---

१ इदं सूत्रं क. ख. नास्ति. उत्तरसूत्रावतरणग्रन्थे भाष्ये निर्दिश्यते क. ग्रन्थे परम् ।

तत्र मनोतायां वायव्ये चोदकप्राप्तायाम्, देवतान्तरत्वेऽपि अविकारस्स्यात्, न तूहः । कुतः? वचनात्—"यद्यप्यन्यदेवत्यामालभेत आग्नेय्येव मनोता कार्या" इति भिन्नदेवताकेऽपि मनोताया अविकारानुप्रवेशवचनात् ॥

इदञ्चाधिकरणं प्रकृतौ आग्नेयस्यैव ... ... ... ... ... ... ... ... ... या चिन्तितम् । तत्पक्षे मनोता समवेताभिधायिनीति विकृत्यन्तरे मनोताया ऊह एव स्यात् । इतरस्मिन् बाध ऊहस्येति ॥ ४० ॥

प्रयोजनञ्च प्रदर्शित ... ... ... ... ते ॥ २४ ॥

( कण्वरथन्तराधिकरणम्—२५ )

## पृष्ठार्थेऽन्यद्रथन्तरात् तद्योनिपूर्वत्वात् स्यादृचां प्रविभक्तत्वात् ॥ ४१ ॥ (पू)

वैश्यस्तोमे श्रूयते 'कण्वरथन्तरं भवति' इति ॥

तत्र संदिह्यते—किं कण्वरथन्तरं बृहद्रथन्तरयोरनियमेन गेयम्? उत रथन्तरयोनौ? अथवा स्वयोनौ? इति ॥

तत्र पृष्ठार्थे—पृष्ठकार्यार्थे, प्राकृतात् रथन्तरा ... ... ... ... ... ... ... ... पञ्चमी । ततोऽन्यत् कण्वरथन्तरं विहितम् । तत् प्रकृतिवच्छब्देन तद्योनि पूर्वत्वात्—रथन्तरयोनि पूर्वकत्वात् रथन्तरयोनावेव स्यात्, न तु बृहद्रथन्तरयोन्योरनियमेन । कुतो हेतोः? ऋचां विशये सति—योनिऋक्संदेहे सति, रथन्तरशब्देन रथन्तरयोनेरेव प्रति .... ... ... ... ... ... ... ... ... ... योनावेव स्यात् कण्वरथन्तरगानम् ॥ ४१ ॥

## स्वयोनौ वा सर्वाख्यत्वात् ॥ ४२ ॥ (सि)

वाकारः पक्षव्यावर्तकः । ... ... ... ... ... ... साम स्वयोनावेव गेयम्, न रथन्तरयोनौ । कुतः? सर्वाख्यत्वात्—प्रस्तावोद्गीथप्रतिहारोप-

द्रवनिधन ... ... ... ... ... ... ... ... सर्वविशेषण विशिष्टस्यैव सामविशेषस्य कण्वरथन्तराख्यत्वात् स्वयोनिरपि विशेषणमिति स्वयोनावेव गेयम् ॥ ४२ ॥

## यूपवदिति चेत् ॥ ४३ ॥

यथा तक्षणादिसंस्कारविशिष्टे दारुविशेषे यूपशब्दः, तद्वत् प्रस्तावादि-सकलसूत्रशिक्षण ... ... ... ... ... ष्टे सामविशेषे रथन्तरशब्दः प्रयुज्यत इति पश्यसि चेत् इति पक्षानुवादार्थं सूत्रम्। नायं स्वयोनि गानपक्ष ... षणा... ... वादः। किन्तु यूपदृष्टान्त दूषणाय ॥ ४३ ॥

## न कर्मसंयोगात् ॥ ४४ ॥

यूपवदिति यदुक्तम्, तत् नोपपद्यते। कुतो हेतोः? कर्मसंयोगात्- ... ... ... ... ... ... ... ... वदीत् ... ... र्मनिष्ठसंस्कारसंयोगात्। न लोके केवलदारुणि दारुशब्दप्रयोगः ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... .... ... ... ... ... ... ... तस्माद्विषम उपन्यासः ॥

प्रयोजनन्त्वनुष्ठानरूपम्- विशदप्रायम् ॥ २५ ॥

(कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम्-२६)

## [1]कार्यत्वाचूत्तरयोर्यथाप्रकृति ॥ ४५ ॥ (१)

कण्वरथन्तरं स्वयोनावेव गेयमित्येतावत् समधिगतम् ॥

तस्य तृचे गेयत्वात् किं बृहद्रथन्तर ... ... ... ... ... ... तृचोत्तरयोर-नियमेन गानम्? उत स्वयोन्युत्तरयोः? इति संदेहे सति-

तुः एवकारार्थे। कण्वरथन्तरस्य गानं उत्तरयोः- बृहदुत्तरयोः रथन्तरोत्तरयोर्वा ... ... स्यात्। कुतः? एवञ्चेत् - यथाप्रकृति - यथा प्रकृतौ कृतं रथन्तरमुत्तरयोः तद्वत्कृतं भवति। अयं भावः- कण्वरथन्तरगान-

१ कार्यत्वादुत्तरयोर्यथा प्रकृति. क. ख.

स्योत्तरयोः ... ... आवश्यकत्वात् प्रकृत्युत्तरागाने च चोदकानुग्रहादिति। किञ्च स्वयोन्युत्तरयोरपि कण्वरथन्तरगाने ... ... नि विशिष्टस्य कण्वरथन्तरस्य ऋगन्त ... ... ... ... कर्तुमशक्यत्वात् अवश्यं स्वयोनिस्त्याज्या। तत्रोभयथापि स्वयोनिपरित्यागाविशेषात् स्वयोनिपरित्यागदोष ... ... ... ... ... ... ... ... वाद्यं भवति ॥ ४५ ॥

समान देवताके वा तृचस्यार्था वि[1]भक्तत्वात् ॥ ४६ ॥ (सि)

वाकारः प्रागुक्तोत्तरा ... ... ... ... ... ... ... ... ... ... स्वयोन्युत्तरयोरेव कण्वरथन्तरगानं स्यात् समानदेवताके—तुल्यदेवताके, समानच्छन्दस्के च शि ... ... त्वात्। तृचस्य च कण्वरथन्तरस्वयोन्युत्तरयोर्गाने च अर्थाविभक्तत्वात्—एकदेवताकत्वैकच्छन्दस्त्वरूपार्थस्य अविभा ... ... ... ... ... ... ... स्वयोन्युत्तरयोरेव स्यात्, नान्यथा। प्राकृतोत्तरागाने तु देवतासाम्यस्य च्छन्दस्साम्यस्य चाभावात् न प्रकृतिवत् ... ... ... ... ... ॥ ४६ ॥

प्रयोजनन्त्वनुष्ठानरूपम्—कोटिभ्यां प्रद्योतितम् ॥ २६ ॥

(अग्निष्टुतिस्तुतशस्त्रयोरविकाराधिकरणम्—२७)

ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वा दविकारस्स्यात् ॥ ४७ ॥ (सि)

द्वितीयाध्यायोक्तस्तुतशस्त्राधिकरणप्रयोजनकथनपरमिदं सूत्रम्। स्तुत- .... ... ... ... ... ... ... ...*

---

१ समानदेवते वा तृचस्याविभागात्। क. ख.

* एतावति मातृका परिसमाप्ता। एतदधिकरणानन्तरं एकमेवाधिकरणं दशमाध्याय चतुर्थपादे शिष्यते। तच्च दशसूत्रात्मकम्। तेन सह उपरितनो भागो मातृकायां लुप्तः। पादावसानस्य आसन्नतरत्वात्, शास्त्रस्यास्थानेऽवसानस्यानुचितत्वाच्च, अग्रिमाधिकरणसूत्राणि परं (मातृकायामविद्यमानान्यपि) विलिख्य ग्रन्थपूरणं कृतमस्माभिः।

—संपादकः

( चातुर्मास्येषु अनूयाजीयदेवताप्रकाशनार्थं प्राकृतावाहनमन्त्रस्याविकारेणैव प्रयोगाधिकरणम् )

उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणात् ॥ ४८ ॥ (पू)

न वा परार्थत्वाद्यज्ञपतिवत् ॥ ४९ ॥

स्याद्वाऽऽवाहनस्य तादर्थ्यात् ॥ ५० ॥

नवा संस्कारशब्दत्वात् ॥ ५१ ॥

स्याद्वा द्रव्याभिधानात् ॥ ५२ ॥

दध्नस्तु गुणभूतत्वा दाज्यपा निगमास्स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात ॥ ५३ ॥ (सि)

दधि वा स्यात्प्रधान माज्ये प्रथमान्त्य संयोगात् ॥ ५४ ॥

अपिवाऽऽज्य प्रधानत्वाद्गुणार्थे व्यपदेशो भक्त्या संस्कार शब्दः स्यात् ॥ ५५ ॥

अपिवाऽऽख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥ ५६ ॥

नवा स्याद् गुणशास्त्रार्थत्वात् ॥ ५७ ॥

इति जैमिनिसूत्रवृत्तौ **फलवत्याम्** दशमस्याध्यायस्य चतुर्थः पादः

॥ श्रीकृष्णार्पणमस्तु ॥



अनुबन्धः–I.

श्रीः

जैमिनिसूत्रवृत्तौ फलवत्यां व्याख्यातानां सूत्राणां

# अकाराद्यनुक्रमणिका

—— :O: ——

| क्रमाङ्कः | सूत्राणामादिः | अध्याये | पादे | अधिकरणे | पुटे |
|---|---|---|---|---|---|
| 1 | अकर्मक | ६ | १ | १२ | १५ |
| 2 | अकर्मचो | ,, | ८ | २ | ११० |
| 3 | अकर्मणि | ,, | ३ | ,, | ३२ |
| 4 | अकर्मत्वा | ,, | १ | १२ | १५ |
| 5 | अकर्मवा | १० | १ | १४ | ३०७ |
| 6 | ,, | ,, | २ | २ | ३११ |
| 7 | ,, | ,, | ,, | ,, | ३१४ |
| 8 | अकार्यत्वा | ६ | ७ | ३ | ९३ |
| 9 | ,, | ,, | ,, | ,, | ,, |
| 10 | ,, | ९ | २ | ,, | २३८ |
| 11 | ,, | १० | ३ | १ | ३४३ |
| 12 | अक्रिया वा | ,, | १ | १४ | ३०७ |
| 13 | अग्निधर्मः | ९ | १ | ९ | २२२ |
| 14 | अग्नेर्त्रास्या | ,, | ,, | ,, | ,, |
| 15 | अग्न्याधेय | १० | ३ | ५ | ३५२ |
| 16 | अङ्गविधि | ६ | ४ | १० | ५४ |
| 17 | अङ्गहीन | ,, | १ | ९ | १४ |
| 18 | अतत्संस्का | ,, | ४ | १४ | ५८ |
| 19 | ,, | ,, | ,, | ,, | ,, |
| 20 | अतद्गुण | ६ | ७ | ८ | ९७ |

| क्रमाङ्कः | सूत्राणामादिः | अध्याये | पादे | अधिकरणे | पुटे |
|---|---|---|---|---|---|
| 73 | अन्येन वै | ६ | ४ | ५ | ५० |
| 74 | अन्येनापी | ,, | ६ | १ | ८० |
| 75 | अन्त्रयश्चा | ९ | २ | १७ | २४२ |
| 76 | अन्त्रयो वा | ,, | ,, | ,, | ,, |
| 77 | अन्वाहेति | १० | ४ | २३ | ३९५ |
| 78 | अपनयो | ६ | ५ | १ | ६० |
| 79 | ,, | ,, | ,, | २ | ६२ |
| 80 | ,, | ९ | ४ | ११ | २७९ |
| 81 | अपराधे | ६ | २ | ४ | २२ |
| 82 | अपरिमा | ,, | ७ | १० | ९९ |
| 83 | अपरिमि | ,, | ,, | ,, | ,, |
| 84 | अपिचोत्प | ,, | २ | १ | १८ |
| 85 | अपि तु क | ७ | ,, | ,, | १३५ |
| 86 | अपि त्वन्या | ९ | ३ | ४ | २५१ |
| 87 | अपि त्वव | १० | ,, | १७ | ३६८ |
| 88 | अपि त्वस | ९ | ४ | १ | २६६ |
| 89 | अपि वा क | १० | ३ | १३ | ३६२ |
| 90 | ,, | ,, | ,, | ,, | ,, |
| 91 | अपि वा का | ६ | २ | २ | १९ |
| 92 | अपि वा क्र | ,, | ६ | १ | ८१ |
| 93 | ,, | ,, | ७ | १३ | १०४ |
| 94 | ,, | ,, | ,, | ,, | ,, |
| 95 | अपि वा क्र | ,, | ८ | १ | १०७ |
| 96 | अपि वाऽऽख्या | १० | ४ | २८ | ४०० |
| 97 | अपि वाऽऽज्य | ,, | ,, | ,, | ,, |
| 98 | अपि वा त | ६ | ७ | १३ | १०३ |

| क्रमाङ्कः | सूत्राणामादिः | अध्याये | पादे | अधिकरणे | पुटे |
|---|---|---|---|---|---|
| 125 | अपि वा शे | १० | १ | ८ | २९२ |
| 126 | ,, | ,, | ,, | ११ | २९७ |
| 127 | अपि वा श्रु | ,, | ३ | २१ | ३७३ |
| 128 | अपि वा स | ७ | ,, | २ | १४० |
| 129 | अपि वोत्प | ६ | २ | १ | १८ |
| 130 | अपूर्वन्वा | ,, | ५ | ,, | ६० |
| 131 | ,, | ७ | १ | ,, | १२६ |
| 132 | ,, | ९ | ,, | ७ | २१७ |
| 133 | ,, | ,, | ,, | ,, | ,, |
| 134 | ,, | ,, | ४ | १ | २६७ |
| 135 | अपूर्वत्य | १० | १ | १२ | ३०४ |
| 136 | अपूर्वे च | ८ | ३ | ६ | १९४ |
| 137 | अपूर्वे त्व | ९ | ३ | ६ | २५४ |
| 138 | अपूर्वे वा | ७ | ,, | १ | १३९ |
| 139 | अप्रकृते | ६ | ५ | ५ | ६४ |
| 140 | अप्रगाणा | ९ | १ | २३ | २३६ |
| 141 | अप्राकृते | ६ | ५ | ५ | ६४ |
| 142 | ,, | ९ | २ | २३ | २४३ |
| 143 | अभावाच्चे | ६ | ५ | ५ | ६५ |
| 144 | अभिधानो | ७ | ३ | १४ | १५२ |
| 145 | अभ्यासस्य | ६ | ५ | १ | ६० |
| 146 | अभ्यासस्सा | ९ | १ | ११ | २२५ |
| 147 | अभ्यासात्तु | १० | ३ | ४ | ३५० |
| 148 | अभ्यासेने | ९ | २ | ४ | २३८ |
| 149 | अभ्यासेऽपि | ,, | ४ | १ | २६४ |
| 150 | अभ्यासो वा | ६ | २ | ७ | २५ |

| क्रमाङ्कः | सूत्राणामादिः | अध्याये | पादे | अधिकरणे | पुटे |
|---|---|---|---|---|---|
| 254 | आर्थपत्या | ८ | १ | ६ | २१३ |
| 255 | ,, | ,, | ,, | ,, | ,, |
| 256 | आर्षेयव | ६ | ८ | ९ | ११७ |
| 257 | आवृत्त्याम | १० | ३ | ४ | ३५० |
| 258 | आवेश्येर | ९ | २ | २० | २४२ |
| 259 | आश्रितत्वा | ,, | ,, | ३ | २३८ |
| | इ | | | | |
| 260 | इज्यायांत | ६ | ६ | ६ | ९१ |
| 261 | ,, | ,, | ,, | ,, | ,, |
| 262 | इतरस्या | ८ | ३ | ,, | १९२ |
| 263 | ,, | ,, | ,, | ,, | ,, |
| 264 | इतरेषु | ६ | ८ | ५ | ११४ |
| 265 | ,, | ,, | ,, | ,, | ,, |
| 266 | इतिकर्त | ७ | ४ | १ | १५३ |
| 267 | इष्टित्वेन | ६ | ८ | ,, | १०६ |
| 268 | ,, | ,, | ,, | ,, | ,, |
| 269 | ,, | ,, | ,, | ,, | १०८ |
| 270 | ,, | ,, | ,, | ,, | ,, |
| 271 | इष्टिपूर्व | ,, | ,, | ,, | १०६ |
| 272 | ,, | ,, | ,, | ,, | ,, |
| 273 | इष्टिरार | १० | १ | ४ | २८८ |
| 274 | इष्टिषु द | ,, | ,, | ,, | १६४ |
| 275 | इष्ट्यावृत्तौ | ९ | ,, | १२ | २२५ |
| 276 | ,, | ,, | ,, | १३ | २२६ |
| | ई | | | | |
| 277 | ईहार्थाश्चा | १० | २ | २० | ३३० |

| क्रमाङ्कः | सूत्राणामादिः | अध्याये | पादे | अधिकरणे | पुटे |
|---|---|---|---|---|---|
| 327 | एकत्वेऽपि | ९ | ३ | १२ | २६१ |
| 328 | एकधेत्ये | ,, | ,, | ११ | २५७ |
| 329 | एकधोप | १० | २ | ४ | ३१५ |
| 330 | ,, | ,, | ,, | ,, | ,, |
| 331 | एकवाक्य | ,, | १ | ६ | २९१ |
| 332 | एकस्तु स | ९ | ३ | १२ | २६१ |
| 333 | एकस्मिन्वा | १० | १ | १३ | ३०५ |
| 334 | एकस्य वा | ,, | ४ | १२ | ३८५ |
| 335 | एका पञ्चे | ,, | ३ | १५ | ३६५ |
| 336 | एकां पञ्चे | १० | ३ | १५ | ३६५ |
| 337 | एकार्थत्वा | ९ | २ | २२ | २४३ |
| 338 | ,, | १० | ,, | ७ | ३१७ |
| 339 | एकार्थस | ९ | ३ | १२ | २६१ |
| 340 | एकाहाद्वा | ८ | ,, | ५ | १८९ |
| 341 | एकेतुक | १० | ,, | १८ | ३६९ |
| 342 | एकेतुश्रु | ,, | ,, | १६ | ३६६ |
| 343 | एकैकश | ,, | २ | १३ | ३२५ |
| | ऐ | | | | |
| 344 | ऐकसङ्ख्य | ८ | ३ | ६ | १९१ |
| 345 | ,, | ,, | ,, | ,, | ,, |
| 346 | ऐकादशि | ,, | १ | ७ | १६५ |
| 347 | ऐकार्थ्याच्च | ९ | २ | ६ | २३९ |
| 348 | ,, | ,, | ,, | ७ | ,, |
| 349 | ऐकार्थ्याद्वा | ८ | १ | १६ | १७१ |
| 350 | ऐकार्थ्ये ना | ७ | २ | १ | १३७ |

| क्रमाङ्कः | सूत्राणामादिः | अध्याये | पादे | अधिकरणे | पुटे |
|---|---|---|---|---|---|
| 425 | गुणत्वेन | ८ | १ | १७ | १७३ |
| 426 | ,, | ,, | ,, | १८ | ,, |
| 427 | गुणमुख्य | १० | १ | १२ | ३०३ |
| 428 | गुणलोपे | ,, | २ | २७ | ३३४ |
| 429 | गुणविधि | ७ | ३ | ६ | १४४ |
| 430 | ,, | १० | १ | ११ | २९८ |
| 431 | गुणशब्द | ९ | ,, | १५ | २२८ |
| 432 | ,, | ,, | ,, | १६ | २२९ |
| 433 | गुणस्य तु | ६ | ,, | ५ | ९ |
| 434 | गुणाद्वा द्र | ८ | ३ | ६ | १९१ |
| 435 | गुणानाञ्च | ६ | ४ | ४ | ४८ |
| 436 | गुणार्थत्वा | ,, | १ | ७ | १२ |
| 437 | गुणार्थित्वा | ,, | ,, | ,, | ,, |
| 438 | गुणार्थेने | ,, | ,, | १२ | १६ |
| 439 | गुणावेश | ८ | ३ | ६ | १९५ |
| 440 | गुणेऽपीति | १० | १ | ११ | २९८ |
| 441 | गुणो वा श्र | ९ | ४ | १२ | २८० |
| 442 | गुणो वा स्था | १० | १ | ११ | २९६ |
| 443 | गोत्रवच्च | ८ | ३ | ६ | १९२ |
| 444 | ग्रहणार्थं | ९ | २ | ३ | २३८ |
| 445 | ग्रहाणाञ्च | १० | १ | ११ | २९९ |
| 446 | ग्रहाणांदे | ,, | ४ | २७ | ३९९ |
| 447 | ग्रहाभावे | ,, | १ | ११ | २९९ |
| | च | | | | |
| 448 | चरुर्हवि | १० | १ | १२ | ३०१ |
| 449 | चरुशब्दा | ८ | ,, | १९ | १७४ |

